**********************************************
*nepal-german manuscript preservation project
*
*  national archives, kathamandu, nepal
*
* aagamakalpalataa
*
* ms no.: 1-223 "saivatantra 32
*
* reel no.: a 145/3
*
* no of folios: 355
*
* size : 13 x 34
*
* newari script up to fl. 166a, thereafter devanaagarii
*****************************************************

ॐ नमः श्रीगणेशाये नमः।

श्रीत्रिपुरसुन्दर्यै नमः।

ॐ यत् पादपङ्कजयुगं हृदिशं निवेश्य विश्वं सृजत्य विकलं

खलुपद्मजन्मा।

विष्णुश्च पालयति संहरते महेशस्तं देवमादिपुरुषं सततं नतोस्मि॥ १-

१॥

न त्वा गिरीशं गिरिजां गणेशं वाणीमुनिन्द्रैः स्तुतपादपल्लवम्।

विलोक्यशास्त्रं यदुनाथशर्मणा वितन्यतेज्या गमकस्य वल्ली॥ १-२॥

तथा॥

प्रपञ्चसारसिद्धान्तं शारदातिलकं [लकं] तथा।

सपरिस्करमालोक्य तथा सारसमुच्चय॥ १-३॥

यत्नेन दीपिकां दत्वा तथा च लघुदीपिकाम्।

तथा पूजा प्रदीपं च पुरश्चरणचन्द्रिकाम्॥ १-४॥

मन्त्रदर्पणसिद्धान्तं मन्त्रदेव प्रकाशिकाम्।

मन्त्रनेत्रं च मन्त्रार्थं श्रीरामार्चनचन्द्रिकाम्॥ १-५॥

मन्त्रमुक्तावलीरत्नावली ज्ञानार्णवादिकम्।

तत्रं सनत्कुमारस्य नारदी च चतुःशतीम्॥ १-६॥

पूर्णयागं शोमशंभुमतं चागस्त्यसंहिताम्।

संहितां वैष्णवी तद्वत् त्व सागरसंहिताम्॥ १-७॥

संहितां कपिलप्रोक्तं श्रीमन्त्रवरसंहिताम्।

तन्त्रं श्रीभुवनेश्वर्या न य सिद्धान्तमादरात्॥ १-८॥

कल्पं श्रीनवदुर्गायास्तत्रं सन्मोहनात्मकम्।

हयग्रीवमतं तद्व तथा विज्ञानभारतम्॥ १-९॥

शुक्लं च मन्त्रराजं च तां दृष्ट्वा च पुनः पुनः।

सर्वेषां संहितां चैव तथा वै पिङ्गलामृतम्॥ १-१०॥

वामकेश्वरतन्त्र च समस्तं रामदीक्षितम्।

१ब्) विज्ञानेश्वरसिद्धान्तं सार श्रीसंहिताः क्रमात्॥ १-११॥

विज्ञानललितां पांचरात्री नारायणीमपि।

वशिष्ठसंहितां गार्ग्यसंहितां भैरवं तथा॥ १-१२॥

दिव्यसारस्वतं यिच्चन्द्रिकां कामिकमादरात्।

होमावरोत्तरं ग्रन्थं प्रतिष्ठा सारसंग्रहम्॥ १-१३॥

संहितां वायवीं तद्वत् संहितां ब्रह्मणस्तथा।

कृशानोः संहितां ब्रह्मविष्णुरुद्रादिजामलम्॥ १-१४॥

तथैव यामलोद्धारं मत्स्यसूक्तमपि क्रमात्।

पार्वती हरसंवादं वाराहीतन्त्रमादरात्॥ १-१५॥

तथैव योगिनीतन्त्रं क्रमशस्त्रिपुरार्णवे।

ईशानसंहितां तद्व सिद्धान्तं विश्वकर्मणः॥ १-१६॥

तन्त्र श्रीदक्षिणामूर्तै वैशम्पायेन संहिताम्।

कुलचूडामणिं तद्व भावचूडामणिं तथाः॥ १-१७॥

कुलार्णवं कुलश्रेष्ठं हंसपारायणं तथा।

पुराणं विविधं तद्वत् स्मृतिशास्त्राणिभारतम्॥ १-१८॥

ज्योतिः शास्त्राणि चालोक्य सकलां पद्धतिं क्रमात्।

अन्ये य संग्रहाः सन्ति तान् दृष्ट्वा च पुनः पुनः॥ १-१९॥

सर्वेषां सारमुद्धृत्ये यदुनाथेन धीमता।

विधानं मन्त्रयन्त्राणां दीक्षादीनां प्रपंचितम्॥ १-२०॥

ज्ञानानुसारतो ज्ञेयं विभाव्य च मुहुमुहुः।

नानातन्त्रस्थमन्त्राणां ज्ञानं झतिटिदुल्लभम्॥ १-२१॥

अतस्तेषां प्रबोधाय विचार्यातिप्रयत्नतः।

ज्ञानायमंदबुद्धीनां समासेन प्रचक्षते॥ १-२२॥

परं करपुटे नैव प्राथ्र्यते सुधियोमया।

न्युनातिरिक्तता चात्र शोभनीया महाशयैः॥ १-२३॥

२अ) तथा दीक्षितमर्त्यानां यद् दोषं कथयामि तत्।

यदु ज्ञात्वा न वा नित्यं दीक्षां कुर्चं तु सत्तमः॥ १-२४॥

अगस्त्यसंहितायाम्॥

अदीक्षितानां मत्यानां दोषं श्रृण्वन्तु पण्डिताः।

अन्नविष्ठासमं तस्य जलं मुत्रसमं तथा॥ १-२५॥

अदिक्षितं कृतं श्राद्धं श्राद्धं चादीक्षितस्य वा।

गृहीत्वा पितरस्तेषां नरके च सुदारुणम्॥ १-२६॥

पतन्त्य व न संदेहो यावद् इन्द्रा चतुर्दश।

सहस्त्रैरुपचारैस्तु भक्तियुक्तो यजेद् यदि॥ १-२॥

तथाप्य दीक्षितस्यार्चां देवा गृह्णन्ति नैव च।

कर्माखिलं? तथा यस्मात् तस्माद् अदिक्षितः पशुः॥ १-२८॥

तस्माद् अदीक्षितं दृष्ट्वा किंचित् कार्यं न साधयेत्।

दीक्षा ग्रहणकाले तु पापराशिः परायते॥ १-२९॥

निर्वाणपदसंयुक्तो वहि गच्छति तत् परः।

तदा देव पितृणां तु कार्यादो भवति स्वयम्॥ १-३०॥

अन्यथा यत् कृतं कर्म हुतं नस्मनिहव्यवत्।

सर्वाश्रमेषु दीक्षायां नित्यत्वं परिचक्ष्यते॥ १-३१॥

अनीश्वरस्य मन्त्रस्य नास्ति त्राता यथा भुवि।

तथा दीक्षा विहीनस्य नेहस्वामी परत्र च॥ १-३२॥

न तपोभिर्जयैर्होमै विविधैर्वापि साधनैः।

न क्रिया हि कदाचित् तु दीक्षाहीनस्य सिद्ध्यति॥ १-३३॥

किंचिद् इति शेषः॥

दीक्षामूलं जपसर्वं दीक्षिमूलं परं तपः।

२ब) दीक्षामाश्रित्य निवसत् यत्र कुत्राश्रमे व सन्॥ १-३४॥

अदीक्षितश्च मरणे रौरवं नरकं व्रजेत्।

तस्माद् दीक्षां प्रयत्नेन सदा कुर्याच्च तान्त्रिकात्॥ १-३५॥

कल्पे दृष्ट्वा तु मन्त्रं यै यो गृह्णाति नरोधमा।

मन्वन्तरसहस्रेण निष्कृति नैव जायते॥ १-३६॥

दीक्षितानां तु सर्वेषां अधिकारोत्रनिश्चितम्।

अतः प्रथमतो दीक्षां प्रवक्ष्यामि विशेषतः॥ १-३७॥

तथा च॥

वैशम्पायेन संहितायां शौनकं प्रतिच्या सवाक्यम्।

दिव्यं ज्ञानं यतो दद्यात् कुर्यात् पापक्षयं यतः॥ १-३८॥

अतो दीक्षेति सा प्रोक्ता देशिकैस्तन्त्रवेदिभिः।

यावन् न प्राप्यते दीक्षा पुरुषार्थफलप्रदा॥ १-३९॥

सर्वसिद्धिकरी दीक्षा सर्वसंपत्प्रदायिनी।

प्रतिभास्वरवर्णानि कान्तिपुस्तिधराणि च॥ १-४०॥

मोहनस्तंभनाकृष्टि मारणेच्चाटनानि च।

वशीकारं च कविता वुद्धिश्च धारणायुता॥ १-४१॥

तारणं च समुद्रस्य वह्नेः शैत्यं रणे जयेन्।

विपिणे चाभयं चैव शोकदुःखापहं तथा॥ १-४२॥

धर्मार्थकाममोक्षाणि ददात्येषा नशंसयः।

असाध्यसाधनी दीक्षा अदैवदेवकारिणी॥ १-४३॥

येभ्यसन्ति परां दीक्षां सर्वकामदुघा भुवि।

ते व्रजन्ति परं स्थानं गुर्वाराधनत्परः॥ १-४४॥

इति श्री-आगमकल्पलतायां प्रथमः पटलः॥

२अ) अथातः संप्रवक्ष्यामि लक्षणं गुरुशिष्ययोः।

श्रीमन्त्रमुक्तावल्याम्॥

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः॥ २-१॥

उकारो विष्णुरित्युक्तोः त्रितयात्मा गुरुः परः।

गणेशोत्राग्निनायुक्तो विष्णुना च समन्वितः॥ २-२॥

वर्णद्वयात्मकोमन्त्रचतुर्वर्गफलप्रदः।

तथा च रुद्रयामले॥

अवदातात्वये शुद्धः शाधिताचार तत्परः॥ २-३॥

आश्रमीवेदवित्क्रोधरहितः सर्वशास्त्रवित्।

श्रद्धावान नसूयश्च प्रियवान् प्रियदर्शनः॥ २-४॥

शुचिः सुवेशस्तरुण सर्वभूतहिते रतः।

श्रीमाननुर्द्धतमतिभद्राभद्रविमर्शकः॥ २-५॥

प्राज्ञः स्वकृतधीः शान्तः कृतज्ञाः शिष्यवत्सरः।

निग्रहानुग्रहे शक्तः क्षमामन्त्रपरायणः॥ २-६॥

उहामोहप्रकारज्ञः सर्वभूतकृपालयः।

इत्यादि लक्षणैयुक्तोः गुरुः स्याद् (?) गरिमद्युतिः॥ २-७॥

श्रीशारदातिलके।

मातृतः पितृतः शुद्ध शुद्धभावोजितेन्द्रियः।

सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित्॥ २-८॥

परोपकारनिरतो जपपूजादि तत्परः।

अमोघवचनः शान्तो वेदवेदार्थपारगः॥ २-९॥

योगमार्गानुसंधायी देवता हृदयं गमः।

३ब्) संहाराद्धारणे शक्तोदान्तश्च ब्राह्मणोत्तमः॥ २-१०॥

मन्त्राणा च रहस्यज्ञो मन्त्रवित् साधकोत्तमः।

उदारः सत्यवादी च गृहस्थो गुरुरुच्यते॥ २-११॥

इत्यादि गुणसंपन्नो गुरुरागमसम्मतः।

देव्यागमेश्च। शिववाक्यम्॥ २-॥

दान्तः शान्तः कुलीनश्च विनीतः शुद्धवेशवान्॥ २-१२॥

शुद्धाचारः शुप्रतिष्ठः शुचिर्दक्षशुवुद्धिमान्।

आश्रमोध्याननिष्ठश्च मन्त्रतन्त्रविशारदः॥ २-१३॥

निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते।

तथा चोक्तं सारसंग्रहे॥

गृहीतमन्त्रस्व्यक्तव्यः साधकेन सदैव हि॥ २-१४॥

अरिगेहस्थितो मन्त्रो ह्यनुचार्यश्च यो मनुः।

स,म्स्काररहितो मन्त्रो विधिदीक्षाविवर्जितः॥ २-१५॥

त्यक्त्वा सर्वप्रयत्नेन पुनर्ग्राह्यं यथाविधि।

ब्रह्मवैवर्त्त॥

पितुर्दीक्षायते दीक्षा दीक्षा च वनवासिनः॥ २-१६॥

विविक्तस्य च या दीक्षा न सा कल्पा न दायिनी।

श्रीस्कन्दपुराणे॥

साध्यं साध्यं च यन् मन्त्रमर्यारिं वा महेश्वरि॥ २-१७॥

स्वप्नलब्धोपि यो मन्त्र तन् मन्त्रं यत्नतस्त्यजेत्।

नीचवर्णा गृहीतं य तथा वैषान सादपि॥ २-१८॥

विविक्तस्य यतेश्चैव पितुदीक्षा विवर्जयेत्।

वृहमत्स्यसूक्ते॥

पितुमन्त्रं न गृह्णीयात् तथा माता महाद *?॥ २-१९॥

कनिष्ठात् सोदराद्वापि वैरिपक्षाश्रितास्तथा।

प्रमादाद्या तथाज्ञया पितृदीक्षां समाचरेत्॥ २-२०॥

४अ) प्रायश्चित्तं ततः कृत्वा पुनः दीक्षां समाचरेत्।

पितुदीक्षायतिदीक्षा दीक्षा च वनवासिनः॥ २-२१॥

अनाश्रमीणां या दीक्षा सा दीक्षा धननासिनी।

तदुक्तं तथा च श्रीनारायणीतन्त्रे॥

पितुर्मन्त्रं न गृह्णीयात् तथा शैवाश्रितस्य च॥ २-२२॥

कदाचिदपि गृह्णाति पुनः सस्कारमर्हति।

इत्यादि वचनादेभ्यो मन्त्रं न गृहग्नि (?)यादित्यर्थः॥ २-२३॥

तथा च॥

निर्वीर्यं च पितुमन्त्रं शैवे शाक्ते न दुष्यति।

इति कौलिकमन्त्रं दीक्षा परम्॥

योगिनीतन्त्रे शक्तिविद्यामधिकृत्य दीक्षा निषेधात्। महातीर्थे उपरागे सति सर्वत्र न दोषः।

साधु पृष्ठ त्वया ब्रह्मन् वक्ष्यामि सकलं तव॥ २-२४॥

ब्रह्मणा कथितं पूर्वं वशिष्ठस्य महात्मन।

वशिष्ठोपि सुपुत्राय मत्पित्रे दत्तवात्स्वयम्॥ २-२५॥

प्रसन्नः हृदयः स्वच्छ पितामेकरुणानिधे।

कुरुक्षत्रे महातीर्थे सूर्यपर्वणि दक्षवान्॥ २-२६॥

इत्यादि वैशम्यायनसंहितायाम्॥ शौनकं प्रति श्रीव्यासवाक्यात्॥ विष्णुमन्त्रमपि पितु गृह्णीया इति भावः॥ प्रायश्चित्तं त्वयुतगायत्रीजपः सर्वत्र तथा दर्शनात्।

योगिनीतन्त्रे॥

निर्वीर्यं च पितुर्मन्त्रं तथा मातामहस्य च।

स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुध्यति॥ २-२७॥

स्वप्नलब्धे च कलशे गुरोः प्राणं निवेशयेत्।

४ब) चटपत्रे कुंकुमेण लिखित्वा ग्रहणं शुभम्॥ २-२८॥

ततः सफलमाप्नोति अन्यथा विफलं भवेत्।

इदं तु सद्गुरोरभावे तत् सत्वे तस्मादेकं मन्त्रं गृह्णीयादिति
स्वप्ने तु नकालनियमः स्वप्ने तु नियमो नहिति नारदवचनात्।

वर्जनीयं गुरुं वज्य मन्त्रिणांहितकाम्यया॥ २-२९॥

वृहन्मत्स्यसूक्ते॥

अपुत्रो मृतपुत्रश्च कुष्टी च वामनस्तथा।

कुनखीश्यावदन्तश्च स्त्रीजितोप्यधिकाङ्गकः॥ २-३०॥

हीनाङ्गः कपटीरोगी वह्वाशीवहुजल्पकः।

एतैर्दोषैविहीनोयः सगुरुः शिष्ठसम्मतः॥ २-३१॥

अथेदानी ग्रन्थवर्यशिष्यलक्षणमुच्यते।

तथा च रुद्रयामले॥

राज्ञिचामाभ्यजोदोषः पत्नीपापं स्वभर्त्तरि॥ २-३२॥

तथा शिष्योजितं पापं गुरुं प्राप्नोति निश्चितम्।

अतो विचार्ये यत्नेन शिष्यलक्षणमुच्यते॥ २-३३॥

तथा च शारदातिलके॥

शिष्यः कुलीनः सुद्धात्मा पुरुषार्थपरायणः।

अधीतवेदः कुशलो दूरमुकुटमनोभवः॥ २-३४॥

हितैषी प्राणिणां नित्यमास्तिकोन तु नास्तिकः।

स्वधर्मनिरतो भक्त्या पितृमातृहितोद्यतः॥ २-३५॥

वाङ्मनः कायवसुभिगुरुशुश्रुषणे रतः।

एता दश गुणोपेतः शिष्यो भवति नापरः॥ २-३६॥

तथा च यामले॥

शिष्यः शुद्धसनाज्ञानि पुरुषार्थपरायणः।

अधीतशास्त्रतत्त्वज्ञो हि तैद्वीप्राणिनां सदा॥ २-३७॥

नास्तिकाचाररहित आस्तिकश्च जितेन्द्रियः।

५अ) सुधर्मनिरतः शुद्धः पितृमातृहिते रतः॥ २-३८॥

शुश्रुषुगुरुभक्तश्च जिज्ञासुश्रद्धयान्वितः।

कामक्रोधादिरहितो निविष्टोमन्त्रपूजन॥ २-३९॥

वाङ्मनः कायवसुभि गुरुशुश्रुषणेरतः।

सर्वात्मनातितीषुश्च भवार्द्धे भवदुःख कृत्॥ २-४०॥

ब्राह्मणो धर्ममोक्षार्थी कामार्थी विगतः स्पृहः।

किं वोधनार्थमोक्षाथी निस्कामश्चार्थवा द्विजः॥ २-४१॥

मातृवङ्गुरुपत्नीषु भ्रातृवत् तत् सुतेष्वपि।

देववुध्या सदा तेषु भक्त्या पूजनमाचरेत्॥ २-४२॥

एतेसु दैवानुकंप्यो वर्ज्यानन्यानिवोधती।

इदानीं वर्ज्यशिष्यानां लक्षणं कथयामि च॥ २-४३॥

पाखण्डाङ्कुशे॥

अल्सामलिनाः कुद्धो दांभिकाः कृपणाः खलाः।

दरिद्रा रोगिणः क्लिष्टा रागिणोभोगलालसाः॥ २-४४॥

अस्रूयामत्सरग्रस्ताः शठाः परुषवादिनः।

अन्यायोपार्जितधनाः परदाररतश्च य॥ २-४५॥

विदुषां वैरिणश्चैव अज्ञापण्डितमानिनः।

भ्रष्टव्रताश्च ये केचित् पिशुनाः कष्टलालसाः॥ २-४६॥

वह्वाशिनः क्रुरचेष्टा दुरात्मानश्च निन्दिताः।

इत्यावमादयोप्यन्ये पापिष्टा पुरुषाधमाः॥ २-४७॥

एवं भूताः परित्याज्याः शिष्यत्वेनोपकल्पयेत्।

अद्य ते उपकल्पेरन् देवता क्रोधभाजनाः॥ २-४८॥

भवनतिहदरिद्रास्ते पुत्रदारविवर्जिताः।

नारकाश्चैव देहान्ते तिर्यत्कं प्रभवन्ति ते॥ २-४९॥

५ब) क्षुद्रा प्रलोभितास्तेभ्यो निन्दितेभ्योति शन्ति य।

विनश्यते च सकलं शैकतोशालिविजवत्॥ २-५०॥

तथा च सारसंग्रहे॥

शठः क्रूरश्च मूर्खश्च चुम्बकोभक्तिवर्जितः।

अतिसाहसिकश्चैव दूषितो देव निन्दकः॥ २-५१॥

कुलनिन्दा परश्चैव परदारततस्तथा।

एतैर्दोषै विहीनो यः शशिष्यः शिष्टसम्मतः॥ २-५२॥

नदेयं परशिष्येषु परिचर्या रतेष्वपि।

ब्रह्मवैवर्त्तेम्॥

प्रातिकुल्यं गुरोनित्यं मनसापिन कारयेत्॥ २-५३॥

शदाशिवधिया नित्यं एकग्रामणिवासिनम्।

गुरुं वन्दे तवेदूरे मनसा वन्दनं चरेत्॥ २-५४॥

प्रातः शिरसिशुक्लेब्जे द्विनेत्रं द्विभुजं गुरुम्।

वराभयं करं शान्तं स्मरेत् तन्नामपूर्वकम्॥ २-५५॥

ॐ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनसलाकया।

चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ २-५६॥

ब्रह्माविष्णुशिवादीनां पूजयेत् सफलं भवेत्।

तत्फलं समवाप्नोति प्रत्यहं वंदनगुरोः॥ २-५७॥

गुरुब्रह्मा गुरुविष्णु गुरुदेवो महेश्वरः।

सन्तुष्टस्तु गुरुयस्मै तस्मै तुष्टं जगत्रय॥ २-५८॥

शिवे रुष्टे गुरुस्ताता गुरौरुष्टे न कश्चनः।

अविद्यो वा सविद्यो वा गुरुरेव तु दैवतम्॥ २-५९॥

अमार्गस्थोथमार्गस्थो गुरुरेव परा गतिः।

यथासिद्धरसस्पर्शा ताम्रं भवति कांचनम्॥ २-६०॥

सन्निधाने गुरोरेव शिष्यः शिवमयो भवेत्।

भवार्णवतरिःसास्ता गुरुरेव च सच्चागतिः॥ २-६१॥

६अ) गुरौ तिष्ठति यस्त्वन्ये मासनं पूजयेज्जडः।

सदुर्गतिमवाप्नोति पूजा सा विफला भवेत्॥ २-६२॥

प्रणिपत्य गुरुं पश्चान् मोहाद् विप्रतिपद्यते।

युगकोटिसहस्त्राणि नरके पच्यते तथा॥ २-६३॥

ये गुर्वाज्ञां प्रकुर्वन्ति पापिष्ठाः पुरुषाधमाः।

न तेषां नरकक्लेशनिस्तारोस्तिकथं च न॥ २-६४॥

यैः शिष्यैः शश्वदाराध्या गुरवोज्यवमानिताः।

पुत्रमित्रकरत्रादि संपत्यः प्रच्युताहिते॥ २-६५॥

अधिक्षिप्य गुरुं मोहात् परुषं प्रवदन्ति य।

शुकरत्वं भवत्येव तेषां जन्मगतेष्वपि॥ २-६६॥

ये गुरुद्रोहिणो मूढः सततं पापकारिणः।

तेषां तु यावत् सुकृतं दुष्कृतं स्यान् न संशयः॥ २-६७॥

येषां भक्तिगुरौ स्थैर्या मुक्तिस्तेषां करे स्थिता।

शुश्रुषया धनैर्धान्यैश्चैलै वाक्यैः शुभावहैः॥ २-६८॥

वशं कुर्याद् गुरुं धीरः स्वच्छंदहृदयेन वै।

यस्य नास्ति गुरौ भक्ति ज्ञानं चापि तथाविधम्॥ २-६९॥

न तस्य जायते सिद्धिः कल्पकोटिशतैरपि।

गुरौ भक्तिः सदा कार्या गुरुश्चेद्दोष (?) सयुतः॥ २-७०॥

महापातकयुक्तो वा गुरुर्देवः सदाशिवः (-शिः)।

तथा च देव्यागमे॥

गुरशेर्यासनं यानपादुकां चैव पीठकम्॥ २-७१॥

स्नानोदकं तथा च्छायां लंघयेन् न कदाचन।

गुरोरग्रे पृथक् पूजा मौहृत्यं च विवर्जयेत्॥ २-७२॥

दीक्षा व्याख्या प्रभुत्वं च गुरोरग्रे परित्यजेत्।

गुरुमन्त्रं देवतानामैक्यं सभावयेद् धिया॥ २-७३॥

विज्ञानस्यात् प्रमेयस्य निर्गुणस्याशरीरिणः।

साषकानां हितार्थाय ब्रह्मणोरूपकल्पना॥ २-७४॥

सन्तुष्टो हि गुरु यत्र तत्र तुष्टो जगत्पति।

देवे रुष्टे गुरुष्टाता गुरौरष्टे न कश्चन॥ २-७५॥

गुरोर्देहं व्यपाश्रित्य मन्त्रदेवेन तिष्ठति।

उत्पादक ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता॥ २-७६॥

तस्मान् मन्यतसततं पितुरप्यधिकं गुरुम्।

तस्मात् सर्वप्रयत्नेन गुरुर्मान्योधनादिभिः॥ २-७७॥

यत् प्रसादात्परं स्थानं प्राप्यते भुविदुल्लभम्।

गन्धैमाल्यैधूपद्रव्यै संपूज्य गुरुमग्रतः॥ २-७८॥

ततो मन्त्रं च गृह्णीयाद् वस्त्रेणाच्छाद्यमस्तकम्।

दशवंशस्तथा मातु श्शुरस्य तथा दश॥ २-७९॥

पितृणामेकपंचाश स्वर्गं गच्छति निश्चितम्।

नंदति पितरः सर्वे पुत्रे मन्त्रार्थसाक्षिणी॥ २-८०॥

गृह्णन्ति स्वर्गभोगाश्च स्वर्गे वासः सुनिश्चयः।

वैषववैषवं ग्राह्यं शैवे शैवं च शाक्तिके॥ २-८१॥

कलौशक्तिप्रधानं च ब्राह्मणादिभिरेव च।

नशूद्रस्याधिकारोस्ति पुराणे निगमात्मके॥ २-८२॥

शूद्रशिष्ये मनोर्ज्ञानं उत्कर्षं न हि सर्वथा।

लोभार्थै यदि तत् कुर्याद् विष्णुमन्त्रं वि नैव हि॥ २-८३॥

प्रणवाद्यं न दातव्यं मन्त्रं शूद्रायसर्वथा।

आत्ममन्त्रं गुरोमन्त्रं मन्त्रं चाजपसंज्ञकम्॥ २-८४॥

आत्मकौलिकमन्त्रं च नैव दद्यात् कदाचन।

गोपालस्य मनुर्देयो महेशस्यापि पादजे॥ २-८५॥

तत् पत्न्यां चापि सूर्यस्य गणेशस्य मणोस्तथा।

७अ) एषां दीक्षाधिकारिस्यात् अन्यथा पापभाग्भवेत्॥ २-८६॥

तदुक्तं श्रीतन्त्रराजे॥

पुस्तके लिखिता विद्या येन सुन्दरिजप्यते।

न जायते तस्य सिद्धि हानिरेव प्रजायते॥ २-८७॥

इत्यागमकल्पलतायां द्वितीयः पटलः॥ २॥

गुरोश्चात्मविशुद्ध्यर्थं शिष्यांस्तु परिशोधयेत्।

अब्दैकेन भवेद् योग्यो ब्राह्मणोब्दद्वयान्नृपः॥ ३-१॥

वैश्यो वर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैस्सदा।

शिष्यनापि तथा कुर्यात् स्वकीयाभिष्टसिद्धये॥ ३-२॥

आदौ नृपश्च सेव्यश्च ज्ञेयश्चाभीष्टमिच्छता।

गुरुरिति शेष॥

तथा च गौतमीय॥

शुभेह्नि स्नानमाचर्य नमत्कुर्याद् गणेश्वरम्।

सूर्यं शिवं हरिं दुर्गां वाणी च कमलालयाम्॥ ३-३॥

मातरं पितरं नत्वा ब्राह्मणान् परिष्य च।

फलं पुष्पं च मङ्गल्यं गृहीत्वा भक्तिसंयुतः॥ ३-४॥

पुरुषार्थसमावाप्त्यै सशिष्योगुरुमाश्रयेत्।

आत्मविज्ञापनं कृत्वा पितृमातृकुलान्वितम्॥ ३-५॥

गुरुत्वेणैव संवोध्य प्रणमेद् दंडवद् भुवि।

गुरोरग्रे समुत्थाय पुटांजलिकरस्थितः॥ ३-६॥

विचारय महावाहो मद्धितं मन्त्रवर्यकम्।

गुरुर्विचारयेत् पश्चाद् एय मन्त्राश्च यत्नतः॥ ३-७॥

एवं च॥

श्वताललाशिकोष्टानां अनुकुलं भजेन् मनुन्।

एवम्॥

झ न मन्त्रं न गृह्णीयाद् अकुलं च तथैव च॥ ३-८॥

त्यादिवचनाच्चक्र विचारस्यावश्यकत्वात् प्रथमं तन्निरूप्यते।

७ब्) अथ वक्ष्यविचारं च चक्राणां सिद्धिहेतवे।

आदौ कुलाकुलं चक्रं मकथाख्यं द्वितीयकम्॥ ३-९॥

तृतीयं झ ण धनाख्यं चतुर्थं वर्गसंज्ञकम्।

पंचमं राशिचक्रं स्यात् षष्ठं नक्षत्रचक्रकम्॥ ३-१०॥

सप्तमं गणचक्रं स्याद् अष्टममकदं स्मृतम्।

नवमं मुद्दितं चक्रं दशमं नादिकाह्वयम्॥ ३-११॥

क्रमेनाह॥

तथा च शारदातिरके॥

कारणात् पञ्चभूतानां उद्भूता मातृका यतः।

अतो भूतात्मका वर्णाः पंचपंचविभागतः॥ ३-१२॥

वाय्वग्निभूजलाकाशाः पंचाशल्लिपयः क्रमात्।

पंचह्रस्वाच्यं च दीर्घा विद्वन्तां संधिसंभवाः॥ ३-१३॥

पंचाशः कादयः षक्षलसहान्ता समीरिताः।

स्वनामाद्यक्षराणां तु मित्रं वा स्वकुलं वरम्॥ ३-१४॥

पंचपंचेति दशवर्ण इत्यर्थः॥

वाय्वग्नीत्यादि॥

अ आ एकचटतपयषाः मारुतः।

इ ई ऐ ख च्छ थ ठ फ लक्षाः आग्नेयाः।

उ ऊ ओ ग ज ड द् व ल लाः पार्थिवाः।

ऋ ॠ औ घ ग ध ढ भ माः? वारुणाः।

ऌ ॡ अं ङ ञ ण न म श हा ना हसा।

पंच ह्रस्वा इति।

अ इ उ ऌ ऋ पंचदीर्घाः॥

आ इ ऊ ऋ ॡ विद्वन्ता इति विंदुरन्ते यस्य तेन अं इत्यर्थः।

एतेन विसर्गस्यानुपयोगोलब्धः॥

तथा च॥

पिङ्गलामृते॥

मन्त्रसाधकयोराद्योः वर्णस्यात् पार्थितो यदिः।

८अ) तत् कुलं तस्य तत् प्रोक्तं मेवमन्यषुलक्षयेत्॥ ३-१६॥

संधिः संभवति।

ए ऐ ओ औ एकत्रो भयावस्थाने त्वकुलम्।

तदुक्तं वाराहेतन्त्रे।

साधकस्याक्षरं पूर्वं मन्त्रस्यापि तथाक्षरम्।

यद्यकभूतदैवत्यं जानीयात् स्वकुलं हि तत्॥ ३-१७॥

मित्रमिति परस्परमन्त्रम्॥

तदुक्तं श्रीनारायणाय॥

पार्थिवे वारुणं मित्रमाग्रयस्यापि मारुतम्।

पार्थिवाणामक्षराणां शत्रुत्वे मारुतं स्थितम्॥ ३-१८॥

आग्नेयस्यां हसां शत्रुरंभशस्तैजलं स्मृतम्।

एतेषामेव सर्वेषामविरोधेन नाभसम्॥ ३-१९॥

परस्परविरुद्धानां नकुर्या तोरणं क्वचित्।

उक्तं कुलोकुलं चक्रं समस्तपुरुषार्थदम्॥ ३-२०॥

इति कुलाकुलचक्रम्॥

वक्ष्य अथ हं चक्रं याङ्लिखेच्चतुरस्रकम्।

मध्यरेखा द्वयं दद्या पाशग्रामुदगग्रगाम् (?)॥ ३-२१॥

चतुरस्रं भवे तत्र चतुष्कोष्ठसमन्विता।

पूर्वापरायतां दद्या मध्यरेखाद्वयं ततः॥ ३-२२॥

तदा दक्षिणदीर्घां दद्याद् रेखाद्वयं वुध।

अ

इ

उ

ऋ

ऌ

आ

ई

ऊ

ॠ

ॡ

ए

ऐ

ओ

ङि

अ

क

ष

त्र

भ

म

य

र

ल

च

स

ष

क्ष

व (?)

स

ह

वायु

अग्नि

भू

जल

आकाश

८ब्) ततः षोडशकोष्ठं च जायते चक्रवर्यकम्॥ ३-२३॥

आदिक्षातान् लिखेद् वर्णान् क्रमेणानेन मन्त्रवित्।

पिङ्गलामृते॥

इद्वग्निरुद्रनवनेत्रयुगार्कदिक्षु ऋत्वष्टषोडशचतुर्द्दशभीतिकेषु।

पातालपंचदशवह्नि हिमांशुकोष्ठे वर्णाल्लिखेल्लिपि भवान् क्रमशस्तु धीमान्॥ ३-२४॥

नामाद्येक्षरमारभ्य यावन्मन्त्राद्यमक्षरम्। चतुर्भिः कोष्ठैरेकैकमिति कोष्ठचतुष्टयम्॥ पुनः कोष्ठककोष्ठेषु सव्यते। नाम्न आदितः।

सिद्धः साध्यः सुसिद्धोरिः क्रमा ज्ञेयो विक्षणैः।

सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः॥ ३-२५॥

सुसिद्धो ग्रहणादेव रिपुमूलं निकृन्तति।

सिद्धार्णा वांधवा ज्ञेयाः साध्या (स्नेहा) सेवकाः स्मृताः॥ ३-२६॥

सुसिद्धः पोषकः प्रोक्ताः शत्रवोघातक स्मृतः।

जयेन वंधुः सिद्धः स्यात् सेवकोधिकसेवया॥ ३-२७॥

पुष्णाति पोषकोभीष्टं घातकोनाशयेद्ध्रुवम्।

सिद्धसिद्धो यथोक्तश्च द्विगुणः सिद्धसाध्यकः॥ ३-२८॥

सिद्धः ससिद्धोर्द्धजपात् सिद्धा मिर्हन्ति वान्धवान्। (?)

साध्यसिद्धो द्विगुणकः साध्यसाध्यो निरर्थकः॥ ३-२९॥

साध्य सुसिद्धोर्द्धजपात् साध्यारिहन्ति गोत्रजान्।

अ क थ ह

उ ङ प

आ ख द

उ च फ

ओ * * व

ऌ ॠ म

ओ ध श

ऌ ञ य

इ घ न

ऋ ज भ

इ ग ध

झ छ व

अ त म

ए ठ ल

अं न ष

ए ढ र

९अ) सुसिद्धसिद्धोर्द्धजपार्तसाध्यो द्विगुणाधिकः॥ ३-३०॥

ग्रहणात् तत् सुसिद्धस्तु सुसिद्धोरिः स्वगोत्रहा।

अरिसिद्धः सुतं हन्याद् अरिसाध्यस्तु कन्यकान्॥ ३-३१॥

पत्निमरीसुसिद्धस्तु अर्यरिमूलघातकः।

इति अकथहचक्रम्॥

अथ ऋणधनं वक्ष्य चक्रं वर्णाङ्कसंयुतम्॥ ३-३२॥

तदुक्तं तन्त्रराजे॥

कथं ऋणित्वं मन्त्राणां साधकानां तथैव च।

पूर्वजन्मकृताभ्यासाज्जपादस्या फलाप्ति कृत्॥ ३-३३॥

पापे नष्टे फला वाप्ति काले देहक्षया दृशी।

मन्त्रः संप्राप्तिमात्रेण प्राक् पुतः सिद्धये भवेत्॥ ३-३४॥

सिद्धमन्त्रा गुरोरव्धा मन्त्रायः सिद्धिभाङ्ग (?)रः।

लक्ष्मी महासर्वपूज्यो मन्त्रभोगमवाप्तवान्॥ ३-३५॥

समन्त्रस्य रितिज्ञोयो भजनं तस्य पूर्वगम्।

तस्माद् ऋणविशुद्धिस्तु कार्या सर्वैस्तु सर्वस्तु सर्वदा॥ ३-३६॥

तथा वागमकल्पद्रुमे॥

पूर्वापरं द्वादशंख्यसूत्रं या मात्तरस्थं च तथा चतुष्कम्।

द्वौ द्वौ स्वरौ पंचसुकोष्ठकेषु शेषान्स्वरान् षड्विषदेकमेकम्॥ ३-३७॥

कादेर्हशेषान्विलीखेत् ततोर्णान् एकैकमेकादशसुस्थलेषुः।

इन्द्रर्क्षनेत्ररविपंदशर्तु वेदवह्न्या युधाष्टनवभिगुणितांश्च
साध्यान्।

दिग्भूगिरिश्रूति गजाग्निमुनिषु वेदषड्वह्निभिश्च गुणितानघसाध
(कां)कान्॥ ३-३८॥

९ब) इन्द्रादिभिः गजहृतै गणितैः स्वकोष्ठैः साध्यं व साधकलिपिं च
दिगादिभिश्च।

नामार्द्धलादकथवाङ्गजभुक्तशेषं ज्ञात्वोभयोरधिकशेषमृणं
धनं स्यात्॥ ३-३९॥

अस्यार्थ॥

यस्मिन् कोष्ठे साध्यसाधकयोरंकं दृश्यते।

तत् कोष्ठस्थिताङ्कं गृहसंख्याकैः पूरयित्वाष्टभिर्भागमाहरेत्।

सर्वत्रहरणमष्टभिरेव हारका भावात् सप्तपर्यन्ता व स्थानं
षड्वालकाल इति वसनद्वयं सिद्धाङ्कप्रदर्शकमिति निष्कर्षः।

प्रकारान्तरमाह॥

तथा च सुन्दरिरहस्य वृत्तौ॥

पूर्वापराय तं लेख्यं रेखाद्वादशकं क्रमात्।

क्रमेणैत्रजायन्ते कोष्ठान्येकादशक्रमात्॥ ३-४०॥

तेषु वर्णं ल्लिखेन् मन्त्री स्वरादिक्रमयोगतः।

द्वौ द्वौ स्वरौ पंचसुकोष्ठकेषु शेषान् स्वरान् षत्सुखदेकमेकम्।

कादहशेषान्विलिखेत् ततोर्णानेकैकमेकादशमात्रकेषु॥ ३-४१॥

साध्याकान्विलिखेदूर्ध्वे साधकाकानधोलिखे।

इन्द्रर्क्षनेत्रादि।

मन्त्री यद्यधिका *? स्यात् तदा मन्त्रं जपेत् सुधीः॥ ३-४२॥

समेपि च जपेन्मन्त्री नजपेत् तु रिणाधिके॥ ३-४३॥

गुणिते तु कृताङ्काणां यच्छेषं जायते स्फुटम्।

तदंकं कथयाम्यत्र द्वादशाङ्गारसंस्थितम्॥ ३-४४॥

षड्कालकालवियदग्नि समुद्रवेद खाकाशशून्यदहनाः खलुदेवतार्णाः

।

१०) युग्मद्विपं च वियदं वरयुक् शशाङ्कव्योमाब्धिवेदशशनः
खलुसाधकार्णाः॥ ३-४५॥

अन्य प्रकालमाह।

कोष्ठानां कादशान्ये व वेदे न पूरितानि च।

आकारादिहकारान्तं लिखे कोष्ठेषु तत्त्ववित्॥ ३-४६॥

प्रथमं पंचकोष्ठेषु ह्रस्वदीर्घक्रमेण तु।

द्वयं द्वयं लिखे तत्र विचारखलुसाधकः॥ ३-४७॥

शषेष्वैकैकशोवर्णान् क्रमतस्तु लिखेत् स्वधीः।

षद्कालकालेत्यादि॥

अस्यार्थ॥

साध्यवर्णान् स्वरव्यंजनरूपेण पृथक् कृतान् षद्कालोद्यं कैगुणितान्
कृत्वा।

तथा साधकनामाक्षरान् युग्माद्यैः अंकैर्गुणयित्वाष्टसंख्याभि-
हृत्वा उभयोश्च साध्यसाधकयोः शेषस्याधिकरूपस्य ऋणं धनं
ज्ञात्वा मन्त्रं दद्यात्।

मन्त्रश्चेत्तनी भवति तदा शुभदायको भवति धनीचेन्न तथा।

इन्द्रर्क्षनेत्रेभ्यादिनामाद्धलादिवचनं तु विष्णुविषयं
श्रीरामार्च्चनचन्द्रिका धृतत्वात्।

प्रकारान्तरमाह॥

श्रीतन्त्रराजे॥

नामाद्वेक्षरमारभ्य यावन्मन्त्रादिमं भवेत्॥ ३-४८॥

त्रिधा कृत्वा सुरैहुत्वा तदुन्यद्विपरीतकम्।

अस्यार्थः॥

साधकनाद्यक्षरतो गणया पावन्मन्त्रादिमं भवेत्।

त्रिधा कृत्वा सुरैहुत्वाक्षरं तत् संख्यं त्रिधा कृत्वा सप्तभिहुत्वाधिकं
ऋणं शेशे उद्ध सिद्धाङ्कमाह।

१०ब) षड्कालकालवियदग्नि समुद्रवेदखाकाशशून्यदहनाः
खलुसाध्यवर्णा।

साध्य देवता॥

अथ सिद्धाङ्कमाह॥

युग्मद्विपं च विदावरयुक् शशाङ्कशून्याव्धिवेदशशिनः
खलुसाधकार्णाः॥ ३-४९॥

इन्द्रर्क्षनेत्र इति नवभिर्गुणितांश्च साध्यान्।

दिग्गूगिश्रूति त्रिगुणितानघसाधकाङ्कान्॥ ३-५०॥

इत्यर्थ॥

षधनं स्यात्।

तदन्यदिति।

मन्त्राद्यक्षरमारभ्य यावत् साधकनामाद्यक्षरं भवेत् तत् संख्यं सप्तगुणं कृत्वा त्रिभिर्हरेत्।

साध्यनामद्विगुणितं साधकेन समन्वितम्।

अष्टभिश्च हरे च्छेषं तदन्यविपरीतकम्॥ ३-५१॥

अस्यार्थ॥

साध्यनाम स्वरव्यंजनभेदेन संयोज्याष्टभिर्हुत्वा ऋणं धणं ज्ञेयं तदुन्यदपि।

६

६

६

०

उ ऊ

ऋ ॠ

ऌ ॡ

ए

ऐ

ओ

औ

अं

अः

क

ख

ग

घ

ङ

च

छ

ज

झ

ञ

ट

०

४

४

१

११अ) साधकानामाद्यक्षरान् स्वरव्यंजनभेदेन द्विगुणीकृत्य साध्यक्षरेण स्वरव्यंजनभेदेन संयोज्यास्तभिर्हुत्वा ऋषणं ज्ञेयमिति ऋणधनचक्रम्।

वर्गचक्रं प्रवक्ष्यामि ज्योतिरागसम्मतम्।

मन्त्राणामरिशोधार्थं नामाद्वेक्षरपूर्वकम्॥ ३-५२॥

अष्टौकोष्ठान् समापाद्य वर्गानष्टौ लिखेत् ततः।

पक्षिमाज्जारपंचास्य गुरुसर्पाषुदन्तिनः॥ ३-५३॥

मेषक्रमादकारादि वसुवर्गाश्रिता इमे।

साध्यसाधकयो प्रीतिर्ज्ञातव्या जातितः सदा॥ ३-५४॥

पक्षिमार्जारयो वैरं वैरं कुर्कुटपक्षिणेः।

वैरं पक्षिभुजंगानां शास्त्रवं गजसिंहयोः॥ ३-५५॥

मेषकुर्कुरयो वैरं प्रीतियुक्त्या विचारयेत्।

एवं चक्रवरं ज्ञात्वा गृहीयान् मन्त्रमुत्तमम्॥ ३-५६॥

प्रकारान्तरमाह।

वाराहे तन्त्रे॥

माज्जालकुर्कुलव्यालैः पक्षिणां वैरिता भवेत्।

मार्जारस्य सुनाखुभ्यां सिंहस्य दन्तिना सदा॥ ३-५७॥

कुर्कुरस्य खगाभ्यां तु खराखुभ्यां च भोगिनः।

उन्दुरस्यौ तु सपाभ्यां हरिणासहदन्तिनः॥ ३-५८॥

भुजंगसिंहयो मैत्त्री मेषकयोस्तथा।

लोकादन्यत्र विज्ञयं व्यवहारप्रयोगतः॥ ३-५९॥

इति वर्गचक्रम्।

इदानीं तु प्रवक्ष्यामि राशिचक्रं विशेषतः।

सूत्रद्वयं पूर्वपरायतं तन्मध्यद्वयं याम्यकुवेरभेदात्।

११ब) एकैकमीशाननिशाचरे तु हुताशवाय्वो विलिखेत् ततोर्णान्॥ ३-६०॥

वेदाग्निवह्वियुगलश्रवणाक्षिसंख्यान्
पंचषुवाणशरपंचचतुष्टयान्तान्।

मेखादितः प्रविलिखेत् सकलांस्तु वर्णान् कन्या गतान् प्रविलिखेदथ
सादिवर्णान्॥ ३-६१॥

तथा च वृहत्मत्स्यसूक्ते॥

वेदादि ब्रह्मयुगलद्विवाणवानेषु वाणेषुपयोधसंख्यान्।

मेषादि कोठेष्वभिलिख्यवर्णा षडेव शादिन्युवतौ लिखित्वा॥ ३-६२॥

तथा च सारसंग्रहे।

चतुर्भियादिभिः सार्द्धं स्यात् क्षकारस्तु मीनग इति।

शारदायाम्॥

वालं गौरेषुरं शोणं शमीशोभेतिराशिषु॥ ३-६३॥

क्रमेणभेदिता वर्णाः कन्यायां सादय स्थिताः।

तथा च वराहसंहितायाम्॥

जग्मुः स्वराशितोवक्ष्याः षष्टाष्टनिष्फणाः शुभाः॥ ३-६४॥

एकद्वित्रीचतुःपंचसप्ताक्षदशरुद्रगाः।

* * * **नं** * * **वंधु पुत्रशात्त्रु कलत्त्रकाः॥ ३-६५॥**

वैष्णवे मते तु शत्रुस्थाने वंधुरिति पाठ।

अ आ इत्यादि १४

पक्षि

क ख ग घ ङ

मार्जारः

च छ ज झ ञ

सिंह

ट ठ ड ढ ण

श्वापदः

त थ द ध न

नाग

प फ ब भ म

आ षुः

य ल र व

गज

स ष श ह

मेषः

१२अ) मरणं धर्मकर्मायध।

तत्रोयमुपदेश॥

पूर्वपश्चिमायते लेखा द्वयं दक्षिणोत्तरायतं रेखाद्वयम्।

ईशानादिकोणेषु रेखाचतुष्टयं तत्कोष्ठेषु पंचाशद्वर्णामेखादितो वक्ष्यमाणक्रमेणलिख्य सः।

वपूर्वाषाढामानुषः।

भ उत्त्तरखाढामानुषः।

मः श्रवणदेवः।

य धनिष्ठा राक्षसः।

स शतभिषा मानुषः।

व श पूर्वभद्रपदा मानुषः।

ष स ह उत्तरभद्रपदा मानुषः।

लं अं अः लक्षः रेवती देवः।

तृतीयपंचमसप्तमानिवर्जनीयानिनक्षत्राणि॥

स्वनक्षत्त्रा देवगणनीयम्।

स्वनक्षत्त्रा ज्ञान स्वनामाक्षरसंवंधि नक्षत्रा देवनीयम्।

प्रादक्षिण्य न गणयेत् साधकाक्षरतः सुधीरिति॥

तथा च ज्योतिषे॥

हस्तस्वातिमृगाश्विनी हरिगुरुपौष्णानुराधादिति श्वा *?रोहिचोत्तराभरणी पूर्वानिभानित्रयम्।

ज्येष्ठा श्लेषविशाषमूलवरुणा वेस्वग्निचित्ता मघाः कथ्यन्ते मुनिभिर्यथाक्रममिमेदे वानरा राक्षसाः।

ज्योतिषे॥

कटपयवर्गभवेरिह पिण्ड अत्यैरक्षरैरंकाः ने ङे शून्यं ज्ञेयं तथा स्वैरैरक्षरैरेवम्।

पिण्डे संयुक्ते अक्षरे॥

शारदातिलके॥

प्रापलोभात् पटुं प्राज्यं रुद्रस्यात्रिरुरुः कखेत्॥ ३-६६॥

१२ब्) अ आ इ ई मेष। उ ऊ ऋ वृषे।

ॠ ऌ ॡ मिथुने। ए ऐ कर्कटे।

ओ औ सिंह। अं अः श ष स ह कन्यायाम्।

क ख ग घ ङ तुलायाम्। च छ ज झ ञ वृश्चिके।

ट ठ ड ढ ण धनुषि। त थ द ध न मकरे।

प फ ब भ म कुंभ। य ल र व मीन।

रग्नाधनमित्यादि क्रमेण गननीयं मीने क्षकारमिति केचित्।

चतुर्भिर्यादिभिः सार्धं स्यात् क्षकारस्तु मीन क इति वचनात्॥ ३-६७॥

वाराही तन्त्रे।

एकोथवा प्यथ पंचमोथ नवमो राशेः स्वकान्वान्धवो राशेः स्याद्
दशमो द्वितीयसहितषष्ठो भवेत् सेवकः।

रुद्राग्निस्वरसंख्यया निगदितो मन्त्रः स्वयं पोषकः स्याच्चेदष्टमवत्सर
श्रुतिमिते मन्त्रः स्वयं घातकः॥ ३-६८॥

लग्नाधनत्रा तृशत्रुपुत्रमित्रकरत्रकामरणं धर्मकामाय व्यया
द्वादशराशयः।

अत्र राशिचक्रे चतुर्थस्थानं शत्रुर्न तु वंधुः।

नशत्रुरिति कश्चित् तच्चिन्त्यनियम्। इति राशिचक्रम्॥

अथ नक्षत्रचक्रं ऋष्यशुद्धिं प्रवक्ष्यामि शिष्यानां हितकाम्यया।

पूर्वापरायता रेखा दशदेया प्रयत्नतः।

उदग्दक्षिणदीर्घाश्च रेखा देया चतुष्टयम्॥ ३-६९॥

नवत्रितयसंयुक्ताः कोष्ठां ना शप्तविंशतिः।

जायते च तथा कुर्मा लिखेद्वर्णास्तु तेषु च॥ ३-७०॥

वक्ष्यैक त्रिस्विरूपा (?) वनिभुजशशियुग्युग्म भूयुग्मपक्षा
युग्मैकद्वित्रिरूप अवनिशशिद्यैकपक्षाग्निवेदा।

(चित्र)

१३अ) अश्विन्यादिक्रमेणाक्षरमिह गदितं शेषभे विंदुसर्गौ

जघ्नुनक्षत्रभेदाद् अथ परिगणयेज्जन्मसंपत्क्रमेण॥ ३-७१॥

जन्मसम्पद् विपत्क्षमं प्रत्यरिसाधका वुध।

मैत्रं परममैत्रं च जन्मादीरि पुनः पुनः॥ ३-७२॥

गणय तु क्रमादेव फलं नामानुरुपतः।

जन्मर्क्षं तु भवेद्धानिः संपत्तिः स्याच्च संपदिः॥ ३-७३॥

विपन्ताः रविपन्तिः स्या क्षमे मंगलमादिशेत्।

प्रत्यरौशत् तु वृद्धिः स्यात् साधकसिद्धिसाधनम्॥ ३-७४॥

वधर्क्षे च वधोज्ञेयो मित्रर्क्षेमित्रवन्धनम्।

अतिमित्रे भवेत् सौख्यं ताराचक्रमिति स्मृतम्॥ ३-७५॥

विपद्वधप्रत्यरिश्च परित्याज्यामणीषिभिः।

निजनामाधिकं वर्णं दामायः पुरतः प्रिय॥ ३-७६॥

नामाद्यक्षरपर्यन्तं गणनीयश्च सूरिभिः।

इत्याज्ञातराशिविषयम्॥

ज्ञाते तु तदेव॥ ३-सिद्धार्थमाह॥

पूर्वापरायतां रेखा दत्वाद्दक्षिणोत्तरायतां च रेखा चतुष्टयं
दत्त्वा शष्टविंशतिकोष्ठे प्रवक्ष्यमाणक्रमेण पंचाशद्वर्णा लिखेत्।

तद्यथा।

अ आ अश्विनी देवगणः।

ई भरणी मानुषः। ई उ ऊ कृत्तिका राक्षसः।

ऋ ॠ ऌ ॡ रोहिणी मानुषः। ए मृगशिराः देवः।

ऐ आद्रा मानुषः। ओ औ पुनर्वसु देवः।

कः पुष्य देवः। ख अश्लेषा राक्षसः।

घ ङ मघा राक्षसः। य पूर्वाफाल्गुणी मानुषः।

झ ञः हस्तः देवः। ट ठ चित्रा राक्षसः।

द् स्वाति देवः। ढ ण विशाखा राक्षसः।

त थ द अनुराधा देवः। ध ज्येष्ठा राक्षसः।

न प फ मूलं राक्षसः (रा * * ?)। रः।

?????

१३ ब) लोकलोपपटुः प्रायः खलौघो भेषु भेदितः॥ ३-७७॥

वर्णाः क्रमात् स्वरान्त्यौ तु रेवत्यं शगतो तदा।

गवाक्षतन्त्रे।

प्रायं सोमं गुणं वेदं रूपं रूपं यमं शशि॥ ३-७८॥

प्रायं प्रायं तथा चंद्रं त्रिप्रायं सोमयुग्मकम्।

गुणैकः गुणत्रिःसोमयमान्ते सोमखं गुणाः॥ ३-७९॥

वेदचेति न्यसेदेकं तत् संख्यं च न्यसेल्लिपिः।

स्वनामाद्यक्षरस्य नक्षत्रेण मन्त्राद्यक्षरस्य विचारः॥ ३-८०॥

रसाष्टनवभद्राणि युग्मयुग्मप्रभेदताः।

इतराणि नभद्राणि ज्ञातव्यं मन्त्रकोविदैः॥ ३-८१॥

तथा च तन्त्रचूडामणौ॥

आरभ्यजन्मनक्षत्रं तन्त्रतारावसानिकम्।

युग्मं तावद्वयं चतुष्टयमित्यादि॥

इति नक्षत्रचक्रम्॥

अ आ

इ

ई उ ऊ

ऋ ॠ

ए

ऐ

ओ औ

क

ख ग

अश्विनी

भरणी

कृ

रो

मृ

आ

पु

ति

अश्लेषा

रेवती

तथा च गंधर्वतन्त्रे॥

मन्त्रं वक्ष्यकनमाख्यं ससिद्धं सर्वसिद्धिदम्॥ ३-८२॥

मन्त्राणां ग्रहणे मन्त्री सर्वथा तं विचारयेत्।

राशिचक्रे लिखेन्मन्त्री सर्वथा तं विचारये वर्णाक्लीववर्जितान्॥ ३-८३॥

१४अ) अकारादिक्षकारान्तान् विलिखेत् क्रमतः सुधीः।

आदिकोष्ठे यथा वर्णा गायते क *? माः क्रमात्॥ ३-८४॥

विलिख्ये गणये जप्तु नामाद्यक्षरपूर्वकम्।

सिद्धिसाध्यसुसिद्धानि क्रमेणैव पुनः पुनः॥ ३-८५॥

यदि मन्त्रो न सोभन्ते विचारेण कथं च न।

तदा निषेधमाश्रित्य गृहणीयान् मन्त्रमुत्तमम्॥ ३-८६॥

अन्यच्च॥

अकारादिक्षकारान्तं दक्षमार्गक्रमेण तु।

मेषादितापि नीरातं गणयेत् क्रमतः सुधीः॥ ३-८७॥

जप्त्वा स्वनामतो मन्त्री यावन्मन्त्राद्यमक्षरम्।

सिद्धसाध्यसुसिधारि क्रमेणैव पुनः पुनः॥ ३-८८॥

इति षडमन्त्रचक्रम्॥

इदं तु गोपालविषयेम्॥

उक्तं पाषांदाङ्कुशे॥

उदिताख्यं महाच्चक्रं कथयामिसमासतः।

षड्कोणं विलिखेच्चक्रं समरेखं मनोहरम्॥ ३-८९॥

पूर्वादिविलिखे वर्णा नादिक्षान्तां न्यठा क्रमात्।

उदिते समदुदिष्टा द्वितीये संपदां क्षयः॥ ३-९०॥

तृतीय च धृतिं विंद्याच्चतुर्थे वंधुविष्णवः।

पंचमे संसयात्मा स्यात् षष्ठे सर्वविनाशकः॥ ३-९१॥

(चित्रम्)

१४ब्) स्वनामाद्यक्षरादि मन्त्राद्यक्षरपर्यन्तं गणनीयम्।

अथ गणचक्रम्॥

योगिणीतन्त्रे॥

पूर्वोत्तरत्रयं पश्चा भरण्याद्रार्थरोहिणी।

इमानिमानुष्यान्याहु नक्षत्राणि मणिषिणः॥ ३-९२॥

ज्यष्ठाशतभिषङ्मूल धनिष्ठाश्लेषकृत्तिका।

चित्रामघाविशाखाः स्यु ताराराक्षसदेवताः॥ ३-९३॥

अश्विनीरेवतीपुष्य स्वातिहस्तपुनर्वसुः।

अनुराधामृगशिलाः श्रवणाद् एव तालकः॥ ३-९४॥

इदं चक्रं नक्षत्रचक्रान्तर्गतं ते नैवास्य चरितार्थत्वात्।

पृथगुपादानं तु संसदायानुरोधात्॥

(चित्रम्)

इति गणचक्रम्॥ अथ नाडीचक्रं॥

तथा च तन्त्रे॥

एकनाडी स्थिता यस्य गुरुमन्त्राश्च देवताः।

तत्र द्वेषोरुजं मृत्युं क्रमेणफलमादिशेत्॥ ३-९५॥

नक्षत्रमेकं यदि भिन्नराशिर्नदंयती तत्र शुभं लभेताम्।

अभिन्न ऋष्यं यदि चैकराशि तदा शुभं स्यान् मुनयो वदन्ति॥ ३-९६॥

तथा च ज्योतिषे॥ ३-सर्पाकोरोघटनविशेषः॥

१५अ) कृर्त्तिकमुखयमदैव ------------------------------------ तशेषः।

पृष्ठेसु तहतन्मध्यरोगः।

रेखा भिन्ने यदुद्वाहो वहुधं न सुतवदति वराहः।

एतद् वचनस्यान् मुलत्वाद् विवाहप्रकरणीयत्वान् नेष्वन्तर्भाव इति॥

तथापि संप्रदायानुरोधाल्लिखितम्।

इति नाडीचक्रम्।

आदौ कुलाकुलं चक्रं नकथाख्यं द्वितीयकम्।

तृतीयं ऋणधनाख्यं चतुर्थं वर्गसंज्ञकम्॥ ३-९७॥

पञ्चमं राशिचक्रं स्यात् षष्ठं नक्षत्रचक्रकम्।

सप्तमं गणचक्रं स्याद् अष्टमकडेम स्मृतम्॥ ३-९८॥

नवमं मुदितं चक्रं दशमं नादिकाङ्कटाम्।

उक्तं नानाविधं चक्रं नानातन्त्रस्य दर्शनात्॥ ३-९९॥

वाराहीतन्त्रे।

ताराचक्रं राशिचक्रं नामचक्रं तथैव च।

अत्र चे च्छेष्टमन्त्राणां नान्यचक्रं विचारयेत्॥ ३-१००॥

अथापवाद॥

तथा चोक्तं मग्निपुराणे।

हंसस्याष्टाक्षरस्यापि तथा पंचाक्षरस्य च।

नपुंसकस्य मन्त्रस्य सिद्धादीन्नेव शोधयेत्॥ ३-१०१॥

मन्त्रविद्याविभागेन त्रिविधामन्त्रजातयः।

मन्त्राः पुं देवता ज्ञेया विद्यास्त्रीदैव स्मृता॥ ३-१०२॥

पुं स्त्री नपुंसकात्मानो मन्त्राः सर्वसमीरिताः।

हुँ मत्रा हुँ फदन्तः स्युर्द्विथान्ताः स्युस्त्रीयो मताः॥ ३-१०३॥

१५ब्) नपुंसकानमोन्ताः स्यु भिद्यन्ते मनवस्त्रियो धाशेस्त्रास्त्रेविधा
मन्त्रा वश्यसाम्त्यभिचारके।

विचार्यनियतं मन्त्री गृह्नीयात् सर्वसिद्धये।

मन्त्रं विना नैव सिद्धिः कुत्रापि जायते नृणाम्॥ ३-१०४॥

यामले॥

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च।

पिंडिताक्षरमन्त्राणां युक्ताक्षरमन्त्रणाम्॥ ३-१०५॥

तथा चोक्तं सारसंहितायाम्॥

तथैकारकूते च मालामन्त्रे तथैव च।

नित्यानां हंसमन्त्राणां सिद्धादीनिति।

तथा च गणेशविमर्षिण्याम्॥

एकाक्षरे तथा कूटे मालामन्त्रे त्रिवीजके॥ ३-१०६॥

स्वप्नलब्धे स्त्रियादत्त सिद्धादीनिति।

विंशत्यर्णाधिकामन्त्रा मालामन्त्रप्रकीर्तिता।

श्रीदेवीपुराणे॥

कारिकायां च तारायां कूल्लूकायां त्रिकूटके॥ ३-१०७॥

तथैकाक्षरकूटे च शिवपंचाक्षरे तथा।

षडक्षरे तु तस्यैव विष्णोरष्टाक्षरेपि च॥ ३-१०८॥

द्विष्णोद्वादशवर्णे च रामचन्द्रथतारके।

वैष्णवेषु च भैरव्यां सुन्दरी मन्त्रवर्यके॥ ३-१०९॥

सारस्वती च वालायां सिद्धादीन्नैव शोधयेत्।

वैष्णवेषु च मन्त्रेषु केचिदीच्छन्ति पण्डिता॥ ३-११०॥

वस्तुतस्तु॥

इदं प्रसंसापरम्।

अन्यथा दुरदृष्टव शाद्दसामन्त्रस्य प्राप्त्या।

पश्चाराधना * * (?) त्॥

अथ सा सफलां (?) वक्ष्य यामलोक्तक्रमेण तु॥ ३-१११॥

यज्ज्ञात्वा मानवा नित्यं प्राप्नुयुर्मासजं फलम्।

१६अ) वैशाषे तु सुभा दीक्षा विपुलां श्रियमादिशेत्॥ ३-११२॥

एष्ठ मृत्युप्रदा चैव आखाढसुसंपदः।

श्रावणे रत्नहानि स्या भाद्रे दुःखप्रदानता॥ ३-११३॥

आश्विनी रत्नसिद्धिः स्या कार्त्तिके ज्ञानसिद्धिदा।

मार्गशिर्षे सुखावाप्तिः पौषज्ञानविनाशिनी॥ ३-११४॥

मेधा वृद्धिकरी माघे फाल्गुणे सर्ववश्यकृत।

चैत्रे पीडा प्रदा चैव मलमासं विवर्जयेत्॥ ३-११५॥

चैत्रे तु मासविषयं गौतमीतन्त्रोक्तात्।

तथा च॥

मधुमासे भवेद्दीक्षा यत्यादि वचनान् नान्यत्रनिषेदः॥

दीक्षाकालं वक्ष्यामि साधकानां सुखावहम्।

देवीपुराणे॥

शरत्काले च वैशाषे दीक्षा श्रेष्टफलप्रदा॥ ३-११६॥

फाल्गुणे मार्गशीर्षे च ज्येष्ठे दीक्षा तु मध्यमाः।

आषाढे माघमासे च कनिसा प्रकीर्तिता॥ ३-११७॥

निंदिता श्रावणे पौषे तथा भाद्रपदेषु च।

निंदितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा॥ ३-११८॥

विषयेप्येय न द्वंद्वे संक्रान्त्या मदनोत्सव।

दीक्षाकार्याष्टका काले पवित्रे गुरुपर्वणि॥ ३-११९॥

गुरुपर्वाह॥

वसिष्ठसंहितायाम्॥

षष्ठे भाद्रपदे मासि इषे कृष्णा चतुर्दशे।

कार्त्तिके नवमीशुक्ला तृतीयामार्गशिर्षके॥ ३-१२०॥

पौषस्य नवमीशुक्ला माघे चैव चतुर्थिकाः।

फाल्गुणे न * मी शुक्ला चैत्रकामत्रयोदशी॥ ३-१२१॥

१६ब) वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तथा।

आषाढे पंचमे शुक्ला श्रावणे कृष्णपंचमी॥ ३-१२२॥

एतानि गुरुपर्वाणि तीर्थान्याहुमणीषिणः।

श्रीमन्त्रमुक्तावल्याम्।

शुक्लपक्षप्रकुर्वीत कृष्णे वा दैशिकोत्तमः॥ ३-१२३॥

शुक्ले सर्वसमृद्धिः स्यात् कृष्णे मध्यमतो भवेत्।

राजमार्त्तंदेय॥

गुर्वर्कभार्गपौशुद्धौ दीक्षारिद्रकारिणी॥ ३-१२४॥

शुभेह्निशुभलग्ने च दीक्षैश्वर्यप्रदायिनी।

रुद्रयामले॥

शुक्लपक्षे शुभादीक्षा कृ।क्ने त्यापंचमादितात्॥ ३-१२५॥

क्षीणेन्दौ व्रतदीक्षां च न कुर्यात् मत्रवित्तमः।

शरत्काले युगाद्यायां ग्रहणे चंद्रसूर्ययोः॥ ३-१२६॥

आराधने च दुर्गायाः कुर्याद्दीक्षां प्रसन्नधीः।

व्रह्मवैवर्त्ते॥

संक्रान्त्यां ग्रहणद्वन्द्वे दीक्षां कुर्यात् सदा वुधः॥ ३-१२७॥

सूर्यग्रहणकालस्य समाना नास्ति भूतले।

अत्र यद्यत् कृतं कर्म अनन्तफलदं भवेत्॥ ३-१२८॥

नवारतिथिमासाद्य शोधनं सूर्यपर्वणि।

सूर्यग्रहणकाले च रविसंक्रमणे तथा॥ ३-१२९॥

अत्र लग्नादि शुद्धिं च न कुर्यात् मन्त्रवित्तमः।

वृहमत्स्यसूक्ते॥

ग्रहणे च तथा तीर्थे नास्तिकालस्य निश्चयः॥ ३-१३०॥

सन्तीर्थेर्क्कविधौग्रासे दन्तधावनपर्वणि।

मन्त्रदीक्षा प्रकुर्वाणो मासदीक्षान्नशोधयत्॥ ३-१३१॥

ज्येष्ठस्य शुक्लद्वादश्यां तन्तुपर्वाभिधीयते।

१७अ) चैत्रस्य शुक्लद्वादश्यां दमनं परिकीर्त्तितम्॥ ३-१३२॥

शशिदिनकरयोग्रहणे जन्मणिशिस्यस्य मकरसंक्रान्त्याम्।

करुणा समय च गुरो नैक्षी तर्क्षादिदीक्षायाम्॥ ३-१३३॥

सोमग्रहे विष्णुमन्त्रे सूर्यशाक्तं न चाचरेत्।

अथवान्यप्रकारेण दीक्षाग्रहणमुत्तमम्॥ ३-१३४॥

शिष्याना हुयगुरुणा कृपया दीयते यदा।

तदा लग्नादिकं किंचिन् न विचार्यं कथं च न॥ ३-१३५॥

सर्वे वाराग्रहाः सर्वे नक्षत्राणि च राशयः।

यस्मिन् न हनि सन्तुष्टो गुरुः सर्वेशुभावहाः॥ ३-१३६॥

सन्तुष्टे हि गुरौ यत्र सन्तुष्टः सर्वदेवताः।

यदैवेद्या तदा दीक्षा गुरोराज्ञानुरूपतः॥ ३-१३७॥

नकारनियमस्तत्र न देशनियमस्तथा।

गुरुसन्तोषये भक्त्या स्वयमेव तथा भवेत्॥ ३-१३८॥

अथ तिथिफलम्

अथ तिथिफलं वक्ष्य यामलोक्तक्रमेण तु।

प्रतिपत्संस्कृता दीक्षा ज्ञाननाशकरीमता॥ ३-१३९॥

द्वितीयायां भवज्ञानं तृतीयायां शुचि भवेत्।

चतुर्थ्यां धननाशः स्या पंचम्यां वुद्धिवर्द्धनम्॥ ३-१४०॥

षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमी दिने।

अष्टम्यां बुद्धिनाशः स्यान् नवम्यां मरणं भवेत्॥ ३-१४१॥

दशम्यां राजसौख्यं च एकादश्यां शुचि भवेत्।

१७ब्) द्वादश्यां सर्वसिद्धिः स्या त्रयोदश्यां दरिद्रता॥ ३-१४२॥

तिर्यग्योनिचतुर्द्दश्यां क्रिमिमासावसानके।

पक्षा ते धर्मसिद्धिः स्या दत्वाध्यायं विवर्जयेत्॥ ३-१४३॥

संध्या गर्जितनिर्घोष भूकंपोत् कानिपातिने।

त्रिरात्रं वर्ज्जयेन् मन्त्री श्रुत्युक्तानपिवर्जयेत्॥ ३-१४४॥

तथा च वशिष्ठसंहितायाम्॥

द्वादश्यां मपि कर्त्तव्यं त्रयोदश्यां मथापि वा।

त्रयोदशिविधानं य तद् विष्णुविषयं तथा॥ ३-१४५॥

द्वादश्यामपि रामार्च्चनचंद्रिका धृतवचनात्।

त्रयोदशी च देशमी प्रशस्ता सर्वकामदेति सनत्कुमारसंहिता धृतवचनाधृतितच्चिन्त्यम्॥

वालानां च फलं वक्ष्य सर्वतन्त्रानुसारत।

यवौ गुरौ तथा सोमे कर्त्तव्यं बुधशुक्रयो॥ ३-४६॥

रविवारे भवेद् वित्तं सोमशान्ति भवेन् तिल।

आयुरंगारकोहन्ति तत्र दीक्षां विवर्जयेत्॥ ३-१४७॥

बुधै सौन्द्रर्यमाप्नोति यशोहानिः शनश्वरे।

नक्षत्राणां फलं वक्ष्य द?क्षोक्तानां समासतः॥ ३-१४८॥

कृत्वा दीक्षां तु तत्रैव सदसत्फलमाप्नुयात्।

तथा च ज्ञानमालायाम्॥

अश्विनी रोहिणी स्वाति विशाखा हस्तभेषु च ज्येष्ठात्तरत्रयेक्षेवं कुर्यान्
मन्त्रभिषेचन।

रोहिणी श्रवणाद् राव धनिष्ठा चोत्तरात्रयम्॥ ३-१४९॥

पुष्या शतभिषक चैव दीक्षादिषु प्रकीर्त्तिता।

१८अ) तथा च यामले॥

अश्विन्या सुखमाप्नोति भरण्यां मरणध्रुवम्॥ ३-१५०॥

कृर्त्तिकायां भवेद्दुःखी रोहिन्यां वाह्यति भवेत्।

मृगशिर्षे सुखा वाप्ति राद्रायां वन्धुनाशनम्॥ ३-१५१॥

पुनर्वशौधनाः ध्यस्यात् पुस्यशत्रुविनाशनम्।

अश्लेषायां भवेन् मृत्यु मघा या दुःखमोचनम्॥ ३-१५२॥

सौन्दर्यं पूर्वफल्गुण्यां प्राप्नोति च न शंसयः।

ज्ञानं चोत्तरफाल्गुण्यां प्राप्नोति च न शंसयः॥ ३-१५३॥

ज्ञानं चोत्तरफाल्गुण्यां हस्ते चैव वली भवेत्।

चित्रायां ज्ञानसिद्धिः स्यात् स्नातौशत्रुविनाशिनी॥ ३-१५४॥

विशाखायां भवेत् सौख्यं अनुराधा व वुद्धिदा।

ज्येष्ठायां सुतहानिः स्यात् मूलायां कीर्तिवन्धनम्॥ ३-१५५॥

पूर्वखाढोत्तराखाढे भवतां कीर्त्तिदायके।

श्रवणे भवेद्दुःखी धनीष्ठायां दरिद्रता॥ ३-१५६॥

वुद्धिः शतभिखायां च पूर्वभद्रा सुखः प्रदाः।

सौख्यं चोत्तरभद्रायां रेवत्यां कीर्त्तिवर्द्धनम्॥ ३-१५७॥

दीक्षायोगं प्रवक्ष्यामि रुद्रयामलदेशिनम्।

शुक्लपक्षे शुभः कृष्णो दशाम्यन्तः शुभावहः॥ ३-१५८॥

व्यतिपातो वैधृतिश्चः दीक्षायोगसुखावहः।

शकुत्यादि च शुभदं विष्टिं यत्नेन वर्जयेत्॥ ३-१५९॥

व्यतिपातलक्षणमाह॥

श्रवणाश्विधनिष्ठाद्रा नागदैवतमस्तके।

यद्यमारविचारेण व्यतिपात स उच्यते॥ ३-१६०॥

१८ब) नागदैवतमश्लेषा मस्तके प्रथमाचरे।

कन्यायां यदि वा माता मेखभूमिजभानुजौ॥ ३-१६१॥

तामशी शनिवारेण सप्तमी कुंभभास्करे।

सूर्यग्रहणतैस्तुल्यो व्यतिपातोघनाशन॥ ३-१६२॥

दीक्षालग्नं प्रवक्ष्यामि रुद्रयामलदेशितम्।

वृषे सिंहे च कन्यायां धनुमीनाक्षलग्नके॥ ३-१६३॥

चंद्रतारानुकूले च दद्या दीक्षां सदा गुरुः।

स्थिलरग्ने विष्णुमन्त्रे शिवमन्त्रे चलं शुभम्॥ ३-१६४॥

विस्कु?भावगतं लग्नं शक्तिमन्त्रेषु शस्यते।

निषिद्धमासेषु तु तद् विशेषो मुनिभेदतः॥ ३-१६५॥

षष्ठरां भाद्रपदे इषे तथा कृष्णचतुर्दशी।

कार्त्तिके नवमीशुक्ला मार्गे शुक्लातृतीयका॥ ३-१६६॥

पौषे च नवमी शुक्ला माघे शुक्लचतुर्थिका।

त्रयोदशी इति पाठ॥

वैशाखे चाक्षया चैव ज्यष्ठे दशहरा तिथि॥ ३-१६७॥

आषाढे पंचमीशुक्ला श्रावणे शुक्लपंचमी।

एतानि देवपर्वाणि तीर्थकोटिफलं भवेत्॥ ३-१६८॥

मतातरं च।

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशीसिता।

ज्येष्ठे चतुर्दशी कृष्णा आखाढे नागपञ्चमी॥ ३-१६९॥

श्रावणैकादशी भाद्रे रोहिणी सहितास्तमी।

आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा॥ ३-१७०॥

कार्त्तिके नवमीशुक्ला मार्गशीर्षे तथा सिता।

षष्ठीचतुर्दशीपौषे माघेप्यकादशी सिता॥ ३-१७१॥

१९अ) फाल्गुणे च शिता षष्ठि चेति कालपिनिर्णयः।

योगिनीतन्त्रे॥

अयणे ग्रहणे चैव विषवे चंद्रसूर्ययोः॥ ३-१७२॥

रविसंक्रान्ति दिवसे युगाद्यायसुरेश्वरि।

मन्वन्तरासु सर्वासु महापूजादिते तथा॥ ३-१७३॥

चतुर्थी पंचमी चैव चतुर्दश्याष्टमी तथा।

तिथयः शुभदाः प्रोक्ता इत्यादिवचनाच्च चतुर्दश्यष्टमीति शक्तिविषयम्।

चतुर्थी तिथिगणेशविषयं तत् तत् कल्पोक्तत्वात्॥ ३-१७४॥

निन्दितेष्वपि कालेषु दीक्षोक्ताग्रहणे शुभा।

सूर्यग्रहणकालेस्य समानोनास्ति भूतले॥ ३-१७५॥

तत्र यद्य कृतं सर्वमनन्तफलदं भवेत्।

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा॥ ३-१७६॥

तत्र लग्नादिकं किंचित् तविचार्य कथं च न।

एवं चन्द्रग्रहणेपि तथा॥

अमावास्या सोमवाले भौमवाले चतुर्दशी॥ ३-१७७॥

सप्तमी रविवारे च सूर्ये पर्वशतैः समा।

वाराहीतन्त्रे॥

शुक्रोस्तोयदिवा वृद्धो गुर्वादिभ्यो भवेद् यदि॥ ३-१७८॥

मेषवृष्टिकसिंहेषु तदा दोषो न विद्यते।

दिक्षास्थानं प्रवक्ष्यामि नानातन्त्रानुसारत॥ ३-१७९॥

गोशालायां गुरोगेहे देवागारे च कानने।

षुण्यतीर्थे तथाद्याने नदीतीरे च स्वाश्रमे॥ ३-१८०॥

धात्री विश्वसमीपे तु पर्वताग्रे गुहाशु च।

गंगायां तत् कृतं सर्वं कोटि (को) कोटि गुणं भवेत्॥ ३-१८१॥

१९ब) अथ भक्ष्यं प्रवक्ष्यामि मन्त्रिणां सर्वसिद्धिदम्।

तथा चोक्तं शार्दातिलके॥

भक्ष्यं हविष्यं शाकादि विहितं च फलं पयः॥ ३-१८२॥

मूलसक्तु यवोत्पन्नो भक्ष्याण्येतानिमन्त्रिणाम्।

तथा चोक्तं सारसंग्रहे॥

दीक्षां कृत्वा यदा मन्त्री ह्युपवासं समाचरेत्॥ ३-१८३॥

तस्य देव सदारुष्टः शापं पतति मूर्द्धनि।

तदा गृहीता नोपोष्य दुपवासः श्रियं हरेत्॥ ३-१८४॥

तस्यादन्नं समग्नीयाद् धविष्यान्नेन शा करि।

इत्यागमकल्पलतायां तृतीयः पल्लवः॥ ॥ ३॥ ॥

तस्मात् सद्गुरुमाश्रित्य ह्यागमोक्तेन वत्मना।

दीक्षां कुर्यु प्रयत्नेन साधका सिद्धिः कांक्षिणः॥ ४-१॥

प्रसंगादागमस्य प्रसंसा लिष्यते।

नित्यपूजां विनिवर्त्य दंडवत् पुणमेद्गुरुम्॥ ४-२॥

ततश्च प्रणमेद् भानुं मातरं पितरं तथा।

ततोभिलषितां विद्या मभ्यसे गुरुसन्निधौ॥ ४-३॥

यदा यं सर्वशास्त्रार्थ ज्ञातेति च जगुर्वुधाः।

तदा लोकजयार्थं च ज्ञानशास्त्रं समभ्यसेत्॥ ४-४॥

न ज्ञानेन विना मुक्ति ज्ञानभक्तिविना न हि।

भक्तिस्तु भगवद्भक्त संगेन परिजायते॥ ४-५॥

वहुनिज्ञानशास्त्राणि सन्ती वक्ष्यंति मण्डले।

यस्य ज्ञानि मनोज्ञानि तानि तानि समभ्यसेत्॥ ४-६॥

एकेन मुनिना प्रोक्ताः प्रकारा वहवस्तथा।

किं तस्य किमतथ्ये वा नासत्यविकरा नराः॥ ४-७॥

२०अ) ते नागमं ज्ञानसास्त्रमभ्यसेत् प्रयतः सुधीः।

आगमे सर्वशास्त्राणि ह्यागमे सर्वदेवताः॥ ४-८॥

आगमे सकलं पुण्यं आगमे किं न लभ्यते।

अगमे सकलं ज्ञानं विद्याः सर्वा प्रतिष्ठिताः॥ ४-९॥

आगमे यन्न लभ्यत ब्रह्मन्ने तन्नलभ्यते।

आगतं शिववक्त्रा तु गतं तु गिरिजामुखम्॥ ४-१०॥

मलत्रयविनाशाय तस्माद्दागम उच्यते।

शरीरोत्पत्ति जीवं च मायाशालीलकर्मणाम्॥ ४-११॥

ज्ञानं तेनावृतं विद्धिर्भववंधप्रवर्त्तकम्।

शरीरोत्पादको विष्णुस्तद्भक्त्यास्तन्निकृन्तति॥ ४-१२॥

ज्ञानार्थं भक्तियोगस्य यत्नेनागममभ्यसेत्।

तस्मादीक्षां प्रकुर्वीतह्यागमोक्तेन वत्मना॥ ४-१३॥

अथ दीक्षा विधिं वक्ष्य मन्त्रिणांहितकाम्यया।

विना तयातलभ्यत सर्वमन्त्रफलं यतः॥ ४-१४॥

चतुर्विधा समुदिष्टा क्रियावत्यादि भेदतः।

क्रियावती वर्णमयी कलात्मावेदमप्यपि॥ ४-१५॥

तत्र क्रियावती दीक्षा वहुत्वान्न निगद्यते।

पुनर्वेदमयी योग गम्याशिष्यप्रवोधिनी॥ ४-१६॥

अथ कलावती दीक्षा विधानं चाभिधीयते।

तथा च शारदातिलके॥

दैशिकोविधिवन्स्नात्वा कृत्वा पूर्वाह्निकीः क्रिया॥ ४-१७॥

या या दलं कृतो मौनी यागार्थे यागमंडपम्।

ततो भूमितले शुद्धे तुषाङ्कारविवर्जिते॥ ४-१८॥

पुण्याहं वाचयित्वा तु मंडपं रचयेच्छुभम्।

२०ब) षंचभिः सप्तभिहस्ते नवभिर्वामितान्तरम्॥ ४-१९॥

षोडशः स्तंभयं युक्तं चत्वारस्तेषु मध्यगाः।

अस्त हस्त समुच्छायाः संस्थाप्य द्वादसाभितः॥ ४-२०॥

पंचहस्तप्रमाणास्ते निच्छिद्रा ऋजवः शुभाः।

तत् पंचमाणं निस्वनेन् मदिन्यां तन्त्रवित्तमः॥ ४-२१॥

तत् पचमाणं तेषां स्तंभानां पंचमाशं मित्यर्थः।

नारकेरदलैर्वंशेः साधये तत् समं ततः।

द्वरेषु तोरणानिस्युः क्रमात् क्षीरमहीरुहान्॥ ४-२२॥

तंभोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक्।

तेषां तोरणाकम्॥

दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः।

तिर्यकफलकमानं स्यात् स्तंभानामर्धमात्रतः॥ ४-२३॥

तिर्यकफलकमानं स्याद् इति स्तंभयो परिकाष्ठस्यति विशेषः॥

तंभानामर्धमान इति सार्द्धं त्रयमिति शेषः॥

शूलान्विकल्पयेन् मध्यतोरणे हस्तमानतः।

दिक्षुध्वजनिवध्नीया लोकपालसमप्रभान्॥ ४-२४॥

तथा चोक्तं शारदायाम्॥

इन्द्रमग्निं यमं लक्षो वरुणं पवनं विधुम्।

ईशानं यन्नगाधीशं अत ऊर्ध्वं पितामहम्॥ ४-२५॥

पीतो रक्तो सितो धूम्रः शुक्ले धूम्रशिता वुभौ।

गौरोरुणः क्रमादेत वर्णतः परिकीर्त्तिताः॥ ४-२६॥

कपिशकपिलनीलश्यामलश्वेतधूम्रामलशुचिसितवक्रा वर्णतो वासवाद्याः।

२१अ) क्रमदीपिकायाम्॥

चिता न दर्भमालाद्यैरलंकुर्वीतमण्डपम्।

तत् त्रिभागमिति क्षत्ते रत्निमात्रसमुच्छ्रिताम्॥ ४-२७॥

चतुरःश्रां ततो वेदिमंडलाय प्रकल्पयेत्।

तदुक्तं गौतमीयाम्॥

वेदिं संचयते मन्त्रि चतुश्री यथाविधि॥ ४-२८॥

शुक्लमृत्स्ना च या भूमि ब्राह्मी सा परिकीर्त्तिता।

क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्या प्रकीर्त्तिता॥ ४-२९॥

कृष्णा भूमिर्भवच्छिद्रा चतुर्द्धा परिकीर्त्तिता।

ब्राह्मी सर्वार्थसिद्धिः स्यात् क्षत्रिया राज्यदा मता॥ ४-३०॥

धनधान्यकरी वैश्या शूद्रा तु निन्दिता मुने।

प्रागेव दीक्षा दिवसान् मण्डपं कारयेत् सुधीः॥ ४-३१॥

चतुर्विंशत् पंगुसाढ्यं हस्तं तन्त्रविदोविदुः।

कर्तुदक्षिणहस्तस्य मध्यमाङ्गुलिपर्वर्णः॥ ४-३२॥

मध्यस्य दीर्घमानेन माताङ्गुलमुदीरितम्।

यवानान्तंदुलैलेकं अंगुलं चाष्टभि भवेत्॥ ४-३३॥

अदीर्घयोजितैर्हस्तश्चतुर्विंशाङ्गुलैभवेत्।

अस्तभिस्तै यवै ज्यष्ठं मध्यमं सप्तभिर्यवैः॥ ४-३४॥

कनिष्ठं षड्भिरुद्दिष्टं हस्तं च मुनिसत्तम।

सर्वतोभद्रवचनप्रकारमाह॥

चतुरश्रे चतुष्कोष्ठे कर्णसूत्रसमन्वित।

चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम्॥ ४-३५॥

मध्य मध्य यथा मत्स्या भवे युः पतयेत् तथा।

पूर्वापरायते द्वे द्वे मन्त्रीयामोत्तरायते॥ ४-३६॥

२१ब) पातयेत् तेषु मत्स्यषु समसूत्रचतुष्टयम्।

पूर्ववत् कोणकोष्ठेषु कर्मसूत्राणि पातयेत्॥ ४-३७॥

तद्वभूतेषु मत्येषु दद्यात्सूत्रचतुष्टयम्।

ततः कोष्ठेषु मत्स्येषु तेषु सूत्राणि पातयेत्॥ ४-३८॥

यावघटद्वयं मन्त्री षढ्ंचाशत्पदान्यपि।

तावर्त्ते नैव विधिना तत्र सत्राणि पातयेत्॥ ४-३९॥

षड्विंशतापदैर्मध्य लिखेत् पद्मं सुलक्षणम्।

वहिः पंक्त्या भवेत् पीठं पक्तियुग्मेन वीथिकाः॥ ४-४०॥

द्वारशोभोपशोभा स्त्रा नशिष्ठा परिकल्पयेत्।

शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत्॥ ४-४१॥

पद्मक्षत्रस्य सन्त्यज्य द्वादशांशं वहिः सुधीः।

तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः॥ ४-४२॥

आद्यं स्यात् कर्णिकाष्ठानं केसराणां द्वितीयकम्।

तृतीयं तत्र यन्त्राणा मुक्ताशेन दलाग्रकम्॥ ४-४३॥

वाह्यवृत्तान्तलालस्य मानंयद्विधिना सुधीः।

विधायकेशराग्रेषु परितोर्ध्वनिशाकरान॥ ४-४४॥

लिखित्वा संधिसंस्थाने तत्र सूत्राणि पातये।

दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत्॥ ४-४५॥

तदन्तलालं तन्मध्य सूत्रस्या भयतः सुधीः।

आलिखेद् वाह्यहस्तेन दलाग्राणि समन्ततः॥ ४-४६॥

दलमूलेषु यगणः केशलालि प्रकल्पयेत्।

एतत् साधारणं प्रोक्तं पंकजं तत्र वेदिभिः॥ ४-४७॥

पदातित्रीणिपादार्थ पीठिकोणेषु मार्जयेत्।

२२अ) अवशिष्टैः पदैर्विद्वान् गात्राणि परिकल्पयेत्॥ ४-४८॥

यदा निवीथिसंस्कारे माजरोत्पक्तिभेदतः।

दिक्षुद्वाराणि रेचयेद् द्विचतुष्कोष्ठकैस्ततः॥ ४-४९॥

पदैस्त्रिभिरथैकेन शोभाः स्यु द्वारपार्श्वयोः।

उपशोभाः स्युरकेन त्रिभिः कोष्ठैरणन्तरंः॥ ४-५०॥

अवशिष्ठैः पदैः षड्भिः कोणां नास्याच्चतुष्टयम्।

रंजयेत् पचभिर्वर्णैर्षडत्वं तन्मनोहरम्॥ ४-५१॥

पीतं हरिद्राचूर्णः स्यात् सितं तं दूरसंभवम्।

कुसुंभचूर्णमरुणं कृष्णं दग्धयुलोकजम्॥ ४-५२॥

विल्वादिपत्रकं श्यामं मित्युक्तं वर्णपंकजम्।

अंगुलोघेदविस्ताराः सेमा लेखाः सिताः शुभाः॥ ४-५३॥

कर्णिका पीतवर्णेन केशराण्यरुणे न च।

शुभ्रवर्णे च पत्राणि तत् संधीन् शामलेन च॥ ४-५४॥

उजसारं जयेन् मन्त्री जवापीतैरकर्णिका।

केसराः रक्तपीताः स्युररुणानिदलान्यपि॥ ४-५५॥

संधयेः कृष्णवर्णा स्युः पीतेनाप्यसिते न वा।

रंजयेत् पीठगात्राणि पादास्युररुणः प्रभाः॥ ४-५६॥

तात्राणि तस्य शुभ्राणि वीठीषु च तश्रीस्वेपि।

आलिखेत् कल्पलतिकादलपुष्पसमन्विताः॥ ४-५७॥

वर्णैनानाविधैश्चित्राः सर्वदृष्टिमनोहराः।

ताराणिश्वेतवर्णानि शोभारक्ताः समीरिताः॥ ४-५८॥

२२ब) उपशोभाः पीतवर्णाः केशान्यसितभानि च।

तिस्रोरेखा वहिः कार्याः सितरक्ताः सिताः क्रमात्॥ ४-५९॥

मंडलं सर्वतोभद्रामेतत् साधारणं स्मृतम्।

शिष्योपि तत्र वा गत्य शुचिः पूर्वमुपोषितः॥ ४-६०॥

संकल्पं च ततः कुर्यात् स्वस्तिवाचनपूर्वकम्।

पश्चाच्छिष्यो गुरुं तत्र वृणुयाभक्तिसंयुतंः॥ ४-६१॥

शक्त्यागुरुं भूषयद् वै वस्त्रालंकारभूषणैः।

गोभूहिरण्यवस्त्राद्यैः कुंडलादिभिरुज्ज्वलैः॥ ४-६२॥

अन्यैराभरणैश्चैव तथा वित्तमवंचयेत्।

गुरुं संपूजयेद् भक्त्या शिष्योसौ शुभ चेस॥ ४-६३॥

दंभाहंकारमानं च गुरोरग्रे विवर्जयेत्।

कृताञ्जलिप्लुतो भूत्वा प्रीनयेद्गुरुमग्रतः॥ ४-६४॥

अथातो भगवन् परमात्मस्वरूपिन् परमकारुणिक गुरो सकलपुरुषाय साधनमन्त्रदीक्षाभिषेकपूर्वकं सांप्रसादय॥

इत्युक्त्वाथचिरं तिष्ठेद् विनयी दक्षिणे गुरोः।

सहस्त्रं प्रजपेत् तत्र गायत्रीमाज्ञया गुरोः॥ ४-६५॥

वक्ष्यमाणक्रमे नात्र संकुर्यान् मन्त्रमुत्तमम्।

गुरोरिति शेष॥

संस्कृत्य दशधामन्त्र ततः पूजां समारभे॥ ४-६६॥

पादौ प्रक्षालयेद् गत्वा ततो मंडपसन्निधीम्।

आचम्य विधिना सम्यक् सामान्यार्घं विधाय च॥ ४-६७॥

अस्त्रेण पात्रं संप्रोक्ष्य हृन्मन्त्रेणप्रपूरयेत्।

२३अ) तीर्थमावाह्यगंधादीन् निक्षिप्ये प्रणवेन तु॥ ४-६८॥

धेनुमुद्रां दर्शयेच्च सामान्यार्घं उदाहृतः।

द्वारमन्त्रां वुभिः प्रोक्ष्य द्वारपूजां समाचरेत्॥ ४-६९॥

उर्ध्वादुवनकेविघ्नं मलालक्ष्मीं सलस्वतीम्।

ततो दक्षिणशाखायां विघ्नं क्षत्रैशमन्यतः॥ ४-७०॥

ततो पार्श्वयुगे गंगा युमुने पुष्पवारिभिः।

देहत्यामर्च्चयेदस्त्रं प्रतिद्वारमिति क्रमात्॥ ४-७१॥

किंचित् पृशत्वामशाखां देहलीलंघयेद्गुरुम्।

अंगं संकोचयन्नन्तः प्रविशेदक्षिणाद् त्रिणा॥ ४-७२॥

अनन्तरं दैशिकेन्द्रा दिव्यदृष्ट्यावलोकनात्।

दिव्यानुत्सारयेद् विघ्नाद् अष्टाभिश्चान्तरिक्षगान्॥ ४-७३॥

पारिर्घातैस्त्रिभिभौमा नितिविघ्नान् निवारयेत्।

सिर्द्धार्थाक्षतसंयुक्तं नाराचास्त्रधिया वुधः॥ ४-७४॥

अपसर्पं तु यद् भूता ये भूता विघ्नकर्तारस्तेनश्यन्तु शिवाज्ञयाः॥

इत्यन्ते स्त्रं समुर्च्चार्य मंडपान्तः परिक्षिपेत्।

नैऋत्यां दिशिवास्त्वीशं ब्रह्माणं च समर्चयेत्॥ ४-७५॥

पंचगर्व्यार्घतो याभ्यां प्रोक्षयेद् यागमंडपम्।

वीक्षणं मुलमन्त्रेण शरेणप्रोक्षणं मतम्॥ ४-७६॥

ते नैव ताडनं दंभै वमणात् युक्षणं मतम्।

चंडनागुरुकपुरै धुपैर्यदन्तरं सुधीः॥ ४-७७॥

विकिरान्विकिरा तत्र सप्तजप्त्वा शरानुना।

राजा चंदनसिद्धार्थ भस्मदुर्वांकुशाक्षतः॥ ४-७८॥

२३ब) विकिरा इति संदिष्टाः सर्वं विघ्नौघनाशन (ं)ः।

विकीर्यविकिरान्यं च मार्जनं कारयेत् सुधीः॥ ४-७९॥

अत्र जप्तेन दर्भानां मुष्टिमाणार्जयेर्चताम्।

ईशस्य दिशिवर्धन्या आसनाय प्रकल्पयेत्॥ ४-८०॥

वधिर्नी विकिरादिष्टा तृदेवता॥

तस्य आसनाय वर्द्धिनीमीशानकोनकोणे विस्तरो परिवदना।

इति यस्या प्रसिद्धि॥

पुण्याहं वाचयित्वा तु ब्रह्मणान् परितोष्य च।

उक्तेषु मंडलेष्वेकं वेदिकायां समालिखेत्॥ ४-८१॥

मेरुपृष्ठ-ऋषिः छन्दः पृथिव्याः सुतलं मतम्।

देवता कूर्म आख्यातः संस्मरे दृष्टिपूर्वकम्॥ ४-८२॥

विनियोगो हि मन्त्रस्य आसने परिकीर्तिताः।

वृश्चि त्वया धृता लोके देवि त्वं विष्णुना धृता॥ ४-८३॥

त्वं च धारय मां नित्यं पवित्रं कुरु चासनम्।

इति मन्त्रं जपन्पीठे प्राङ्मुखो वाप्युदङ्मुखः॥ ४-८४॥

स्वस्तिकादिक्रमेणैव ऋजुकायो विशेद्बुधः।

स्थापयेद् दक्षिणे भागे पूजाद्रव्याणिदैशिकः॥ ४-८५॥

सुवासितां वुसंपूर्णं सव्यकुंभं सुशोभितम्।

प्रक्षालनाय करयेः पृष्ठे पात्रं निधापयेत्॥ ४-८६॥

घृतप्रज्वालिता द्वीपान् स्थापयेत् परितः शुभान्।

दग्धनं चामरं छत्रं तात्त वृत्तं मनोहरम्॥ ४-८७॥

२४अ) कृताङ्जिलं प्लुतो भूत्वा वामदक्षिणपार्श्वयोः।

नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत्॥ ४-८८॥

यामले॥

तथा पुटांजलि भूत्वा वामे गुरुत्रयं जयेत्।

दक्षिणे च गणेशानं भूतशुद्धिं समाचरेत्॥ ४-८९॥

यामले॥

तथा पुटांजलि भूत्वा वामे गुरुत्रयं जयेत्।

दक्षिणे च गणेशानं मुद्भिर्ध्नदेवं विभावयेत्॥ ४-९०॥

करशुद्धिं समापात्य कुर्यान्तालत्रयं ततः।

उर्द्ध्वोर्ध्वमन्त्रमन्त्रेण दिग्धंधमपि देशिकम्॥ ४-९१॥

तेन संजनितं तेजो रक्षां कुर्या समन्ततः।

भूतशुद्धिं ततः कुर्याद् दैशिकः स्थिरमानसः॥ ४-९२॥

तथा चोक्तं सारदायाम्॥

शरीरकारभूतानां भूतानां यद् विशोधनम्।

अद्वयद् ब्रह्मसंयोगा भूतशुद्धिरियं मत॥ ४-९३॥

सुषुमना वस्मणात्मानं परमात्मनियोजयेत्।

योगयुक्तेन विधिना चिन्मन्त्रेणसमाहितः॥ ४-९४॥

चिन्मन्त्रेण हंस इति मन्त्रेण॥

कारणे सर्वभूतानां तत्त्वान्येषि विचिन्तयेत्।

वीजभावेन लीनानि व्युत्क्रमात्यरमात्मनि॥ ४-९५॥

ततः संशोषयेद् देहे वायुवीजेन वायुना।

वह्निबीजेन ते णैव संदहेत् सकलं तनुम्॥ ४-९६॥

विश्लेषयं तदा दोषा न मृते नामृतांभसा।

आपाद्यप्लावयद् देहं आपादतलमस्तकम्॥ ४-९७॥

वायुवीजेन यमिति वीजेन वह्निवीजं अमृतममृतवीजं व मित्यर्थः॥

२४ब्) आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत् ततः।

आत्मानं हृदयां भोज मानयेत् परमात्मनः॥ ४-९८॥

मनुना हंसदेवस्य कुर्यान् न्यासादिकां ततः।

हंसदेव हंस इति स्वरूपम्॥

ऋषिच्छंदो देवतानि न्यसेन् मन्त्रस्य मन्त्रवित्॥ ४-९९॥

आत्मनो मूर्द्धि वदने हृदये च तथा क्रमात्।

तथा वृहमत्स्यसूक्ते॥

ऋषिन्यासो मूर्द्धिदेशे छंदस्तु मुखपंकजे॥ ४-१००॥

देवता हृदये चैव वीजं तु गुह्यदेशके।

शक्तिं च पादयोश्चैव सर्वाङ्गे किलकं न्यसेत्॥ ४-१०१॥

ऋषिस्तु॥

महेश्वरमुखा ज्ञात्वा यः साक्षात् तपसामनुम्।

संसाधयति शुद्धात्मा सतस्य ऋषिरीरितः॥ ४-१०२॥

गुरुत्वान् मस्तके वास्य न्यासस्य परिकीर्तितः।

सर्वेषां मन्त्रतत्वानां छादनाच्छद् उच्यते॥ ४-१०३॥

अक्षरत्वात् परत्वा च मुखे छंदः समीरितः।

ऋषिः छंदो परिज्ञानान् नमन्त्रः फलभाग्भवेत्॥ ४-१०४॥

दौर्वर्त्यं याति मन्त्राणां विनिजोगमजानताम्।

इति ऋष्यादि न्यासावश्यकत्वं सिद्धमिति भाव॥ ४-१०५॥

ऋष्यादिनाह॥

मन्त्रचूडामणौ॥

उपासकान् महादेवि श्रृणु वैः कमनास्वयम्।

मनुश्चंद्रः कुवेरश्च मन्मथस्तदनन्तरम्॥ ४-१०६॥

लोपामुद्रा मनुर्नंदिः शक्रः स्कंधशिवस्तथा।

क्रोधभट्टालकश्चैव पंचमी परिकीर्तिता॥ ४-१०७॥

दूर्वासा व्यास पूज्यो च वशिष्ठश्च पराशरः।

२५अ) और्वो वह्निर्यमश्चैव नै-ऋतो वरुणस्तथा॥ ४-१०८॥

वायुविष्णुः स्वयंभुश्च भैरवा गणपस्तथा।

अनिरुद्धो भरद्वाजो दक्षिणामूर्तिरेव च॥ ४-१०९॥

वटुको गणपश्चैव लक्ष्मी गंगा सरस्वती।

धात्री शिवः प्रसस्तश्च (?) उन्मत्तकुलभैरव॥ ४-११०॥

धात्री धरित्री क्षत्रपालो हनुमाश्च दक्षो गरुड एव च।

शुकदेवश्च प्रह्लादो रामो रावणमेव च॥ ४-१११॥

कश्यपो कौस्सकुंभौ च जमदग्नि भृगुस्तथा।

वृहस्पति यदुश्रेष्ठो दत्तात्रेयो युधिष्ठिरः॥ ४-११२॥

अजुनो भीमसेनश्च द्रोणाचार्या जयद्रथ।

दुर्योधनस्तथा कुन्ती सीतो च रुक्मिणी तथा॥ ४-११३॥

सत्यभामा द्रोपदी च उर्वशी च तिलोत्तमा।

पुष्पदन्तो महाबुद्धो वाणकालश्च मंडरः॥ ४-११४॥

कैलास इक्षुसिंधुश्च उदधी हिमवांस्तथा।

यादवश्च महावीरः कल्पवृक्षः ससाधकः॥ ४-११५॥

महाविद्या प्रसादेन स्वस्वकाम समन्वितः।

महाविद्या माह॥

तथा च मुण्डमालातन्त्रे॥

काली तारा महाविद्या षोडशी भुवनेश्वरी॥ ४-११६॥

भैरवी च्छिन्नमस्ता च विद्या धूमावतीस्तथा।

वगला सिद्धविद्या च मातंगी कमलात्मिका॥ ४-११७॥

एता दशमहाविद्या महादेवि प्रकीर्तिताः।

विधायमूलमन्त्रेण प्राणायामं यथा विधि॥ ४-११८॥

प्राणायामस्य लक्षणमाह॥

त्रिपुरासारसमुचय॥

२५ब) प्राणो वायुशरीरस्थ आयामस्तस्य निग्रहः।

प्राणायाम इति प्रोक्तो द्विविधः कथ्यते हि सः॥ ४-११९॥

स गर्भो निर्विगर्भश्च॥

सगर्भो मन्त्रजापे निगर्भा मात्रया भवेत्।

अगस्त्ये संहितायां तत् कथितं कुंभजेन च॥ ४-१२०॥

मात्रा च॥

नलिनी पत्त्रसंहत्यां शूक्ष्मसूव्यग्रभेधने।

दले दले च येः कालः सकालो कालवाचकः॥ ४-१२१॥

लवैस्तुतिश्च त्रिंशद्भिः कलान्ता व तुटि विदुः।

काष्ठ तावत् कला ज्ञेयास्तावत् काष्ठानि मेषकः॥ ४-१२२॥

स्वाङ्गुलिस्फोटतुल्यश्च मात्रास्ता दशभिः स्मृता।

कालेन यावतास्वीयो हस्तं (ः) स्वंजानुमण्डलम्॥ ४-१२३॥

पर्यतिमात्रा मातस्याः स्वकीयस्वासतुल्यया।

अथवा मजानुमीति मात्रा च॥

वामजानुर्निहस्तस्य भ्रमणं यावता भवेत्॥ ४-१२४॥

कालेन मात्रा सा ज्ञेया। मुनिभिर्ष्वेदपारगै।

यामले॥

प्राणायां ततः कुर्याद् वाग्भवेन समाहितः॥ ४-१२५॥

दक्षाङ्गुष्ठेन दक्षं च घोणं संपीड्यमन्त्रवित्।

इद्या पुरयेद् वायुं मात्रा षोडशभिः क्रमात्॥ ४-१२६॥

अंगुष्ठा नामिकाभ्यां च धृत्वा नासाद्वयं ततः।

ततः स्तुम् कुम्भयेद् वायुं पूरकानां चतुर्गुणैः॥ ४-१२७॥

अनामया तथा वाम नामां धृत्वा तु दक्षिणे।

द्वात्रिंशद्भिस्तु मात्राभिर्वायोश्च रेचनं चरेत्॥ ४-१२८॥

२६अ) स्वचित्तं मूलचक्रे तु निधायासूत्समभ्यसेत्।

ततो रेचनमार्गेन प्राणवायु प्रपूरयेत्॥ ४-१२९॥

पुनः षोडशमात्राभिः कुंभकं च समारभेत्।

ततो रेचनमार्गेन प्राणवायुं प्रपूरयेत्॥ ४-१३०॥

पुनः षोडशमात्राभिः कुंभकं च समाचरेत्।

चतुःषष्ठितमैमन्त्री नासापुतौ विधृत्य च॥ ४-१३१॥

पुनश्चरे च येद् वायुं द्वात्रिंशन् मात्रया वुधः।

वामेणैवपि वेद् वायुं मात्राभिः षोडशः क्रमात्॥ ४-१३२॥

नासापुतौ निपीड्याथ पूरकस्य चतुर्गुणैः।

दक्षिणे रेचयेद् वायुं द्वात्रिंशन्मात्रया वुधः॥ ४-१३३॥

वामेणपाणिं दक्षिणे रेचनमिति तत् प्रथमप्राणायामम्।

यामांभि प्राणायामावृत्त्या तु ततद् संभवति॥ ४-१३४॥

प्राणायामविधिं सम्यक् कथितं यत्नतो मया।

अधमोमध्यमाश्चैव प्राणायामस्तथोत्तमः॥ ४-१३५॥

अधमोजनये धर्मं कंपो भवति मध्यमे।

उत्तमे खेचरीं सिद्धिं प्राप्नुयान् नात्र संशयः॥ ४-१३६॥

प्राणायामैः कृतैः शश्वनित्यं षोडशभिः सुधीः।

दैनं दिनं च यत् पापं तत् सर्वं नश्यति ध्रुवम्॥ ४-१३७॥

कनिष्ठानामिकांगुष्ठैर्यन् नासापुटधारणम्।

प्राणायामः सविज्ञेयस्तर्जनीमध्यमे विना॥ ४-१३८॥

प्राणायामेण पापाणि नस्वन्त्यं यन संशयः।

प्राणायामत्रयं कुर्यात् प्रत्यहं मूलमन्त्रतः॥ ४-१३९॥

जपातौ च जपाते च साधकः सिद्धिकांक्षया।

२६ब) विदन्या मातृका न्यासं मन्त्रं न्यासादनन्तरम्॥ ४-१४०॥

अंगुष्ठादिष्वंगुलेषु न्यसेदंगैः सजातिभिः।

जातयश्च नमः स्वाहा वषट् हुं वषट् फड्कराः॥ ४-१४१॥

एवं च॥

जातिषड्कमिति प्रोक्तं हृदाद्यस्तान्तसंयुतम्।

अस्त्रं तु तलयोन् यस्य कुयात्तारत्रयादिकम्॥ ४-१४२॥

दिशस्ते नैव वह्नीयाच्छोतिकाभिः समाहितः।

हृदयादिषु विन्यस्य दंगमन्त्रास्ततः सुधीः॥ ४-१४३॥

हृदयाये नमः पूर्वं शिरसे वह्निवल्लभा।

शिखायै च षडित्युक्तं कवचाय हुं मीरितम्॥ ४-१४४॥

नेत्रत्रयाय वौषट् स्याय फडिति क्रमात्।

वह्निवल्लभा स्वाहा॥

षडंगमन्त्राणित्युक्त्वा षडंगेषु नियोजयेत्।

अनुक्ता षडंगस्य॥

पंचाङ्गानि मनो यस्य तत्र नेत्रमनुं त्यजेत्॥ ४-१४५॥

अंगहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत्।

स्वेन च मूलमन्त्रेणैव॥

तत् तत् कल्पोक्तविधिना न्यासातन्यान् समाचरेत्॥ ४-१४६॥

कल्पयेद् आत्मनो देहे पीठं धर्मादिभिः क्रमात्।

अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्ये व देशिकः॥ ४-१४७॥

धर्मं ज्ञानं सवैराङ्गं ऐश्वर्यं विन्यसेत्क्रमात्।

धर्मादयः स्मृताः पादाः पीठगात्राणि वा परे॥ ४-१४८॥

मुखपाश्वनाभिपार्श्वे ष्वधर्मादीन् प्रकल्पयेत्।

अनन्तं हृदये पद्मसस्मिन् सूर्यन्दुपावाका॥ ४-१४९॥

२७अ) ए मु स्वे स्वकलान्यस्यन् नामाद्यक्षरपूर्विकाः।

अकाराद्यं न्यसेत् सूर्यं ॐकाराद्यं निशाकरम्॥ ४-१५०॥

सकाराद्यं न्यसेद् वह्निं कलामण्डलसंयुतम्।

सत्त्वादींस्त्रीगुणा न्यस्य * * * * * * * *॥ ४-१५१॥

सत्वं रजस्तम इति यस्य भेदाः समीरिताः।

आत्मानमन्तरात्मानं परमात्मानमत्र तु॥ ४-१५२॥

आदिवीजत्रयं न्यस्य शक्तिवीजपुरस्सरम्।

आँ आत्मने नमः॥

अं अन्तरात्मने नमः॥

इति न्यासक्रमः॥

ह्रींकारात्मने नम इति च॥

ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः॥ ४-१५३॥

एवं देहमये पीठे चिन्तयेदिष्टदेवताम्।

मुद्रा प्रदर्श्यविधिवदर्घस्थापनमाचरेत्॥ ४-१५४॥

शंखमुस्तां वुभुः प्रोक्ष्य वामतो वह्निमण्डले।

वह्निमण्डले त्रिकोणे॥

साधारं स्थापये विद्वान् विन्दुस्तुतं सुधामयैः॥ ४-१५५॥

सिरस्थचंन्द्रात् यत् सुतया वसुधा तन्मयैर्जलैः।

मूलमनुना॥

तोयैः सुगन्धिपुष्पाद्यैः पूरये तु यथा विधि॥ ४-१५६॥

आधारं पावकं शंखं सूर्यतोयं सुधाकरम्।

स्मरेद् वह्न्यर्कचंद्राणां कल्पान्तास्ते ष्वनुक्रमात्॥ ४-१५७॥

मुलमन्त्रन्यसेत् स्पृष्ट्वा न्यसेत् तस्याङ्गमन्त्रकम्।

हृन्मन्त्रेणाभिसंपूज्य हस्ताभ्यां छादयेन् नृपः॥ ४-१५८॥

जपेद् विद्यां यथा न्यायं दैशिको देवताधिया।

अस्त्रमन्त्रेणसंरक्ष्य कवचेनावगुंठ च॥ ४-१५९॥

धेनुमुद्रा समापाद्य वोधयेत् तत् स्वमुद्रया।

२७ब्) दक्षिणे प्रोक्षणी पात्रमाधायाभिः प्रपूजयेत्॥ ४-१६०॥

किंचिदीर्घाम्बुसंगृह्य प्रोक्ष्यण्यंभसियोजयेत्।

अर्घस्योत्तरतः कार्यं पाद्य आचमनीयकम्॥ ४-१६१॥

आत्मानं यागवस्तुनि मंडपं प्रोक्षयेद् गुरुः।

प्रोक्षणी पात्रतो येन मनुनान्यदपिक्रमात्॥ ४-१६२॥

मूलमन्त्रन्यसे स्पृष्ट्वा न्यसेत् तस्याङ्गमन्त्रकम्।

हृन्मन्त्रेणाभिसंपूज्य हस्ताभ्यां छादयेन् नृपः॥ ४-१६३॥

जपेद् विद्यां य धान्या न्यासक्रमेन देहेषु धर्मादीन् पूजयेत् ततः॥

गन्धाद्यै पीठमनुभिस्तस्मिश्च पुरदेवताम्।

पंचकृत्व पुनः कुर्या पुष्पांजलिमनन्यधीः॥ ४-१६४॥

उत्तमाङ्गे हृदाधारे पादसर्वाङ्गके क्रमात्।

विना नैवेद्यगंधाद्यैरुपचारैः समर्चयेत्॥ ४-१६५॥

गुरुपदिष्टविधिना शेषमभ्यसमापयेत्।

सर्वमेतत् प्रयुंजीते प्रोक्षणी स्थन (?)वारिणा॥ ४-१६६॥

विसृज्यतोयं प्रोक्षिण्याः पूजयेत् तां यथा पुर।

ततस्तं मण्डलं मन्त्री गंधाद्यै साधुपूजयेत्॥ ४-१६७॥

शालिभिः कर्णिकामध्ये सा म्पूर्योपरितंडुलैः।

अलंकृतस्तेन दर्भा नास्तिर्यमन्त्रवित्॥ ४-१६८॥

कुचमक्षतसंयुक्तं न्यसेत् तेषां मध्यो परि (?)।

कुर्चं विस्तरां आधारशक्तिमारभ्य पीठमन्त्रमयं यजेत्॥

अधः कूर्मशिलारूढां शरच्चन्द्रनिभप्रभान्॥ ४-१६९॥

आधारशात्कं प्रयजेत् षद्धजद्वयधारिणम्।

२८अ) कूमरूपाणिला तदुपरिस्थिता मित्यर्थः॥ ४-१७०॥

मुद्गिध्न तस्याः समासीनं कुर्मं नीलाभमुर्चयेत्।

ऊर्ध्वं ब्रह्माणिलाशीतमनन्तं कूर्मसन्निभम्॥ ४-१७१॥

यजेच्चक्रधरं मूर्द्धिन्न धारयन्तं वसुन्धराम्।

तमालश्यामलां तत्रे नीलिन्दीवलधारिणीम्॥ ४-१७२॥

अभ्यर्च्चयेद्वसुमतं स्फुरत् सागरमेखलाम्।

तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम्॥ ४-१७३॥

यजे कल्पतरुं तस्मित् साधकाभीष्टसिद्धिदम्।

अधस्था पूजयेत् तेषां वेडिकां मण्डलोज्वलाम्॥ ४-१७४॥

पश्चाद् अभ्यच्चयेत् तस्यां पीठमन्त्रादिभिः पुनः।

रक्तश्यामहरिद्रिंद्र नीलाभान् पायपूरणः॥ ४-१७५॥

वृषके सरिभूते भरूपाधर्माधिकां न्यजेत्।

भूतो मनुस्यगात्रेषु पूजयेत् तांस्तु न अपूर्वान कुलक्षणान्॥

आग्नेयादिषु कोणेषु दिक्षुचाथांवुजं यजेत्॥ ४-१७६॥

आनन्दकन्दं प्रथमं संविन्नालमनन्तरम्।

सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम्॥ ४-१७७॥

मन्त्री प्रकृतितत्त्वानि विकारमयकेसरान्।

पंचाशद्बीजवर्णाढ्यां कर्णिकां पूजयेत् ततः॥ ४-१७८॥

कलाभिः पूजयेत् सार्द्धं तस्या सूर्यन्दुपावकान्।

प्रणवस्य त्रिभिर्भागै रजः सत्वादिकाङ्गुणान्॥ ४-१७९॥

आत्मानमन्तरात्मानं परमात्मानमूर्च्चयेत् (ः)।

ज्ञानात्मानं च विधिवत् पीठमन्त्रावसानकम्॥ ४-१८०॥

पीठशक्तिकेशरेषु मध्य च सवलाभय।

२८ब) हेमादिरोचतं कुंभं अस्त्राभिः क्षालितान्तरम्॥ ४-१८१॥

चंदनागुरुकपूर धूपितं शोभनाकृतिम्।

आवेष्टिताङ्गनीरंध्रं तन्तुना त्रिगुणात्मना॥ ४-१८२॥

शक्तिविषयेरक्तिसूत्रेण॥

विष्णुविषये शुक्लसूत्रेणेति तान्त्रिका॥

चर्चितं गन्धपुष्पाद्यै दूर्वाक्षतसमन्वितम्।

नवरत्नोदकं मन्त्री स्थापयेत्तारमुच्चरम्॥ ४-१८३॥

ऐक्यं संकल्प्यकुंभस्य पीठस्य च विधानवित्।

क्षीरीद्रुमकखायेन पलाशत्वद्भवे नवा॥ ४-१८४॥

तीर्थोदकैर्व्वाकपूरगंधपुष्पसुवासितैः।

आत्माभेदेन विधिवन् मातृकां प्रतिलोमतः॥ ४-१८५॥

जपेन् मूलमनूं तद्वत् पूरयेद् देवता धिया।

प्रतिलोममातृकामाह॥

क्षँ हँ सँ षँ शँ यमित्यादि अकारान्तं पंचाशद्वर्णान् मूलमन्त्रं
जपन् पूरयेत्॥

शंखे क्वाथां वु संपूर्णे गंधाष्टकमभीष्टदम्॥ ४-१८६॥

विलोद्य पूरयेत् तस्मिन् नावाह्य सकलाः कला।

दशवह्नेः कलाः पूर्वं द्वादशः द्वादशात्मनः॥ ४-१८७॥

कलाः षोडशसोमस्य पंचापंचाशतं कलाः।

कलात्मकं शंखस्थं क्वाथं कुम्भेषु निक्षिपेत्॥ ४-१८८॥

गंधाष्टकतन्त्रिविधं शक्तिविष्णुशिवात्मकम्।

चंदनागुरुकपूर चोलकुंकुमलोचना॥ ४-१८९॥

जतामांसी कपियुता शक्ते गंधाष्टकं विदुः।

चोर इति कुण्डं कृष्णशटिकस्तूरीति वा कपिरक्तचंडनम्॥ ४-१९०॥

२९अ) चण्डनागुरुह्रीवीर कुंष्ठं कुंकुमे रोचनः।

जन्ममासी व्यकाः॥ (?)

जतामांसीमुरमिति विष्णु गङ्गाष्टकं विदुः॥ ४-१९१॥

ह्रीवीरभल्हाकुष्ठं कुठं सेव्यकं वीरणसू(?)लमिति यावत्॥

चंडनागुरुकपूरतमालजलकुंकुमम्।

कुशीतं कुष्ठसंयुक्तं शैवगंधाष्टकं विदुः॥ ४-१९२॥

तमालो वृक्षविशेषः जलवल्हा इत्यर्थः।

कुशीतं रक्तचंदनं कुष्ठं कुडमिति यावत्॥ ४-१९३॥

फेत्कारिणीतन्त्रे॥

रोचनाकपिकाश्मीरे नामीत्वगरचंदनैः।

सर्वोरैरष्टगंधोयं शैवे शाक्ते च सस्यते॥ ४-१९४॥

कपिरक्तचन्दनं काश्मीरं कुंकुमं गुडत्वकुदार्च्यनी सचोरैः
कस्तूरीयुक्तै॥

पाशादित्यक्षरात्मान्ते स्याद् अमुख्यपदं पुनः।

क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः॥ ४-१९५॥

अमुख्यसर्वैन्द्रियाणि भूयो मुख्यपदं वदेत्।

वाङ्मनो नयनश्रोत्रघ्राणप्राणपदात्पथ॥ ४-१९६॥

पश्चाद् इहागत्य सुखं चिरं तिष्ठ तुठद्वयम्।

अयं प्राणमतः प्रोक्तं सर्वजीवप्रदायकः॥ ४-१९७॥

प्राणादित्यक्षरम्॥

आँ ह्रीँ क्रौँ इति वीजत्रयम्॥

आत्मा आत्ममन्त्रः हंस इति यावत्।

तेन आँ ह्रीँ क्रौँ हँ सः ठ द्वयं स्वाहा तेन।

आँ ह्रीँ क्रौँ हँ सः अमुख्य प्राणा इह प्राणा आँ ह्रीँ क्रौँ हं सः अमुख्य
जीव इह स्थितः।

२९ब) आँ ह्रीँ क्रौँ हँ स अमुख्य सर्वेन्द्रियाणि पुनरवम्॥

अमुख्यवाङ्मना नयनश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठं

तु स्वाहा॥

अमुख्यत्पत्र उहः॥

पश्चादश्वर्थपनसचूतकोमलः।

पल्लवैः इन्द्रवल्लीसमावद्धैः सुरद्रुमधिया गुरुः॥

इन्द्रवल्ली॥

अपराजिता॥

कुंभवक्रेपि धायास्मिंश्चषकें सफलाक्षतम्।

चशकं शलावं अक्षतं यदादि॥

स्थापयेच्च फलधिया विधिवत् कल्पशाखिनाम्।

ततः कुंभं निर्मले नकौमयुग्मेन वेष्ठयेत्॥ ४-१९८॥

मूलेन मूर्त्तिं क्लिप्तांस्मिन् छायया कल्पशाखिणाम्।

आवाह्यपूजयेत् तस्यां मन्त्री मन्त्रस्य दैवतम्॥ ४-१९९॥

मूलमन्त्रं समुचार्य सुषुम्नावत् मनासुधीः।

आनीयतेजः स्वस्थाना नासिकारंध्रनिर्गतम्॥ ४-२००॥

करस्थमातृकां भोजे चैतन्यपूष्पसंचयः।

संयोज्य ब्रह्मरन्ध्रेन मुर्त्यामावाहयेत् सुधीः॥ ४-२०१॥

देवस्य मस्तकं कुर्यात् सुमोपहितं सदा।

पूजाकाल देवता यानो परिभ्रामयत् करम्॥ ४-२०२॥

संस्थापनं सन्निधानं सनिरोधमनन्तरम्।

सकलीकरणं पश्चाद् विदद्यादवगुंठनम्॥ ४-२०३॥

अमृतीकरणं कृत्वा कुर्वीता परमिकृतिम्।

क्रमादेतानिकुर्वीत स्वमुद्राभिः समाहितः॥ ४-२०४॥

आवाहनादिकामुद्रा प्रवक्ष्यामि क मुद्रा क यथाक्रमम्।

३०अ) याति विरचिताभिस्तु मोदन्ते सर्वदेवताः।

सम्यक् संपूजितैः पुष्पैः कलाभ्यां कल्पितांजलिः॥ ४-२०५॥

आवाहनी समारव्याता मुद्रादैशिकसत्तमैः।

अधोमुखी कृतो सैव प्रोक्ता स्थापनकर्मणि॥ ४-२०६॥

आश्लिष्ठमुष्टियुगला प्रथिताङ्गुलियुग्मका।

सन्निधाने समारव्याता मुद्रेयं तं त्रेयेदिभिः॥ ४-२०७॥

अंगुष्ठगर्भिणी सैव सन्निरोधसमीलिता।

देवताङ्गे षडङ्गाणां न्यासः स्यात् सकलीकृतः॥ ४-२०८॥

सव्यहस्तकृता मूर्तिष्टिदीर्घाधोमुखतर्जनी।

अवगुंठनमुद्रेयमभितोभ्रामितासती॥ ४-२०९॥

अन्योन्याभिमुखाश्लिष्ट कविष्ठानामिका पुनः।

तथा तत् तर्जनीमध्या धेनुमुद्रा मृतप्रदा॥ ४-२१०॥

अन्योन्यग्रथिताङ्गुष्ठा प्रमानितकलाङ्गुली।

महामुद्रेयमुदिता परमीकरणे वुधैः॥ ४-२११॥

प्रयोजयदि सा मुद्रा देवता योगकर्मणिः।

अथोपचारान् कुर्वीत मन्त्रवित् स्वागतादिकान्॥ ४-२१२॥

तथा चोक्तं वृहमत्स्यसूक्तम्॥

सपर्या विविधाः प्रोक्तास्तासामेकां समाश्रये।

गंधादिकानि वेद्यान्ता उपचारा दशक्रमात्॥ ४-२१३॥

षोडशोपचाराष्टदुक्तं शारदायाम्॥

पाद्यार्घाचमनं स्नानं वसनाभरणास्ति च।

गंधपुष्पधूपदीपौ नैवेद्यावसनं तथा॥ ४-२१४॥

ताम्बुलमर्चना स्तोत्रं तर्पणं च नमस्कृता।

३०ब्) प्रयोजयदशनायामुपचारांस्तु षोडशः॥ ४-२१५॥

तथा च ज्ञानार्णवे॥

आसनं स्वार?गतं चार्यं पाद्यमाचमनीयकम्।

मधुपर्का च मलीन (?) वसना भरणानि च॥ ४-२१६॥

गंधपुष्पै धूपदीपौ नैवेद्यं वदनं तथा।

एवं वा योजयेत् प्राज्ञे उपचारांस्तु षोडशः॥ ४-२१७॥

अष्टादशोपचाराः॥

तदुक्तं त्रिपुरार्णवे॥

आसना वाहने वीर्घे पाद्यमाचमनं तथा।

स्नानं वासोपवीतं च भूषणानि च सर्वशः॥ ४-२१८॥

गन्धं पुष्।पं तथा धूपं दीपपन्नं च तर्पणम्।

माल्यानुलेपनं चैव नमस्कारविसर्जने॥ ४-२१९॥

अष्टादशोपचारांस्तु मन्त्री पूजां समाचरेत्।

अथ षट्त्रिंशदुपचारः॥

तदुक्तं सुन्दरीरहस्यवृत्तौ॥

आसनात् पंजने तद्वद् उद्वर्त्तननिरुक्षणेः॥ ४-२२०॥

सम्मार्जने सपि *? देः स्नपनावाहने ततः।

पापार्घाचमनीयं च स्नानीयमधुपर्ककौ॥ ४-२२१॥

पुनराचमनीयं च वस्त्रयज्ञोपवीतके।

अन्तं (?) कासा? गंधपुष्पे धूपदीपो तथैव च॥ ४-२२२॥

ताम्बुलानि च नैवेद्य पुष्पमाला तथैव च।

अनुलेपनशर्यां च चामरं व्यंजनं तथा॥ ४-२२३॥

आदर्शदर्शनं चैव नमस्कारोथनन्तरम्।

गीतवाद्य च दानानि स्तुतिर्होमप्रदक्षिणम्॥ ४-२२४॥

दन्तकाष्टप्रदानं च ततो देव विसर्ज्जनम्।

उपचारा रा इ च ज्ञेयाः षड्विंशत् सुरपूजने॥ ४-२२५॥

३१अ) अथ चतुःषष्ठपचार॥

आसनारोपनं सुगंधितैलाभ्यंगं मज्जनशाला प्रवेशनम्
मज्जनमंडपपीठोपवेशनम्॥

दिव्यस्नानीयम्॥

उद्वर्त्तनं उष्टोदकस्नानं कनककलशच्युतसकलतीर्थोभिषेकम्॥

धौतवस्त्रपरिमार्जनम्॥

अरुणदुगुलोर्त्तरीयम्॥

आलेपमंडपप्रवेशम्॥

आलीपमंडपमणिपीठोपवेशनम्॥

चंदनागुरुकुंकुममृगमदकपुरगोरोचना दिव्यं
गंधसर्वाङ्गविलेपनम्।

केशभारस्य कालागुरुधुपमल्लिका मालती जातिचण् पकाशो
कशतपत्रपुन्नागकल्हारयुग्म सवर्तुकुसुममनोभुषणमण्डपप्रवेशन
भूषणमणिपीठोपवेशन नवमणिमुकुटां चन्द्रसकलं सीमन्तीनी
सिंदुरं तिलकरत्नं कालांजनम्।

पाणियुगलनानाभरणं अधरयावकं ग्रथनभूषणं
करचिन्तामणिकं महापदकं मुक्तावली एकावलि देवच्छंदकं
छदम्नवीरं केयुरयुगलचतुष्टयं वलयावलिं ऊर्मिकावलिं
कांचिडामणिकतिसूत्रं शोभाख्या भरणं पादकटकं रत्ननूपुरं
पाद्मङ्गुलीयकं एककरे पाशं इतरकेरे इक्षुचापं अपरकेरे
रक्तोत्पराञ्जकुमुदकं दचूताङ्कुरोद्भवान् पुष्पवाणान् श्रीमालिक्य
पादुकां स्वसमाकोपवेशनम्

३१ब) अमृतासनमेकं आचमनं कपूरवाटिका आनंदोल्लासविलासहासं
मंगलात्रिकां श्वेतच्छत्रं चामलयुगलं दर्पणं तालवृतं गंधं
पुष्पं धूपं दीपं दीपं नैवेद्यं च कल्पयेत्॥

तदुक्तं मानसोल्लासे॥

संबुद्ध्या प्रवदेन्मन्त्री उपचारान् सदैव तुः।

संबुद्ध्या संवोधनपदेन॥

सर्वोपचारमन्त्रास्ति तारपूर्वाकल्पयामि नमः इत्यन्तः कार्या॥

तथा च॥

श्रीँ ह्रीँ क्लीँ श्रीमहात्रिपुरसुन्दरी पाद्यं कल्पयामि नम इत्यादि नमः॥

इत्यादि सर्वबोध्यम्॥

इति पाद्यम्॥

श्रीविद्या विषये मभिलाषः॥

अन्य म्रतु संबुद्ध्या॥

तथा चोक्तं ज्ञानमालायाम्॥

उपचारविधिं वक्ष्य दत्वा वाथ शुभासनम्॥ ४-२२६॥

स्वागतं कुशलप्रश्नं निगदेदग्रतो गुरोः।

पाद्यं पादाबुजे दद्या देवस्य हृदयानुना॥ ४-२२७॥

हृदयानुम इत्यर्थः॥

एतद्च्छ्या (?)कदूर्वाङ्ग विष्णुक्रान्ताभिरीरितम्।

स्वधामन्त्रेणवदने दद्या वाचमनीयकम्॥ ४-२२८॥

जातीलवंगकक्कोलैस्तदुक्तं तन्त्रवेदिभि।

स्वधा मन्त्रः॥

वमिति मन्त्रः॥

अर्घं दिशेत् ततो मूर्द्ध्नि शिरोमन्त्रेणदेशिका गंधपुष्पाक्षत * *
कुशादीतिलशर्षपः

मदूर्धे सर्वदेवानां एतद् अर्घमुदीरितम्॥ ४-२२९॥

३२अ) स्वाहा मन्त्र इत्यर्थः।

ते नैव मनुना कुर्याद् अभीराचमनीयकम्।

ते नैव स्वधा नुना ततः कुर्यान् मधुपर्कमुखांवुजे॥

आज्यं दधिमधुन्मिश्रं मेतद् उक्तं मणीषिभिः॥ ४-२३०॥

मङ्गुमन्त्रः॥

स्वधामनुः॥

वमिति मन्त्र इत्यर्थः॥

तेनैव मनुना कुर्याद् अभिराचमनीयकम्।

ते नैवमिति मन्त्रेणैव।

अर्घदत्वा पाद्यं दद्यात्॥

तदुक्तं क्रमदीपिकायाम्॥

दत्वासनं स्वागतमित्युदीर्य तथार्घपाद्याचमनीयकानि देयानि
इत्यादिश्रवणात्।

इच्छा विकल्प इति भावात्॥

आचनीयं वालत्रयं दद्यात्।

तदुक्तं पूर्णा यागे

स्वधेत्याचमनीयं हि त्रिवारं मुखपंकजे॥ ४-२३१॥

मुकुटोपरिपुष्पं च वौषडित्यर्पयेत् सुधीः।

वौषदिति पुष्पदानमिति श्रुतेः॥

वौषट् नम इति मन्त्रः॥

अर्घादिदानेष्वपि तथा दतुक्तं सारसंहितायाम्(ः)।

नमः स्वधा च स्वाहा च वौषडिति तथाक्रमम्॥ ४-२३२॥

हृद्युरत्मानमुचार्य पाद्यादीनि प्रकल्पयेत्।

गंधाद्भिः कारयेत् स्नानं वाससीपरिधापयेत्॥ ४-२३३॥

दद्याद् यज्ञोपवीतं च हाराद्याभरणैः सहा।

न्यासक्रमेन मुनाना पठितैमातृकाक्षरैः॥ ४-२३४॥

अभ्यर्च्य देव गंधाद्यैरङ्गादीन् पूजयेत् ततः।

गंधचन्दनकपूरकालागुरुभिरीरितः॥ ४-२३५॥

कमले करवीरे द्वे कुमुदे तुलशी द्वयम्।

३२ब) जाती द्वयं केतकी द्वे कल्हालचंपकोत् पले॥ ४-२३६॥

कुन्दमंदारपुन्नाग पातलानागचंपकम्।

आरग्वधं कर्णिकारं पावन्ती नवमालिका॥ ४-२३७॥

सौगंठिकं सकोरंठं पलाशाशोकमल्लिकाः।

दन्तुरं सर्जकं विल्व मर्जुनं पुष्पविल्वकम्॥ ४-२३८॥

अन्यानि च सगंधीनि पुष्पमात्राणिदैशिकैः।

उपदिष्टानि पूजायां आददीतविचक्षणा॥ ४-२३९॥

मलिनं भूमिसंस्पृष्टं क्रिमिकेशादिदूषितम्।

अंगस्पृष्टं समाघ्राणां त्यजेत् पर्युषितं गुरुः॥ ४-२४०॥

अंगस्पृष्टं हस्तातिरिक्तमिति शेषः॥

मुकुलैः पतितश्चैव खण्डितैः शोषितैरपि।

अनर्हैरपिपुष्पैश्च दलैः पत्रैश्च नार्चयेत्॥ ४-२४१॥

येन केनापिपुष्पेन पत्रेणापिदलेन वा।

यतः कुतश्चिदानीय यन्त्रो तत्रोद्भवेन च॥ ४-२४२॥

भावार्थी जीवितार्था च नाच यगर्हिते स्थले।

परारोपितवृक्षभ्यः पुष्पा नारीय चार्चयेत्॥ ४-२४३॥

अविज्ञाप्यै व तैर्यस्तु निष्फलं तस्य पूजितम्।

तथा च ज्ञानमालायाम्॥

पुष्पं वा यदि वा पत्रं फलं नेष्ठमधोमुखम्॥ ४-२४४॥

पुष्पांजलिविधि हित्वा यथोत्पन्नं तथार्पणम्।

तथा च कालिकापुराणे॥

नैवेद्यं दक्षिणे वामे पुरतो वातपृष्टतः॥ ४-२४५॥

दीपं दक्षिणतो दद्यात् पुरतो वा न वामतः।

वामतस्तु तथा धूपमग्रे वा नवदक्षिणे॥ ४-२४६॥

३३अ) निवेदयेत् पुरो?भागे गंधं पुष्पं च भूषणम्।

वामे धूपं दद्याद् इति विष्णुविषयम्।

शक्तिविषये तु दक्षिणे दद्यात्।

प्रतिमादिषु यद् योग्यं गोत्रदत्तं च तत् तनौ॥ ४-२४७॥

दद्याद् अयोग्यं पुरतो नैवेद्यं भोजनादिकम्।

आधारोपरिदीपं च दद्याद् यत् तेन मानवः॥ ४-२४८॥

सर्वसहावसुमती सह तेन त्विदं द्वयम्।

आचार्यपादघातं च दीपतापं तथैव च॥ ४-२४९॥

इति कालिकापुराणम्॥

अगुरुशीलकपूरगुगुरुशर्करा मधुचंदनैः।

धूपयदाज्यसंमिश्रै नीचैदवस्पदैशिकः॥ ४-२५०॥

उशीलं वीरणमूलम्।

वात्त्या (?)कपूरगर्भिणः॥

सर्पिषा तिलजेन वा॥

आरोप्य दर्शयेन् दीपानुचैसौरभशालिनः।

स्वादुपदंशविमलं पायसं सहशर्करम्॥ ४-२५१॥

कदलीफलसंयुक्तं साज्यमन्त्रेणवेदयेत्।

उपदंशचर्वणीय द्रव्यम्॥

मोदको नालिकेलादि॥

तत्र तत्र जलं दद्याद्रूपचारां तनीतरेः॥ ४-२५२॥

अंगानिलोकपालान्त यजेद् वा वरणाम्यपि।

केसरेष्वग्निकोणादि हृदयादीनि पूजयेत्॥ ४-२५३॥

नेत्रे मग्रे दिशास्वस्त्रं धातव्या अंगदेवताः।

हृदयं वह्निर्घ्राणे च णैऋते शिव ईरितम्॥ ४-२५४॥

वायु कोणेशि षा प्रोक्ता कवचं शिवदिष्वपि।

षुरतो नेत्रमभ्यर्च्य प्रागाद्याशाश्च थास्तकम्॥ ४-२५५॥

३३ब) शक्तिविषये पूजाप्रकारमाह॥

उक्तं श्रीनवदुर्गाकल्पे॥

दक्षाङ्गुष्ठतर्जनीभ्यां पुष्पनिक्षेपनं चरेत्।

नार्चयेदेकहस्तेन यदिच्छेत् सिद्धिमात्मनः॥ ४-२५६॥

केवलं दक्षहस्तेन अभिचारायकल्पते।

वामेन केवलं भोगः संयोगा भोगमोक्षदम्॥ ४-२५७॥

अंगुष्ठा नामिका योगा छिवशक्त्यात्मकं परम्।

अंगुष्ठः शिव इत्युक्तो नामिकाशक्तिरुच्यते॥ ४-२५८॥

तोय संयोगमात्रेण द्रव्यस्याद्रमृतोपमम्।

शिवशक्त्यात्मकं विंदु द्वयं स्याद् अङ्गुलीयकम्॥ ४-२५९॥

तेन तं निस्मृतं द्रव्यं परमामृतमिष्यते।

छिन्नादिदोषसिद्धार्थं मन्त्राणां साधकोत्तमः॥ ४-२६०॥

गुरूपदेशविधिना योनिमुद्रां समभ्यसेत्।

यथा॥

आधारे च गुदस्थाने पंकजं स्याच्चतुर्दलम्॥ ४-२६१॥

तत्र स्वायंभुवं लिङ्गं रक्तगौरं विचिन्तयेत्।

तत्र सार्द्धत्रिवलयम्॥

प्रसुप्तभुजगाकारा कुण्डलीनी विचिन्त्यतां॥ ४-२६२॥

हुंकारे मनोदंडा हतां कृत्वोत्थाप्य मूलाधाराल्लिंगमूलस्थं स्वाधिस्थाननाभिस्थं मणिपुरकचक्रमानीय मणिपूरका हृदयस्थं अनाहतं चक्रमेवं पूर्व च वदनाहतात् कंठस्थं विशुद्धम् एवम् एव विशुद्धाद् भ्रुवोरन्तरालम् आज्ञाचक्रमानीय ज्ञातः सहस्त्रदलकमलं नीत्वा सह*दलकमलावस्थित सदाशिवज्योतिषा सह तस्यास्सामरस्यं विचिन्त्यताम्।

३४अ) मूलमन्त्रस्वरूपां कुण्डलिनी सदा

शिवपदाज्ञा चक्रमानीय तस्माद् विशुद्धानाहतमणिपूरकत्वाधिस्थान क्रमेणमूलाधारं नयेत्।

ततस्तां मत्र देवतां हृदि विचिन्त्य मानसोपचारैराराध्य नमस्कुर्यात्॥

इति योनिमुद्रा॥

अभ्यासकरणा सक्तः संस्कारानाचरेत् सुधीः।

मन्त्रस्य दशकथ्यते संस्काराः सिद्धिदायिनः॥ ४-२६३॥

जननं जीवनं पश्चात् तादनं जीवनं तथा।

अथाभिषेको विमलीकरणा प्यायते ततः॥ ४-२६४॥

तर्पणं दीपणं गुप्ति देशैता मन्त्रसंस्क्रिया।

मन्त्राणां मातृकामध्याद् उद्धारो जननं स्मृतम्॥ ४-२६५॥

मातृकेति मातृकाः पंचाशत् तन्मध्यान् मातृकान् मध्या देय
मन्त्रोद्धार इति मन्त्रस्य जननम्॥

प्रणवान्तरिताः कृत्वा मन्त्रवर्णान् जपेत् सुधी।

एतज्जीवं तमित्याहुर्मन्त्रतन्त्रविशारदा॥ ४-२६६॥

प्रणवान्तरितेति॥

देय मन्त्रस्यैकैकवर्णानन्तरं प्रणवं दत्वा जपेद् इत्यर्थः॥

एतन् मन्त्रस्य जीवनम्॥

मन्त्रवर्णान् समालिख्य तादये छन्दनाम्भसा।

प्रत्येकं वायुना मन्त्रं ताडनं तदुदाहृतम्॥ ४-२६७॥

प्रत्येकं देय मन्त्रस्यैकैकाक्षरं वायुना वायुवीजेन यमिति वीजेन
प्रत्यक्षरा परिचंदना श्रीतजत्मंदद्यात्॥

इति मन्त्रताडनम्॥

गोपालपक्षे शुक्लचंदनजलेन।

३४ब) देवी विषयरक्तचन्दनजलेनत्यर्थः॥

विलिखेमन्त्र तन् मत्री प्रसूनैः करवीरजैः।

तन्मत्राक्षरसंख्यातैर्हन्याद्यान्ते न वोधन?॥

विलिख्ये ताम्रपट्टां दावित्यर्थः॥

यान्ते नेति यकारस्या ते रेफः॥

तथा च॥

रमिति वह्निवीजमित्यर्थः॥

इति मन्त्रस्य वोधनम्॥

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रस्य संख्यया॥ ४-२६८॥

अश्वत्थपल्लवैर्मन्त्र यद्भिषिंचेद् विशुद्धय।

स्वतन्त्रोक्तेति॥

विष्णुपक्षे शुक्लचंदनेन।

देवी पक्षे रक्तचन्दनेनत्यर्थः॥

संचिन्त्य मनसा मन्त्रं ज्योतिमन्त्रेण निर्दहेत्॥ ४-२६९॥

मत्री मलत्रयं मन्त्री विमलीकरणं त्विदम्।

ज्योतिमन्त्रोर्यथा।

तारं व्योमाग्नि मनुयुग्दण्डीज्योतिर्मनुर्मतः॥ ४-२७०॥

तारं ॐकारः॥

व्योमहकारः॥ अग्निः रेफः॥

मनुः ॐकारः दंडीः॥

तेन ह्रौँ इति ज्योतिमन्त्रेण॥

ॐ ह्रौँ इति मन्त्रेणमलत्रयं मायीय कार्मणशारीरसंज्ञकमिति॥

कुशोदकेन जप्तेन प्रत्यकं प्रोक्षणं मनोः।

तेन मन्त्रेण विधिवद् एतदाप्यायनं मतम्॥ ४-२७१॥

तेन मन्त्रेण देयमन्त्रेण॥

एतन्मत्रस्याप्यायेनम्॥

मन्त्रेण वारिणामन्त्री तर्पणं तर्पणं महम्।

मन्त्रेण मूलमन्त्रेण॥

तथा च॥

देय मन्त्रमुच्चार्या मुकमन्त्रं तर्पयामीति प्रयोग॥

३५अ) व्रतन्मन्त्रस्य तर्पणम्॥

तारं मायारमायोगोर्मनोदीपनमुच्यते॥ ४-२७२॥

तारः ॐ॥

माया ह्रीँ रमा श्री योगः संवंधः ते नदेय मन्त्रस्यादौ।

ॐ ह्रीँ श्रीँ इति वीजत्रय दत्वा जपेदित्यर्थः॥

एतन्मन्त्रस्य दीपनम्।

जप्यमानस्य मन्त्रस्य गोपनं त्वत् प्रकाशनम्।

संस्कारा दशसंप्रोक्ताः सर्वत्रन्त्रेषु गोपिता॥ ४-२७३॥

यत् कृत्वा संप्रदायेन मन्त्री वांच्छितमाप्नुयात्।

होमकृत्वाथशास्त्रोक्तैः कुर्या च्छिष्यस्य संक्रियाम्॥ ४-२७४॥

ततः सुधौ तदन्ताच्यं स्नातशिष्यसमाहितम्।

पाययित्वा पंचगव्यं कुंडस्यान्तिकमानयेत्॥ ४-२७५॥

विलोक्य दिव्यदृष्टरातं तच्चैतन्यं हृदंवुजे।

गुरुरात्मनिसंयोज्य कुर्याद्दध्वविशोधनम्॥ ४-२७६॥

उक्तं कालाध्वतत्त्वाध्वा भुवनाध्वेतितत्त्रियम्।

वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्य परं त्रयम्॥ ४-२७७॥

निवृत्याद्याः कलाः पंचकलाध्वेति प्रकीर्त्तिता।

तत्त्वाध्वा वहुधाभिन्नाः शैवाद्यागमभेदतः॥ ४-२७८॥

षड्विंशच्छिवतत्त्वानि द्वात्रिंशद्वर्ण वानि च।

चतुर्विंशतितत्वानि मैत्त्रा निः प्रकृते पुनः॥ ४-२७९॥

उक्तानि दशतत्त्वानि सप्त व त्रिपदात्मनः।

तत्त्वानिशेवान् मुच्यन्ते शिवशक्तिः सदाशिवः॥ ४-२८०॥

इश्वरो विद्यया सार्द्धं पंचशुद्धान्यमूनि हि।

माया कालश्च नियतिः कलाविद्या पुनः स्मृता॥ ४-२८१॥

३५ब) रागः पुरुष एता॥

न शुद्धो सुद्धानि सप्त च॥

प्रकृतिवुद्धिहंकारो मनोज्ञा वुद्धियान्यथः।

कर्मेन्द्रियाणि तन्मात्रा पंचभूतानि दैशिकः॥ ४-२८२॥

एतान्याहुरसप्तानि चतुर्विंशति वा गमैः।

क्रमादेता ततध्वनः षट्च्छेदयङ्गुरुसत्तमः॥ ४-२८३॥

पादाब्जनाभिहृद्धारमूर्द्धस्य पिशिशोः स्मरेत्।

नेत्रे शिष्यस्य वध्निया नेत्रं मन्त्रेणवाससा॥ ४-२८४॥

नेत्रमन्त्रेण वौषडिमन्त्रेणः॥

करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलं नयेत्।

तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि॥ ४-२८५॥

कलशे देवता प्रीत्यै क्षेपयेन् मूलमुचरन्।

व्ययोज्यतं नेत्रवढमासीनं गर्भसंस्तरे॥ ४-२८६॥

आत्मयागन्क्रमाद्भूयः संस्कृतोत्याद्य दैशिकः।

तत् तन्मन्त्रोदिता न्यासान् कुर्याद् देहेशिशोस्तदा॥ ४-२८७॥

पंचोपचारैः कुम्भस्थं पूजयेत् वेष्टदेवताम्।

गंधा व योनिवेद्यान्तां पूजा पंचोपचारिका॥ ४-२८८॥

मंडले संस्कृतं शिष्य मन्यस्मिन्नोपवेशय।

वुदत् सुपंचवाद्यषु सार्द्धं विप्रा विषागुरुः॥ ४-२८९॥

विधिवत् कुण्डमुद्धृत्य तन्मुखस्तान् सुरद्रुमान्।

शिशोणियविशिन्यस्य मा-ऋः कां मनसः जपन्॥ ४-२९०॥

मूलेन साधितैस्तोयै मभिषिंचेत् तु मात्मवित्।

अवशिष्टेन तोयेन शिष्यमाचमयेद् गुरुं (ः)॥ ४-२९१॥

३६अ) उत्थायशिष्यो विमले॥ वाससे परिधाय च॥

आचम्य वाग्यतो भूत्वा निषिदेत् संनिधो गुरु॥ ४-२९२॥

देवता मात्मनशिष्य संक्रान्तौ देशिकोत्तमः।

पूजयेद् गन्धपुष्पाद्यै चैक्यं संभावयेस्तयोः॥ ४-२९३॥

निवृत्याः द्याः कलाः पंचभूतानां शक्तयो यतः।

तस्मा भूतमये देहे ध्यात्वा तां वेदयेच्छिशोः॥ ४-२९४॥

निवृत्तिजानुपर्यन्तं तरादारभ्य संस्थिताः।

जानुर्नोनाभिपर्यन्तं प्रतिष्ठा व्याप्यतिष्ठतः॥ ४-२९५॥

नाभेः कण्ठावधिव्याप्ता विद्याशान्तिस्ततः परम्।

कण्ठाल्ललातपर्यन्तं व्याप्ता तस्या छिरावधि॥ ४-२९६॥

शान्त्यतीता कलाज्ञेया कलाव्याप्ति नितीरिता।

इति विन्यस्य शिख्व्याङ्गे देवता भावयध्विया॥ ४-२९७॥

अमुकमन्त्रं ददामीति प्रतिज्ञां श्रावयन् ततः।

ददस्वेति च ते नोक्ते तारोचारण पूर्वकम्॥ ४-२९८॥

दद्याद् विद्यां ततस्तस्मै विनीतायांवुपूर्वकम्।

आपो ऋष्यादिकं चोक्ता स्मृत्वा च देवतां धियाः॥ ४-२९९॥

गुरुस्तु प्राङ्मुखो भूत्वा शिष्यः प्राचीमुखस्थितः।

त्रिवारं दक्षिणे कर्णे वामे चैव तथा सकृत्॥ ४-३००॥

व्राह्मणानामेषविधिस्त्रीशूद्राणां तु वामकेः।

चतुर्थे पाठयित्वा त्वं शिष्य हस्ते जलं पुनः॥ ४-३०१॥

अयं च मन्त्र आवयोः समानफलदोस्त्विति।

३६ब्) अस्त्विति ब्रह्मणाप्रुयुः शिष्यश्च प्रतिगृह्य च॥ ४-३०२॥

गुरुर्विद्यां समारभ्या अष्टोत्तरशतं जपेत्।

अथवाज्यष्टकृत्वाश्च जपन्मन्त्रमनन्यधीः॥ ४-३०३॥

गुरुम्न्त्र देवता नामैक्यं संभावयन्धिया।

प्रणमेदं डवद्भूमो गुरु तं देवतात्मकम्॥ ४-३०४॥

तस्य पादांबुजद्वन्द्वं निजमूर्द्धनियोजयेत्।

अथ दक्षिणा॥

उक्तं च क्रमसंहितायाम्॥

वृथा विप्रवचायम्तु गृहणाति न मानवः शुभ॥ ४-३०५॥

अदत्वा दक्षिणं वापि सजाति नरकं ध्रुवम्।

एवं॥

दक्षिणां वस्त्रयुग्मं च आचार्यायनि वेदयत्॥ ४-३०६॥

इत्यादि या दक्षिण्यया आवेश्यकत्वम्॥

तत् एव विषदयति दीक्षान्तेति।

तथा च वृहन् महत्सूक्ते दीक्षान्ते दक्षिणां प्राहु
स्वर्णगोभूमिभूषणम्॥

वसुभाजन वस्त्रान् नपशुदा सासनानि च।

शरीरनर्थं प्राणांश्च सर्वतस्मै निवेदयेत्॥ ४-३०७॥

ततः प्रभृति कुर्वीत गुरोः प्रियमेनन्यधीः।

यद्य दिष्टतमं वस्तुगुरुवे तन् निवेदयेत्॥ ४-३०८॥

गुरये दक्षिणा दद्यात् प्रत्यक्षाय शिवात्मन।

सर्वस्वं वा तदर्धं वा तदर्धं वा तदाज्ञया॥ ४-३०९॥

न चेत् संषारिणीशक्तिः कथमस्य भविष्यति।

तथा च॥

पार्वती हरसंवादे॥

सर्वस्वं दक्षिणां दद्याद् गां च दद्यात् पयस्विनीम्॥ ४-३१०॥

भूमिं वृत्तिकरीं दद्या पुत्रपौत्रान् यायिनीम्।

३७अ) तथा च पारिजातस्वरे।

गुरवे दक्षिणां दद्यात् स्वर्णा वा ससमीरितः॥ ४-३११॥

अन्यथा नैव सिद्धिः स्याद् अधिचारायकल्पते।

ऋत्विग्त्यो दक्डिणा दद्यात् समग्रां प्रीतमानसः॥ ४-३१२॥

वित्तशाठ्यं विनासर्वं गुरेवे सन्निवेदयेत्।

मंडपं मंडपद्रव्यं गुरुरेवसमर्चयेत्॥ ४-३१३॥

अथवा किमिहोक्तेन पार्वती प्राणवल्लभे।

गुर्वर्थं मते मान्नित्यं सरीरमपि सन्त्ययेत्॥ ४-३१४॥

तथा च॥

स्मृतौ लघुहारीत।

एकमप्यक्षरं यस्तु गुरुः शिष्यनिवेदयेत्।

पृथिव्यां नास्ति तद्रव्यं दद्त्त्वासौ ऋणिभवेत्॥ ४-३१५॥

भोजनं चान्नपानीय मव्यभ्योपिनिवेदयेत्।

गुरवे ब्राह्मणेभ्याथमिष्टं भक्ष्यं प्रकल्पयेत्॥ ४-३४६॥

वृद्धभ्यो वालकेभ्योथ नानाभक्ष्यं प्रकल्पयेत्।

भक्ष्यं भोज्यं तथा चोष्यं लोज्यं पयं च चर्वणम्॥ ४-३१७॥

आदौ दत्वा च गुरवे विप्रेभ्यस्तदनन्तरम्।

ब्राह्मणांस्तर्पयेत् पश्चा भक्षं भोज्य सदक्षिणाम्॥ ४-३१८॥

गुरुः स्वशक्तिरक्षार्थं सहस्त्रं प्रजपेन् मनुम्।

शिष्यः कुर्यात् प्रयत्नेन गुरोप्रीतिमनन्यधीः॥ ४-३१९॥

तथा च॥

ईशानसंहितायाम्॥

दीक्षां कृत्वा यदा मन्त्री उपवासं चरेद् यदि।

तस्य देवः सदारुष्टः शापं पतति मूर्द्धनि॥ ४-३२०॥

ना गृहीता नोप्यष्मद् पचासः श्रियं हरेत्।

३७ब्) भैष्यं हविष्यं शाकादि विहितानिफलं पयः॥ ४-३२१॥

मूलं सकुर्यवोत्पन्नो भक्ष्याण्येतामि मन्त्रिणाम्।

तस्माद् अन्नं समश्नीयाद् धविष्यान्नेनशाङ्करि॥ ४-३२२॥

दन्वेषाद् अश्यादौ विष्णुमन्त्रस्य दानश्रवना तद् वचनस्य वा धायन्तः

कामेन नित्यस्या वाधात्।

आघ्राय पितृसेवितम् इति वेदस्योपपत्तिः वस्तुतस्तदितरपरमिति भावः॥

एषा कलावतीक्षा प्रोक्ता सर्वसमृद्धिदा॥

इत्यागमकल्प * तायां चतुर्थपटल॥ ४॥

होमस्तु विधो नित्यनैमित्तककाम्यभेदात्।

सर्वत्र होमस्यावश्यकत्वमिति॥

तदुक्तं रुद्रयामले॥

नजप्तः सिद्धाते मन्त्रो नाहुतश्च कदाचन।

जपहोमो भयार्थत्वात् पूजायाः मूर्त्तिरक्षणम्॥ ५-१॥ इति॥

अथ होमविधिं वक्ष्य सर्वतन्त्रानुसारतः।

तस्यै व कुण्डसाध्यत्वाद् इदानीं तन् विरूप्यते॥ ५-२॥

विप्राणां चतुरश्रं स्याद् राज्ञां वत् तुलमिष्यते।

वैश्यानां अर्धचंद्राभं शूद्राणां समीरितम्॥ ५-३॥

चतुरश्रं तु सर्वेषां केचिदीर्घत्रितान्त्रिका।

तदुक्तं सागरसंहितायाम्॥

आगमानेनुसृत्यैवं वह्निः संक्रियते तुयैः॥ ५-४॥

तैस्तदङ्गुलमानेन कुण्डान्येपिविधीयताम्।

कुण्डस्य रूपं जानीया परमं प्रकृतिर्वपुः॥ ५-५॥

प्रान्यां शिरः समाख्यातं वाहुदक्षिणसौम्ययाः।

३८अ) उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमः॥ ५-६॥

सर्वसिद्धिकरं कुंडं चतुरस्त्रमुदीरितम्।

सर्वाधिकालिकं कुण्डं सर्वदं चतुरस्त्रकम्॥ ५-७॥

चतु * स्त्रं महेशानि सर्वकर्माणि साधयत्।

हस्तनियमोयया॥

गौतमीय॥

रथादि दोलिका चैव पोटं शकटमेव च॥ ५-८॥

मानाङ्गुलेन कर्त्तव्यं नान्यनापि कदाचन।

मुष्टरात्रिप्रमानानि यत् किंचित् कथितानि च॥ ५-९॥

यजमानस्य कर्त्तव्यं नान्यस्यापि कदाचन।

मानक्रिया या नुक्ता या मनुक्तमानकर्त्तरि॥ ५-१०॥

मानकृद्ययमानः स्याद् विंदुषामेव निर्णयः।

चतुर्विंशत्यंगुलाढ्यं हस्तं तन्त्रपिदोविदुः॥ ५-११॥

कर्त्तु दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः।

मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदाहृतम्॥ ५-१२॥

ये जे मामासंनिधौ॥

यवानां तंडुलैरेकमंगुलं चाष्टभिर्भवेत्।

तथा चोक्तं सारसंग्रहे॥

सस्याङ्गुलो यस्तस्या शोयवाष्टम उदाहृतः॥ ५-१३॥

तिलस्तत् पंचमांशः स्यात् षष्ठोमाषस्तिलस्य च।

तावदंशश्च नीवारे तस्य षष्ठो लवोपि वा॥ ५-१४॥

सर्वत्रवंहितं ग्राह्यमङ्गुलं मध्यमाङ्गुले।

मध्यमाया मध्यमपर्वमानं चतुर्विंशतिकरः॥ ५-१५॥

अदीर्घयोजितै हस्तैश्चतुर्विंशतिलङ्गुलैः।

३८ब) अष्टभिस्तै यवैर्ज्येष्ठं मध्यमं सप्तभिर्यवैः॥ ५-१६॥

कनिष्ठं षड्भिरुदिष्टं हस्तं च मुनिसत्तम।

तथा च वशिष्ठपंचरात्रम्॥

शारदायां च॥

मुष्टिमात्रमितं कुण्डं शतार्द्धे परिचक्षते॥ ५-१७॥

शतहोमेन त्रिमात्रं हस्तमात्रं सहस्रके।

श्रीभविष्योत्तरे॥

सहस्रत्वेथहोतव्य कुर्यात् कुण्डं कलात्मकम्॥ ५-१८॥

द्विहस्तमयुतं तच्च लक्षहोमे चतुष्करम्।

तथा च ज्ञानललितायाम्॥

वेदलक्षं षड्करे च दशलक्षं कराष्टके॥ ५-१९॥

दशहस्तं तु कोट्यां वै हस्तसंख्या व्यवस्थिता इति॥

चतुश्रं चतुष्कोणं द्विहस्तादिके यामलः॥

पूर्वपूर्वस्य कुंडस्य कोणसूत्रेणनिर्मितम्।

उत्तरोत्तरकुण्डानां मानं तत्परिकीर्त्तनम्॥ ५-२०॥

पूर्वपूर्वहस्तद्विहस्तादिमितस्य चतुहस्तत्वापत्तेः॥

अन्यचोक्तं यामले॥

द्विहस्तमयुते पक्षे चतुर्हस्तमुदीरितम्।

यावत् कुण्डस्य विस्तारो॥

दशलक्षे तु षढस्तं कोट्यामस्तकरं स्मृतम्॥ ५-२१॥

अथवा॥

एकहस्तमितं कुण्डम् एकलक्षं विधीयते।

लक्षाणां दशकं यावत् आवर्धस्तेन वद्धयेत्॥ ५-२२॥

दशहस्तमितं कुण्डं कोटिहोमे विधीयते।

इति वशिष्टपंचरात्रे कुण्डस्वरूपमाह॥ ५-२३॥

एकहस्तप्रमाणं तु चतुरश्रमुदीरितम्।

३९अ) यावात् कुंडस्य विस्तारः खननं तावदीष्यते॥ ५-२४॥

कुण्डानां या दृशं रूपं मेखलायाश्च तादृशम्।

चतुश्रं चतुष्कोणमित्यर्थः॥

अत्र पंचमेखला केचिद् एकमेखलमात्रं सर्वमंजसं त्रिमेखलमात्रं विधीयते।

तदुक्तं सिद्धान्तशेखरे।

पञ्चमेखलकं कुर्यात् तन्त्रवित् सर्वकुण्डके॥ ५-२५॥

मेखला त्रितयं चाथ द्वितीयं चैकमेव वा।

वेदाग्निनयनच्छेदमंगुलं द्वितयं क्रमात्॥ ५-२६॥

तदुक्तं क्रियासारे॥

प्रधानमेखले छेदं उक्तमत्र न चाङ्गुलम्।

तद्वाह्यमेखला छेदं पंचाङ्गुलमिति स्मृतम्॥ ५-२७॥

तद्वाह्य मेखलाछेदं मर्द्धाङ्गुलिसु संम्मिता
मगुलं द्वितयक्रमात्।

चतुर्थत्र्यङ्गुलछेदो मेखला द्वितयस्य च।

इति केचित्॥

कुण्डानां मेखलास्तिस्रो मुक्तिमात्रैः तुताः क्रमात्॥ ५-२८॥

उच्छदायामतो ज्ञया व्यकाद्वाङ्गुलिसम्मिताः।

अरित्रमात्रे कुण्डेस्यु स्नास्तिव्यकाङ्गुलात्मिकाः॥ ५-२९॥

एकहस्तमिते कुण्ड वेदाग्निनयनाङ्गुलाः।

कुण्डद्विहस्ते ताज्ञया रसवंदगुणाङ्गुलाः॥ ५-३०॥

चतुहस्त तु कुण्डे ता वसुतर्कयुगाङ्गुलाः।

मेखलानां भवेदन्तः परितोनेमिरंगुला॥ ५-३१॥

मेखला ब्रह्मचारि मेखलावत्॥

३९ब) कुण्डवृष्टिता मृद्धटिताः॥

ताश्च खादतेशाद् वाज्य एकाङ्गुलरूपकंठं परित्यज्यो च्छ्रायेश विस्तारेण इत्यादि क्रमेणवेदाद्यङ्गुलाः।

एतद्विपरीताः तन्त्रान्तरोक्ताप्य वहारविरूद्धा वेदाश्चत्वारः अग्नयस्त्रयः
।

नयने द्वे पसाः? दगुलाः॥

त्रयः वसुतर्कयुगाः॥

अष्टषड्चत्वारि॥

तथा च कालोत्तरे॥

खातादेकाङ्गुलं त्यक्त्वा मेखलानां विधिर्भवे।

एकहस्तस्य कुण्डस्य वर्द्धयेत् तां क्रमात् सुधीः॥ ५-३२॥

दशहस्तां तु मध्ये षा मद्धाङ्गुलवशा पृथक्।

विस्तारो छेदतो ज्ञेया मेखला सर्वतो वुधैः॥ ५-३३॥

एककुण्डस्य पश्चिमदिर्कर्त्तव्यतामाह॥

महादाननिर्णय॥

भुक्तौ मुक्तौ तथा तुष्टौ जीर्णोद्धारे तथैव च।

सदाहोमे तथा शान्तौ एकं वरुणदिग्गजम्॥ ५-३४॥

सारदातिलके॥

होतुरग्रे योनिरा सा मुपर्यश्वत्थपत्रवत्।

आसां मेखला नाम श्वत्थपत्रवदित्येन चतुरङ्गुलविस्तृतमूला यथोक्तक्रममेकांगुल्यं तं संकुचितविस्तारा:।

तदुक्तं वशिष्ठसंहितायाम्॥

प्रथमे मेखले योनि कुण्डष्टोहोतुरग्रतः॥ ५-३५॥

कुयाद्वीपोश्च वृत्तान्तः कुण्डं तत् सर्वलक्षणम्।

४०अ) योनिः षडंगुला या सा चतुलंगुलविस्तृता॥ ५-३६॥

उन्नतर्ध्यंगुला प्रोक्ता कुडे हस्तमिते वुधैः।

नेत्रवेदाङ्गुलोच्छ्दं विस्ताराम्नतिरत्र वै॥ ५-३७॥

मुक्त्यारत्रिहस्तमात्रे योनिस्तद्वदुदीरिता।

द्विहस्तादिषु कुण्डेषु योनिसंवर्द्धयेत् क्रमात्॥ ५-३८॥

एककाङ्गुलिमानेन तथा नाभिं च वर्द्धयेद् इति।

मुष्टारत्र्यैकहस्तानां कुण्डानां योनिरीरिता॥ ५-३९॥

षद्वतुष्ठांगुलायाम् अविस्तारान्नतिशालिनी।

एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम्॥ ५-४०॥

षडंगुलदीर्घा चतुलङ्गुलविस्तीर्णा द्वाङ्गुलोच्चत्यर्थः।

अत्रैकवचनो पां तत्वाद् एतत् परिमानकथनं मुष्टारत्र्यैकविषये मिदम्॥

एककाङ्गुलतो योनिं कुण्डेष्वन्यषु वर्द्धयेत्।

यव द्वयक्रेमेणैव योन्यग्रमपि वर्द्धयेत्॥ ५-४१॥

इति हस्तादिविषयम्॥

अत्र विशेषकाभावाद् आयामविस्तारोन् नतिष्वविवृद्धिरितितत्त्वम्॥

तथा च यज्ञपार्श्वे॥

मेखलानां च भिस्थानं स्थलमित्यविधीयते।

चतुरश्रे तु नालं स्या योन्या मध्यासरंध्रकम्॥ ५-४२॥

स्थूलमूला तु सूक्ष्माग्रा उन्नासाभ्यान्मनोहरा।

वाह्यस्थां मेखलां वाह्यस्थातमारभ्यकारयेत्॥ ५-४३॥

सरंध्रकमुभयत्र संवध्यते॥

उक्तं च भास्कराचार्यः।

योनौ नालं सरंध्रक॥

४०ब्) इति रुद्रयामले॥

योन्या सध्यविलं कुर्या तदाज्यग्राहिसंज्ञितम्।

स्थलादारभ्य नालं स्यात् योन्या मध्य सरन्ध्रकम्॥ ५-४४॥

नार्पयेत् कोणकुण्डेषु योनिं तां तन्त्रवित्तमः।

स्थलां मेखलानां रंभस्थलात्॥

अथावाह्यस्थाल्यधिकरणस्थला द्वेत्यर्थः॥

सरंध्रकं अदृष्टार्थकमिति केचित्।

तथा च यामले॥

नालयोखलयोर्मध्य परिधस्थापनाय च॥ ५-४५॥

रन्ध्रं कुर्यान् तथा विद्वान् द्वितीये मेखरो परि।

इति श्रुतेः॥

इति वचनं नालस्य नसरन्ध्रता वोधकम्॥ ५-४६॥

किन्तु नालमेखलोः परिधिमाह॥

तत् संयोगपरिशिष्ठे॥

वहुमात्रा परिधिय ऋजवः सतृचोब्रणा।

त्रयोभवन्त्य शीर्णाग्रा एकैकां तु चतुर्दिशम्॥ ५-४७॥

ततः कुण्डानुरूपं वा मानसस्या निगद्यते।

प्रागग्रा आहतः पश्चाद् उदगग्रमथापरम्॥ ५-४८॥

न्यसेत् परिधिमन्येच्चेद् उदगग्रः स पूर्वतः।

अव्रणाच्छिद्ररहिता अभितः अग्रे पार्श्वद्वय॥ ५-४९॥

दक्षिण-उत्तरतः पश्चात् पश्चिमेः॥

उदगग्रमुत्तराग्रम्॥

त्रैलोक्यसार॥

कुंभद्वयसमायुक्ता अश्वत्थदलवन्नतः।

अंगुष्ठमेखला युक्ता मध्यचार्यस्थितिस्तथा॥ ५-५०॥

कुम्भद्वयसमायुक्ता गजकुम्भाकारमूलदेशयुक्ता नता नम्रा

अंगुष्ठमेखला युक्ता अंगुष्ठमितमूर्द्धति

तयुता मेखला वेष्ठनयुक्ता तथा द्विहस्तगलिताज्यष्ठिन्त्या कुंडे उत्पातो

भवतीत्यर्थः॥

४१अ) अत एव स्वायंभुवे॥

अंगुष्ठमानौष्टकण्ठा कार्याश्वत्थदलाकृतिः।

[अंगुष्ठमानौष्टकण्ठा कार्याश्वत्थदलाकृतिः।]

अंगुष्ठमानौ कण्ठे यस्मात् सा तथा ओष्ठो माग्रम्।

तथा च पंचरात्रे॥

कल्पयेदन्तरेणाभिं कुण्डस्याम्बुजसंन्निभाम्।

मुष्टिरत्र्यैकहस्तानां नाभिरुच्छेदविस्तृता॥ ५-५१॥

नेत्रवेदाङ्गुलापेता कुंडे ष्वन्येषु वर्द्धयेत्।

यवद्वयक्रमेणैव नाभिं पृथगुदारधिः॥ ५-५२॥

नाभिं क्षत्रं त्रिधा कृत्वा मध्यकुर्वीत कन्यकाम्।

वहिरंशद्वये नाष्टौ पत्राणि परिकल्पयेत्॥ ५-५३॥

स्त्रुक्स्द्रुवौ संप्रवक्ष्यामि मन्त्रीणां हितकाम्यया।

स्त्रुवं प्रकल्पयत्यागे वक्ष्यमानेन वत्मना॥ ५-५४॥

श्रीपर्णिशिं शपाक्षीरिशाखोष्वेकतमं गुरुः।

शिष्यपाशमिशीरख इति केचित् गृहीत्वा विभजेर्द्धस्तमात्रं षड्विंशता पुनः।

विशत्यंशै भवेद् दण्डो वेदीतैरष्टभिर्भवेत्॥ ५-५५॥

एकांशेन मितः कंठः सप्तभागमितं मुखम्।

वेदी मध्यविधातव्या त्र्यंशोमविस्तारः कण्ठस्य परिकीर्त्तितः।

मुखं कण्ठसमानं स्यात् मुखे मार्गं प्रकल्पयेत्॥ ५-५६॥

कनिष्ठांगुलिमानेन सर्पिषो निर्गमाय च।

४१ब) वेदीमध्यविधातव्या भागेनैकेन कर्णिका॥ ५-५७॥

विद्धीतवहिस्तस्या एकांशे नाभितो वटम्।

तस्य खातं त्रिभिर्भागै वृत्तमद्धाशतो व हि॥ ५-५८॥

अंशे नैकेन परितो दलानि परिकल्पयेत्।

अवतंगत्तम्॥

मेखलामुखवेद्याः स्या परितोर्द्धांशमानतः॥ ५-५९॥

दंदुमूलाग्रयोः कुंभौ गुणवेदाङ्गुलैः क्रमात्।

गंडीयुगं समांसैः स्याद् दंडस्मानाहृ ईरितः॥ ५-६०॥

षड्रिरंशैः पृष्ठभागो वेद्याः कुमाकृतिर्भवेत्।

हंसस्य वा हस्तिनो वा पक्षिणो वा मुखं लिखेत्॥ ५-६१॥

मुखस्य पृष्ठभागे स्या संप्रोक्तं लक्षणंस्तु चः।

स्तुवश्चतुर्विंशतिभिभागे रोचयत् स्तुवम्॥

द्वाविंशत्यादंदमानं वंशोरेतस्य कीर्तितम्॥ ५-६२॥

चतुर्विंशै चानाहः कर्षाज्यग्राहिताशरः॥

आनाहोदीर्घः कर्षस्तोलकद्वयम्॥

अंशद्वयेन विलिखेत्येके मृगे पदाकृति।

दण्डमूलाग्रयोर्गण्डी भवेत् कंकणभूषिता॥ ५-६३॥

स्तुवण्यविधिराख्यातः सर्वतन्त्रानुसारतः।

गण्डीकंकणकुंभयो नित्यमनः॥

यथोक्तस्तुक्स्तुवा भावे तुलाघवभट्टवृतसंहितायाम्।

पालाशपत्रनिच्छित्रे रुचिरे स्त्रुक् प्रुवौ स्मृतौ॥ ५-६४॥

अथ कुण्डदोषा ना हविश्वकर्मा॥

४२अ) खाताधिके भवेद् रोगी हीने धेनुधनक्षयः।

वक्रकुण्डेषु सन्तापो मलणं छिन्नमेखले॥ ५-६५॥

मेखेला लहिते शोको ज्यधिके वित्तसंक्षयः।

भार्या विनाशकं कुण्डं प्रोक्तं योन्या विनाकृतम्॥ ५-६६॥

अपद्यं ध्वंसनं प्रोक्तं कुण्ड यत् कण्ठवर्जितम्।

आत एव वशिष्ठसंहितायाम्॥

तस्मात् सम्यक् परिष्यैवं कर्त्तव्यं शुभवेदिकाम्॥ ५-६७॥

हस्तमात्रं स्थंडिलं वासं क्षिप्ते होमकर्मणि।

क्रियासारे॥

कुण्डमेवं विधिं नस्या स्थण्डिलं वासमाश्रयत्॥ ५-६८॥

शारदातिलके॥

नित्यं नैमित्तीकं काम्यं स्थंडिले वासमाचरेत्।

हस्तमात्रं तु तत् कुर्या चतुरश्रं समन्ततः॥ ५-६९॥

महाकपिलपंचरात्रे॥

संख्यानुक्तो शतं शास्त्रं सहस्त्रं वा जयादिषु।

होमे स्वाहां ततो माह यज्ञपार्श्वे॥

आदाय दक्षिणे पाणौ स्त्रवतिर्मधुरं हविः॥ ५-७०॥

प्राङ्मुखो वह्नि जाया ते जुहुयान् युञ्जपाणिना।

तिमधुरं घृतमधुशर्करात्मकम्।

वह्निजाया स्वाहा॥

मन्त्रेणांकारपूतेन स्वाहान्ते च विचक्षणः॥ ५-७१॥

स्वाहा वसाने जुहुयाद् व्यायेन् वै मन्त्रदेवता।

मिति स्मृतेः॥

स्वाहान्तमन्त्रस्वाहान्तरं निमीषदुति मन्त्रतन्त्रप्रकाशः॥

नमोन्ते न नमो दद्यात् स्वाहान्ते द्विठमेव च॥ ५-७२॥

पूजायामाहुतौ वापि सर्वत्रायं विधिः शिवे।

४२ब) द्विठ स्वाहा॥

ठकारेण लिपिसाम्याद् विन्दुरुच्यते।

तेस्य द्वित्वं तेन विसर्गः॥

स च शक्ते रूपः तेन विशब्देनाग्निशक्तिः स्वाहोक्तेति राघवभट्ट ते वस्तुः॥

अत्र तु स्वाहा शब्दः स्वीयद्रव्यत्यागथकः॥

यथा॥ ५-उपविष्टहोमः स्वाहाकारप्रधाना जुहोत पठति हरिशर्मधृतम्॥

स्वाहाकारेण स्वाहेति पदेन प्रधानं त्यागो या सुतास्तथा।

अत एव स्वाहाकारस्य प्रधानार्थत्वार्द्धविरत्यागस्याम्नाय सिद्धै
नैवकृतस्य द्वितीयस्या स्नानमनर्थकं स्याद् इति भट्टः भाष्यम्॥

आस्नानं पुनः पाठं प्राणानार्थं तु तत्र वै यत्र मन्त्रस्थं नाम्नि
चतुर्थान्तेता अतो जयतीत्यादौ नमः स्वाहा वा पुनर्दीयते इति न्युब्जपानिनेति
साक्ष्यं तरीयम्॥

शाषान्तरोक्तम्॥

उत्ताने नैव हस्तेन अंगुद्धाग्रेन पीडितम्॥ ५-७३॥

सहिताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद् इति।

महादाननिर्णये धृत गोभिलीयवचनात्॥ ५-७४॥

एतद् वचनं परिशाष्टियमिति माधवाचार्यः॥

श्राभविष्य॥

आहुतिंस्तु घृतादीनां स्तुवेणाधो मुखेन तु।

हुनेति लाज्याहुतिस्तु दैवनोन्तानपाणिना॥ ५-७५॥

एवं च पंचाङ्गुलं त्यक्त्वा शंखमुद्रया धार्याः॥

पंचाङ्गुलान्वहिस्त्यक्त्वा धारयछंखमुद्रयेति वाचस्पति॥

४३अ) मिश्रकृत महादाननिर्णयधृतवचनात्॥

अग्नेर्नामानि च गोभिल कृता गृहार्थसारसंग्रहः॥

लौकिके पावको ह्यग्निः प्रथमः परिकीर्त्तितः।

अग्निस्तु मारुतो नाम गर्भाधाने विधीयते॥ ५-७६॥

पूंसवने चन्द्रमाश्च शु *?कर्मणिशोभनः।

सीमन्तो मंगले नासः प्रागल्भाजातकर्मणि॥ ५-७७॥

नाग्निस्यात् पार्थिवा ह्यग्निः प्रा *?ने च शुचिस्तथा।

सत्यनामाथचूडायां ब्रतादेव समुद्भवः॥ ५-७८॥

गोदाने सूर्यनामा च केशान्त्यज्यग्निरुच्यते।

वैश्वानराविसर्गे च विवाहे योजकः स्मृतः॥ ५-७९॥

गोदाने गोदानाख्यसंस्कार॥

चतुर्थां तु शिखीनाम धृतिरग्निस्तथा परे।

अपरे धृतिं होमादौ॥

प्रायश्चित्तै विंधुश्चैव पाकयज्ञे तु साहसः॥ ५-८०॥

प्रायश्चित्ते प्रायश्चित्तात्मकमहाव्याहृतिं होमादौ पाकयज्ञपाकजहोम॥

वृषोत्सर्गगृहप्रतिष्ठा होमादौ॥

लक्षहोमे च वह्निः स्यात् कोटिहोमे हुताशनः।

पूर्णाहुत्यां मृडो नामणान्तिकेवलदः सदा॥ ५-८१॥

प।उष्टिके वलदश्चैव क्रोधाग्निश्चाभिचारिकः।

कोष्ठे भुजठरोनाम क्रव्यादो मृतभक्ष्यणेः॥ ५-८२॥

मृतदाहे॥

गुणविष्णुधृता स्मृतिरपि॥

सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः।

४३ब्) विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु॥ ५-८३॥

आहूयत्यादिकमत्रवोधव्यम्॥

अग्निं प्रणयनानन्तरं सर्वत्रेत्यस्यपाठो युज्यते
प्रणीत इति मन्त्रलिङ्गात्॥

अन्यथा स्थापनामन्त्ररमेतभिधानं व्यर्थं स्मात्।

गुणविष्णुनापि श्रातिरिति॥

आहुय चैव होतव्यं यत्र यो विहितोनलः॥

तथा॥

शुभं पात्रं तु कांस्यस्यान्ते नाग्नि प्रणयेद् बुधः॥ ५-८४॥

तस्मा भावे संराव नन वे नाभिमुखं च तम्।

पूर्णायां विशेषमाह॥

सामगानां तु पूर्णोहमित्यादि मूर्द्धान दिवे॥ ५-८५॥

रात्रिमिति तु॥

तद्दितराणां शान्तिदीप्तिकायां वशिष्ठः।

ऐशान्या माहरेद् भस्मस्रुचा वाथ स्रुवेन वा।

वंदानां कारयेत् तेन शिरः कंठांसकेषु च॥ ५-८६॥

कलस्य पश्यति मन्त्रेण यथानुक्रमयोगतः।

तथा॥

तथा शान्तिं प्रकुर्वीत अवधारणवाचनम्॥

दक्षिणां च प्रदातव्या ग्रहादीनां विसर्जनम्।

दीक्षा प्रयोगं वक्ष्यामि नानातन्त्रानुसारतः॥ ५-८७॥

अथ कृतनित्यकृत्यो गुरुः॥

शुभलग्ने तु षाराङ्गाररहितभूमौ दीक्षाङ्गयागमन्त्रपनिमाणं कुर्यात्।

ततो दीक्षा पूर्वदिने मण्डमध्ययथोक्ता वेदिनिमायतदुपरि सर्वतोभद्रमण्डलं कुर्यात्।

मण्डपमंडलयोनिमाणं अन्यत्र पमाणे नुसंधेयम्॥

४४अ) ततो दीक्षादिवसे प्रातः कृत नित्य कृत्यो गुरुमंडपद्वारमागत्य वहिरूपरिप्य तत्र प्राङ्मुख उदङ्मुखो वा उपविशेत्॥

शुचिः पूर्वमुपोषितः शिष्योपि तत्रागत्य स्वस्तिवाचन पूर्वकं संकल्पं कृत्वा गुरुं वादिभिः संपूज्य वृणुयात्।

संकल्पो यथा॥

विष्णो ॐ अद्यत्यादि अमुक गोत्रामुकदेवशर्मा चतुर्वर्गफलप्राप्तिकामोमुकगोत्रं श्रीमुकदेवशर्माणं श्रीमुकदेवतायाः यदक्षरमन्त्रदैशिकत्वे नैभिः पाद्यादिभिरभ्यर्च्य (-भ्यर्च्य) भगवतमहं वृणे ॐ वृतोस्मीति प्रतिवचनम् ततः शिष्यो यथा विहितं दीक्षाकर्मकुर्वीति वदेत्॥

यथा ज्ञानतः करण वा नीति गुरुः ततः कृतांजलिः शिष्यो भगवन् परमात्मरूपिण् परमकारुणिकगुरोसकलपुरुषार्थसाधनं मन्त्रदीक्षाभिषेकपूर्वकं मां प्रसादयत्युक्त्वा गुरोराज्ञया सहस्र गायत्रीं जपन् विनयी गुरोर्दक्षिजपेत्॥

ततो गुरुः सामान्यार्घं स्थापयेत्॥

तेद्यथा॥

स्ववामे त्रिकोणमंडलं कृत्वा आधारं तदुपरिसंस्थाप्य मं वह्निमण्डलाय दशकलात्मने नम।

इत्याधारं संपूज्य फदिति अर्घपात्रं प्रक्षाल्य तदुपरि संस्थाप्य अं सूर्यमंडलाय द्वादशकलात्मने नमः॥

४४ब) इति पात्रं संपूज्य नम इति शुद्धजलेनापूर्ये॥

ॐ सोममण्डलाय षोडशकलात्मनेनम इति पूर्ववत्॥

तस्मिन् जले॥

ॐ गंगे च यमुने चैव त्यादि अंकुशमुद्रया तीर्थमावाह्य तत्र प्रणनगंधाक्षतानिक्षिप्य

मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रां प्रदर्शयेत्।

एवं प्रकारनान्यदपि पात्रं स्थापयेत्॥

फदिति मन्त्रेण द्वारं संप्रोक्ष्य द्वारपूजां संकुर्यात्॥

तद्यथा॥

द्वारस्योर्ध्वशाखायां मध्यविघ्नाये नमः॥

दक्षिणे महालक्ष्मे? तद्वामे सरस्वत्यै द्वारदक्षिणे विघ्नेशाय गंगायै
द्वारवामे क्षेत्रेशायै यमुनायै नमः॥

देहल्यां अस्त्राये नमः॥

एवं प्रतिद्वारं पूजां कुर्यात्।

ततोङ्गसंकोच्य दक्षिणपादः पुरासरं गृहं प्रविशेत्॥

ततः पंचगव्यसामान्यार्घतोयाभ्या गृहा *? तरं संप्रोक्ष्य
संस्कारचतुष्टयं कुर्यात्।

यथा मूलमन्त्रेन गृहं वीक्ष्यत्।

फडिति गृहं प्रोक्षयेत्।

एवं दभेस्ताडयेत्॥

ततः पूजास्थले रक्तकं वलासनमास्तीर्यधृत्वा पठेत्॥

मेरुपृष्ट ऋषिरिति पूर्वलिखितमेव

पृथ्वि त्वया धृता लोकेति च पठित्वा ह्रीँ श्रीँ आधारशक्तिकमलासनाय नमः॥

४५अ) इत्यासनाये नम इत्यासनं पूसज्य तदुपरि स्वस्तिकादिक्रमेणोप्रविशेत्॥

ततः सिद्धार्थाक्षतमादाय अपसर्पं तु यद् भूता

इति पठित्वा स्त्राय फट् इत्येन नोक्षं तान्विकीर्यपार्णिघातन भौमान् विघ्नोन् नंगुष्ठतर्जनीभ्यामास्फोटेनान्तरिक्ष गात्वालया समुदंरितवक्रमूर्ध्वदृष्टा दिव्यानिति त्रिविधविघ्नानुत्सार्य नैऋत्यां वास्त्वीशाये नमः॥

ब्रह्मणे नम इति संपूज्य भूतेभ्य एष मांसभक्तवलिर्नम इत्युत्सृज्ये भूतवलिं दत्वान् विकिरान्विकिरेत्॥

यथा॥

राजा वंदनसिद्धार्थ भस्मदुर्वाकुशाक्षतान् एकीकृत्य फडिति सप्तधाजपन् त्रिविधा विकिरेत्॥

अस्त्रजप्तेन दभाणां मुष्टिनामार्जयेच्छतान्।

तान्विकिरान् तथा चास्त्राय फट्॥

इति मन्त्रेण कुशमुष्टिनाविकिरान् मार्जयेत्॥

ईशानकोणे वर्द्धन्या आसनाय प्रकल्पयेत्।

वर्धिणी विकलाधिष्ठा तृदेवता तस्या आसनाय ईशानकोणे विष्ठरोपरिवर्द्धिनी संज्ञकं जलाधारं स्थापयेत्।

ततो दक्षिणपूजाद्रव्याणि पृष्ठकरप्रक्षालनार्थं पात्रं स्थापयेत्।

घृतप्रज्वालिता दीपान् परितस्थापयेत्।

यथा शक्ति चाचामनादिकम्॥

४५ब्) ततो वामे गुरुभ्यो नमः॥

दक्षिणे गणेशाय मध्य इष्टदेवतायै नमः॥

इति भूतशुद्धिं कुर्यात्॥

स्वाङ्गे उत्तानहस्तौ कृत्वा सोहमिति मन्त्रेण प्रदीपकलिकाकारं हृदयस्थजीवात्मानं मूलाधारस्थ सहस्रदलकमलकर्णिकान्तर्गत परमात्मनि लीनं विचिन्त्य॥

पादतो जानुपर्यन्तं चतुरस्रं स चक्रकम्॥ ५-८८॥

लं युतं पीतवर्णं च भुवः स्थानं विचिन्तयेत्।

जानोरा नाभिचन्द्रार्धनिभं पद्मे न लांच्छितम्॥ ५-८९॥

शुक्लवर्णं स्ववीजेन युतं ध्यायेदपांस्थलम्।

नाभितः कंठपर्यन्तं सत्रिकोणं सरक्तम्॥ ५-९०॥

सस्वस्तिकं स्ववीजेन युक्तं वह्नेस्तु मण्डलम्।

कण्ठाद्भ्रूमध्यपर्यन्तं कृष्णवायोस्तु मण्डलम्॥ ५-९१॥

षट्कोणं विंदुभिः षड्भियुक्तं वीजेन चिन्तयेत्।

भ्रूमध्याद् ब्रह्मरंध्रान्तं चत्तुलं ध्वजलांच्छितम्॥ ५-९२॥

धूम्रवर्णं स्ववीजेन युक्तं ध्यायेन् नभस्थलम्।

पृथिव्यालं वीजजलस्य वं अग्नेः रं वायोः यं आकास्य हं एवं
ध्यात्वा ततस्तानि भूतानि प्रविलापयेत्॥

पृथ्वीमप्सु च तौ वह्नो वह्निं वायोसमीरणम्॥ ५-९३॥

प्रविलाप्य तथा काशे आकाशं प्रकृतौ ततः।

अपरब्रह्मरूपां तां मायाशक्तिं परात्मनि॥ ५-९४॥

इति समस्तदेहादिस्नपंचपरमात्मनि

प्रविलाप्य पुरुषाकार भागनादिभवसंचितम्।

४६अ) ब्रह्महत्या शिरस्कं च स्वर्णस्तेय भुजद्वयमिति पूर्वं लिखितमिति॥

वामकुक्षौ विचिन्तयेद् इति तावत्।

तत इडावक्रे वामेनसि धूम्रवर्णं यमिति वायूवीजं षोडशवारं
जपन्।

वामनासापुटेन वायुं नादेहमापुर्य पुनर्यमिति चतुःषष्टिवारं जपन्
कुंभकं दुखनदेहं संसोष्य पुनर्यमिति द्वात्रिंशद्वारं जपन्
दक्षिननासापुटेन देहमापुर्यचतुःषष्टिवारजप्तेन कुंभकं कुर्चन् तद्
भस्मीभूतमिति विचिन्त्य रमिति द्वात्रींशद्वारं जपन्।

चामता स या भस्मना सहवायुं रेचयेत्।

ततः ठमिति चंद्रवीजं शुद्रं प्रकृत्यात्मकं वामनासापुटेन
पुरुषात्मकं ललाटचंद्रं षोडशवारं जपन्नयेत्॥

ततो वमिति चतुःषष्ठिवारं जपन् ललाटचंद्राददिक्षान्ताम्
अक्षरमयीवृष्टिं निपात्यतया देवो पासनयोग्यं सकलवपुः कुर्वन् लं इति
द्वात्रिंशद्वारं जपन् दक्षिनासापुटेन वायुं रेचयेत्॥

पुनरुत्पादय देहं पवित्रं परमात्मनः॥ ५-९५॥

परब्रह्मात्मिका माया प्रकृतिमातृका पराः।

अजायत जगन्मातुराकाशं नभशोनिलः॥ ५-९६॥

समीरनादभूद्वह्नि वह्नेरापस्ततो मही।

सेयमेभ्योपिभूतेभ्यस्तेजोरूपं करेवरम्॥ ५-९७॥

४६ब) देवताराधने योग्यम् उत्पन्नमिति भावयेत्।

तस्मिन् देहे परात्मानं सर्वज्ञः शर्वशक्तिमान्॥ ५-९८॥

समस्तदेवतारूपः सर्वमन्त्रमयः शुभः।

आत्मरूपेन देहस्वे जीवभावेन तिष्ठति॥ ५-९९॥

इत्य व भावनामुख्या भूतशुद्धिरिहोदिता।

नासापुतौद्धृत्वा वायुमवःछत्यहंसः

सोहं अवतर २ शिवपदाजीवसुषुमनामथेन प्रविशमूलश्शृङ्गारमुल्लस २
ज्वल २ प्रज्वल २ हंसः सोहं स्वाहा॥

ततः पृथिव्यादीनितत्त्वानि यथा स्थाने स्थापयित्वा हृपद्मे देवतासमानीय
हृदिहस्तं दत्त्वा अं आँ ह्रीँ क्रौँ हँसः ममप्राणाः॥

एवं ममजीव इहस्थितः॥

एवं सर्वेन्द्रियाणि वाङ्मनो नयनश्रोत्रघ्राणप्राण इहागत्य सुखं
चिरं तिष्ठन्तु स्वाहा॥

एतत् करणासक्ता नामे तत् पाठमात्रेणैव भूतशुद्धिः स्यात्।

इति भूतशुद्धिः॥

ततः प्राणायामं कुर्यात्।

मूलमन्त्रेण वायो वा श्रीवीजेन वा प्राणायामं कुर्याद् यथ॥

श्रीमिति षोडशवारं कुंभकं कुर्वन् पुनः श्रीद्वात्रिंशद्वारं
दक्षिणा सा पुटेन वायुं रेचयेत्॥

इत्येकः प्राणायामः॥

एवं षोडशवारं द्वादशवारं वारत्रयं वा कुर्यात्॥

ततः ऋष्यादि न्यासं कुर्यात्॥

आत्मनो मूर्ध्नि वदने हृदये च यथाक्रमम्॥ ५-१००॥

मूर्ध्नि अमुक ऋषये नमः मुखे एवं घंदसे नमः॥

४७अ) हृदिदेवतायै नमः कृताञ्जलिः अमुकसिद्ध्यर्थे विनियोगः॥

मातृका न्यासः॥

क्वचिदपि मन्त्रेण शुयते तथाप्य वश्यं कर्त्तव्यः॥

जपाद्यं सर्वमन्त्राणां विन्यासेन विनालिपेः।

कृततन्निष्फलं विद्यान् तस्मात् पूर्वं लिपिं न्यसेत्॥ ५-१०१॥

ततो मातृकान्यासं कुर्यात्।

वाग्भवाद्या वाक् प्रदास्या त्रिताराद्या तु कामदा।

श्रीवीजाद्या महैश्वर्यं दायिती मातृका स्मृता॥ ५-१०२॥

वाग्भवः ऐँ त्रितारा ऐँ ह्रीँ श्रीँ इति वीजत्रयं श्रीँ वीजं श्रीँ इति वीजम्॥

तदुक्तं सारसंग्रहे॥

मनसा वान् न्यसे न्यासात् कुसुमैवाथवा न्यसेत्।

अंगुष्ठानामिका योगा न्यसेद् वा सर्वकर्मसु॥ ५-१०३॥

धर्मविद्दक्षिणं हस्तमधोनाभेर्नयो जपेत्।

श्रीब्रह्मा ऋषि गायत्री च्छंदः मातृका सरस्वति देवता फलो वीजानि स्वराः
शक्तयः मातृका न्यास विनियोगः॥

सिरसि ब्रह्म ऋषये नमः॥

मुखे गायत्री छंदसे नमः॥

हृदि मातृकान्या * सरस्वती देवतायै नमः॥

गुह्येफलदो?वीजेभ्यो नमः।

पादयोः स्वरेभ्यः शक्तिभ्यो नमः॥

कृतांजलिमातृका न्यासे विनियोग॥

ललाटमुखवृत्ताक्षी श्रुतिघ्राणेषु मण्डयो॥ ५-१०४॥

ओष्ठदन्तोत्तमांङ्गाम्पदोष्यस्संध्यग्रकेषु च।

पार्श्वः योः पृस्थतौ (?) नाभौ जठरे हृदयांसके॥ ५-१०५॥

४७ब) ककुद्यंसे च हृत् पूर्वं पाणिपादयुगेष्वपि।

जठराननयोर्न्यसे मातृकार्णान् यथाक्रमम्॥ ५-१०६॥

तथा च विश्वसारोत्तरे॥

ॐ माद्यन्तो नमो तो वा सविन्दु विन्दु वर्जितः।

पंचाशदक्षरन्यासः क्रमेणैवं विधीयते॥ ५-१०७॥

श्रीँ अँ नमो ललाटे॥ श्रीँ आँ मुखवृत्ते॥

श्रीँ इँ दक्षिणचक्षुषि॥ श्रीँ ईँ वामचक्षुषि॥

श्रीँ उँ दक्षिनकर्णे॥ श्रीँ ऋँ दक्षनासायाम्॥

श्रीँ ॠँ वामनासायाम्॥ श्रीँ ऌँ दक्षगंडे॥

श्रीँ ॡँ वामगंडे॥ श्रीँ एँ ओष्ठा॥

श्रीँ ऐँ अधर॥ श्रीँ ओँ ऊर्द्धदन्ते॥

श्रीँ औँ अधोदन्तेः॥ श्रीँ अं नमः मूर्ध्नि॥

श्रीँ अः आनमोमुखेः॥ श्रीँ कँ दक्षवाहुमूले॥

श्रीँ खँ कूर्परे॥ श्रीँ गँ मणिवंधे॥

श्रीँ घँ अंगुलिमूले॥ श्रीँ ङँ अङ्गुल्याग्रे॥

श्रीँ चँ वामवाहुमूले॥ श्रीँ छं कूर्परे॥

श्रीँ जँ मणिवंधे॥ श्रीँ झँ अंगुलिमूले॥

श्रीँ ञँ अंगुल्यग्रे॥ श्रीँ टँ दक्षारुमूले॥

श्रीँ ठँ जानुनि॥ श्रीँ डँ गुल्फे॥ श्रीँ ढँ अंगुलिमूले॥

श्रीँ णँ अंगुल्यग्रे॥ श्रीँ तँ वामोरुमूले॥

श्रीँ थँ जानुनि॥ श्रीँ दँ गुल्फे॥ श्रीँ धँ अंगुलिमूले॥

श्रीँ नँ अंगुल्यग्रे॥ श्रीँ पँ दक्षपार्श्वे॥

श्रीँ फँ वामपार्श्वे॥ श्रीँ बँ पृष्ठे॥

श्रीँ भँ नाभौ॥ श्रीँ मँ मंडदरे॥

श्रीँ मँ त्वगात्मनि हृदय॥ श्रीँ रँ असृगात्मनिदक्षवाहुमूले॥

श्रीँ लँ मारोत्मनिककुदि॥ श्रीँ वँ मेदात्मनिवाहुमूले॥

४८अ) श्रीँ शँ अस्त्यात्मनि हृदयादिदक्षिणकरे॥

श्रीँ षँ सज्जात्मनि हृदयादिवामकरे॥

श्रीँ सँ शुक्रात्मनि हृदयादिदक्षिणपादे॥

श्रीँ हं नमः प्राणात्मणि हृदयादिवामं पाद॥

श्रीँ लं नमः॥ जीवात्मनि हृदयाद्युदरेः॥

श्रीँ क्षँ नमः परमात्मनि हृदयादिमुखे॥

ततो मन्त्रं न्यासं कुर्यात्॥

अथ करन्यासः।

अंगुष्ठाभ्यामिति करतरपृष्ठेयोरस्त्राय फडिति तवत्॥

करन्यास॥

एवं हृदयाद्यारभ्यशिखायैषट् तावट्॥

इति अधोंगुष्ठमूला शिखायां कवचाय हुं मिति व्यत्ययहस्ताभ्यां
स्कंधोद्युरुपर्यन्तं नेत्रत्रयाय वौषट्।

इति तर्जनीमध्यमानामिकाभिनेत्रत्रय।

अस्त्राय फदित्युर्ध्वोर्ध्वं तालत्रयं दत्त्वा
छोतिकाभिर्दशभिदिग्वंधनं कुर्यात्॥

ततः स्वदेहपीठं न्यासं कुर्यात्॥

ॐ आधारशक्तये नमः॥ कूर्माय॥

अनन्ताय॥ पृथिव्यौ॥

सुधासागरायै॥ रत्नद्वीपाय॥

मणिमंडपाय॥ रत्नवेदिकायै॥

रत्नसिंहासनाय नमः॥ इति हृदये॥

अंसद्वयोरुद्वयवदनकतिपार्श्वयुग्मेषु भूयः प्रादक्षिण्यनन्यसेत्॥

ॐ धर्माये नम इति दक्षांसेः॥

ॐ ज्ञानाये नमोवामांसे॥

ॐ वैराग्याय नमः॥ नाभौ॥

ॐ अनैश्वर्याय दक्षपार्श्वे॥

पुनर्हृदये॥

ॐ आनन्दकन्दाये नमः॥

४८ब) ॐ संविन्नाराये नमः॥ ॐ सर्वतत्त्वात्मकपदाये॥

ॐ प्रकृतिमयपत्त्रेभ्यो॥ ॐ विकारमयकेसरेभ्यो॥

ॐ पंचाशद्वीजाद्यकर्णिकायै नमः॥

ॐ मँ वह्निमंडलाये दशकलात्मने नमः॥

ॐ अं सूर्यमण्डलायद्वादशकलात्मने नमः॥

ॐ ऊँ सोममंडलाय षोडशकलात्मने नमः॥

ॐ सं सत्त्वाये नमः॥ ॐ रं रजसे नमः॥

ॐ तं तमसे नमः॥ ॐ आँ आत्मने नमः॥

ॐ अँ अन्तरात्मने नमः॥ ॐ पं परमात्मने नमः॥

ॐ ह्रीँ ज्ञानात्मने नमः॥

ततः स्तत् पीठशक्तीन्यस्से पीठमन्त्रं पठित्वा मुकदेवता पीठाये नमः
॥

इति न्यासं कृत्वा हृत्पद्मदेवतां ध्यात्वा मानसोपचारै
राराध्यमुद्रां दर्शयित्वा नमस्कृत्यार्घपात्रं स्थापयेत्॥

तद्यथा तत्त्वसागरसंहितायाम्॥

आधारं त्रिपदं प्राहुः षट्पदं वा चतुष्पदं अथवा वर्त्तुराकारं
कुर्या देवी मनोहरम्॥

स्वर्णरूप्यशिलाकूर्म कपालाम्बुमृणमयम्।

नालिकेलं च शंखं च मुक्ताशुक्तिसमुद्भवम्॥ ५-१०८॥

पुण्यवृक्षसमुद्भूतं पात्रं कुर्याद् विचक्षणः।

अतिसूक्ष्ममतिस्थूरं भिन्नं छिन्नं च वर्ज्जयेत्॥ ५-१०९॥

सुवर्णरौप्यतामुणि? सर्वसिद्धिकराणि च।

शान्तिके च शिलापात्रं स्तम्भणे चैव मृणमयम्॥ ५-११०॥

नालिकेलं च वश्यादा वभिचार च कुर्मजम्।

शंखं ज्ञानप्रदं मुक्ता शुक्तिविद्या प्रदायिणी॥ ५-१११॥

४९अ) कपाललावुपात्राणि योगं सिद्धिकराणि च।

पुण्यवृक्षजपात्राणि सर्वपापहराणि च॥ ५-११२॥

उक्ते प्रेतेषु देवेशि पात्रमेकं प्रकल्पयेत्।

आत्मदेवतयो मध्ये पात्राणि स्थापयेद् वुधः॥ ५-११३॥

गुरोपात्रं घटस्यान्ते तदन्ते भोगपात्रकम्।

तदन्ते शक्तिपात्रं च योगिनीनां तदन्तिके॥ ५-११४॥

तदन्ते वीरपात्रं च वलेः पात्रं तदन्तिके।

पाद्यमाचमनीयं च पात्राणि स्थापयेद् बुधः॥ ५-११५॥

उत्तमं नवपात्राणि सप्तपात्राणि मध्यमम्।

केचिद् वदन्ति मन्त्रज्ञा पंचपात्राणिमध्यमम्॥ ५-११६॥

अधमन्त्रिणिपात्राणि पात्रद्वयं तथैव च।

देवता पूजनमन्त्री एकपात्रं नकारयेत्॥ ५-११७॥

पंचपात्रपक्षे॥

देवी पात्रं गुरो पात्रं भोगपात्रत्रयं मतम्।

पूजापात्रं वलेः पात्रं पंचपात्रवयं विधिः॥ ५-११८॥

पंचपात्रेषु॥

पूजापात्रं च विज्ञेयं योगिनीनां च तर्पणे।

पाद्यमाचमनीयं च वलेः पात्रा सुरार्चने॥ ५-११९॥

ततोर्घपात्रा स्थापनम्॥

स्ववामे त्रिकोनमण्डलं कृत्वा तदुपरित्रिपदिकामानोप्य अस्त्राय फडिति शंखं प्रोष्य तदुपरि संस्थाप्य मूलमन्त्रेण जपन् शुद्धजलमापूर्य मं वह्निमण्डलाय त्याग्नि सूर्यसोमानां पूर्वं लिखितेमिति जलं संपूज्य॥

ह्राँ हृदयाय नमः॥ ह्रीँ शिरसे नमः॥ स्वाहा॥

४९ब) ह्रूँ शिखायै वषट्॥ ह्रैँ कवचाय हुम्॥

ह्रौँ नेत्रत्रयाय वौषट्॥ हुँ अस्त्राय फट्॥

षडंगमन्त्रैरपि संपूज्य हस्ताभ्यां आच्छाद्य तस्मिन् जले मूल॥

मन्त्रसत्त्रधा जप्त्वास्त्रेण संरक्ष्य कवचेनावगुंठा वमिति
धेनुमुद्रयामृती कृत्य तत्र गंधपुष्पाक्षतं निक्षिपेत्॥

एवं प्रकारेण तस्य दक्षिणे प्रोक्षणीपात्रं संस्थाप्य किंचिद् अर्घजलं
गृहीत्वा प्रोक्षणीजले निक्षिप्यते नोदकेन पूजोपकरणं
यागमन्त्रपंचात्युक्षेत्।

एवं अर्घपात्रस्य वामे पाद्यपात्रं आचमनीयपात्रं स्थापयेत्॥

इत्यर्घं संस्थाप्य घटस्थापनं कुर्यात्।

तद्यथा॥

प्रथमतो मंडलं गंधादिभिः संपूज्य शालिभिः
कर्णिकामध्यतेमायूर्यतेदुपरि कुशानार्य तदुपरि साक्षतां विस्तारं
संस्थाप्य तदुपरि घटं अस्त्राय फडिति प्रक्षालिताक्षरं कर्पूरादि
सुधुपितं नीलंध्रं सुमनोहरं यथोक्त त्रिगुणतन्तुभिर्वेष्टितं
चानादिभिललंकृतं पुष्पमाल्यां ल्ंकृत ग्रीवदूर्वाक्षतसमन्वित्
नवरत्नोदलं विलोममातृकामूलमन्त्रं च जपेन्

क्षीरद्रुमपरासत्वोग्भवकषाय यथोक्त गंधाष्टकयुक्तैः सुगन्धिजलैरापुरितान्तरं अश्वत्थोदुम्वरप्थक्षेन्यग्रोधास्त्रा नामपराजिता लता वेष्टितमवपल्लवमुखं मुखदत्तसफलयवेशरावं सूक्ष्मवस्त्रयुग्म वेष्टितं ॐकारमुर्चरम् भूरसीत्यादिभि वैदिकमन्त्रै विष्टरोपरि स्थापयेत्।

५०अ) ततः कुंभं कुशाग्रेण पृष्ट्वा प्राणे प्रतिष्ठां मन्त्रो यथा।

पाशादित्यक्षरात्मान्ते स्योद्पुष्पं पदं पुनः।

क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः॥ ५-१२०॥

अमुख्य सर्वेन्द्रियाणि भूयो मुख्यपदं वदेत्।

वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ॥ ५-१२१॥

पश्चाद् इहागत्य सुखं चिरं तिष्ठन्तु ठ द्वयम्।

अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः॥ ५-१२२॥

सर्वत्र॥

आँ ह्रीँ क्राँ हँ सः इत्यन्ते अमुख्यपदं देयमिति निष्कर्षः॥ यथा॥

आँ ह्रीँ क्रौँ हँ सः अमुकदेवतायाः प्राणा इह प्राणा आँ ह्रीँ मिति
अमुकदेवता या जीव इह स्थित इति पुररेवं आँ ह्रीँ मिति अमुकदेवता याः
सर्वेन्द्रियाणि इत्यादि॥

प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥

इति प्राणप्रतिष्ठां कृत्वा॥

दिनकरकिरणारुणकुसुमांजलौ स्वहृदया द्वहन्ता सा पुटेन देवतां
समानीय मूलेन मूर्त्तिसंकल्प्य घटे संस्थाप्य संस्थापन
संनिधापन संनिधन सक्मणावगुंठनामृतीकरण परमीकरण
मुद्राभिघटदेवतामावाह्य तस्मिन्नघटे पीठान् पूजयेत्॥

ॐ आधारशक्तये नमः॥ ॐ कूर्माय॥

ॐ अनन्ताय॥ ॐ पृथिव्यै॥

ॐ सुधासागराय॥ ॐ रत्नद्वीपाय॥

ॐ कल्पवृक्षाय॥ ॐ रत्नमंडपाय॥

ॐ रत्नवेदिकायै॥ ॐ महासिंहासनाये नमः॥

इति संपूज्य पुष्पं गृहीत्वा देवतां ध्यात्वा घटे पुष्पं दत्त्वा
षोडशोपचारैः पूजयेत्॥ तद्यथा॥

आसनस्वागतं चार्घ्यमिति षोडशोपचारान् पूर्वं लिखितम्॥

तदुक्तं मानसोल्लासे॥

संवुद्ध्या प्रददेन् मन्त्री इति संवुद्ध्या संवोधनपदेन॥

पूजा यथा अमुकदेवते आसनं परिकल्प्ययामिनमः॥

स्वागतं कुशलप्रश्नम्॥ एवम्॥

अर्घं परिकल्पयामि स्वाहा॥

इति मूर्द्ध्नि दद्यात्॥

श्री-अमुकदेवते पाद्यमिति पादयोः॥

एवं अमुकदेवते आचमनीयमिति मुखे॥

एवं मधुपर्कं मुखांवुजे॥

एवं पुनराचमनीयं नमः एव स्नानीयम्॥

इदं वस्त्रं पलिकल्पयामि नमः॥

एवं यज्ञोपवीतं एवं आभरणानि एवं गंधपुष्पं धूपं दीपं
परिकल्पयामि नमः॥

नैवेद्यं पूरतः समानीयार्घजले नास्त्राय फडित् काह्रुमित्यवगुंठा

वमिति धेनुमुद्रयामृती कृत्य तदुपरि मूलं मन्त्रमष्टधा जप्त्वा श्री

अमुकदेवते नैवेद्यं परिकल्पयामि नम इत्युत्सृज्य अमृतो पस्तरणमसि स्वाहा

॥

जलं गंदूषं दत्त्वा प्राणायये स्वाहा इति प्रणवाद्यं

पंचप्राणाहुति हुत्वा तस्याः॥

५१अ) स्वीकारविभाव्या ॐ अमृतविधानम् अस्वि स्वाहा॥

इति पुनरपोशानं दत्त्वा प्राणाय स्वाहा इति प्रणवाद्यं पंचप्राण

आचमनीयं एवं ताम्बूलम्॥

एवं पुष्पांजलित्रयेन पूजयेत्॥

तत्र तत्र जलं दद्याद् उपचारां तरान्तरे।

केसरेष्वग्निकोणादि हृदयादिंश्च पूजयेत्॥ ५-१२३॥

ॐ ह्राँ हृदयाये नम इत्यादि पूर्वादिषु अस्त्राय फट्।

इति चतुर्दिक्षुपूजयेत्॥

ततस्तत् तदेवता वरणान् संपूज्य लोकपालान् संपूजयेत्॥

इन्द्रमग्निं यमं रक्षो वरुणं पवणं विधू।

ईशानं पन्नगाधीशं अध उर्ध्वं पितामहम्॥ ५-१२४॥

यथोक्तदिक्षैतान् पूजयेत्॥

ततस्तेषां अस्त्राणि॥

वज्रं शक्तिं दण्डमसिं पाशमंकुशकं गदाम्।

शूरं चक्रं पद्मं एषां आयुधानिक्रमाद् विदुः॥ ५-१२५॥

क्रमादायुधान्यपि संपूज्य देयमानमन्त्रस्य दशसंस्कारान् कुर्यात्।

जननं जीवनं पश्चात् त्तादनं वोधनं तथा।

अथाभिषेको विमलीकरणाप्यायते ततः।

तर्पणं दीपनं गुप्तिर्दशैतान्मन्त्रसंस्क्रियाः॥ ५-१२६॥

मन्त्राणां मातृका मध्याद् उध्ययोजेन संस्मृतम्।

प्रणवान्तरितान् कृत्वा मन्त्रवर्णां जपेत् सुधीः॥ ५-१२७॥

एतज्जीवनमित्याहु मन्त्रतन्त्रविशारदः।

प्रणवान्तरितेति देय मन्त्रस्य केकवर्णानं रं प्रणवं दत्वा जपेद्
इत्यर्थः ॥

एतन् मन्त्रस्य जीवनम् ॥

५१ब्) मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनांभसा ॥ ५-१२८ ॥

प्रत्येकं वायुना मन्त्री तादनं तदुदाहृतम् ।

प्रत्येकमिति देयमन्त्रस्य प्रत्यक्षोपरियमिति वायुवीजमुर्चरन्
चंदनजलमिश्रितं दद्याद् इति मन्त्रस्य ताडनम् ॥

विलिख्य तन्मन्त्रं मन्त्री प्रसूनैः करवीरजैः ॥ ५-१२९ ॥

तन्मन्त्राक्षरसं ख्यातै हन्याद्यान्ते नवोधनम् ।

ताम्रपट्टादावित्यर्थः॥

यान्ते नेगियकारस्मात् एं रेफ तथाधरमिति वीजेन॥

एतन् मन्त्रस्य वोधनम्॥

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रस्य संख्यया॥ ५-१३०॥

अश्वत्थपल्लवे मन्त्रं अभिषिंचे विशुद्धय।

स्वतन्त्रोक्तेति॥

विष्णुपक्षे शुक्लचंदने देवीपक्षे रक्तचंदने नेत्यर्थः॥

संचिन्त्य मनसा मन्त्रं ज्योतिमन्त्रेन निर्दहेत्॥ ५-१३१॥

मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम्।

ज्योतिमन्त्रेण॥

ॐ ह्रीँ इति मन्त्रेण॥

ॐ ह्रीँ मलत्रयं मायिकर्मणशालिलसंज्ञकं इति मलत्रयम्॥

कुशोदकेन जप्तेन प्रत्येकं प्रोक्षणं मनो॥ ५-१३२॥

तेन मन्त्रेण विधिवद् एतदाप्यायनं मतं।

तेन एतन्मन्त्रस्याप्याये नमः॥

मन्त्रेणवारिणा मन्त्री तर्पणं तर्पणं मतम्॥ ५-१३३॥

मन्त्रेण देय मूलमन्त्रेण॥ तथा च॥

मूलमुच्चार्या मुकमन्त्रं तर्पयाम् इति प्रयोगः॥

एततर्पणम्॥

तारा माया रमा योगो मनो दीपनमुच्यते।

तारा ॐ माया ह्रीँ रमा श्रीँ योगः संवंधः तेन देय मन्त्रस्यादौ॥

५२अ) ॐ ह्रीँ श्रीँ इति वीजत्रयं दत्त्वा जपेदित्यर्थः॥

एतद् दीपनम्॥

जप्यमानस्य मन्त्रस्य गोपनं त्वन् प्रकाशनम्॥ ५-१३४॥

संस्कारदशसंप्रोक्ताः सर्वतन्त्रेषु गोपिताः।

यान् कृत्वा संप्रदायेन मन्त्री वांच्छितमाप्नुयात्॥ ५-१३५॥

ततो होमं कुर्यात्॥

तथा॥

प्राङ्मुख उपविष्टः स्वस्तिवाचन पूर्वके सूर्यः सोम इति पठित्वा
कुशजलान्यादाय विष्णोः अद्यत्यादि अमुकगोत्रामुकशर्मा
चतुर्वर्गफलप्राप्ति कामः अमुकदेवता या यदक्षरमन्त्रस्य
दीक्षाकर्माङ्गभूतामुकदेवता या य दक्षरपूर्वकं
तिलाज्यादिभिरष्टोत्तरसहस्रं शतं वाहां अकर्मकरिष्य इति संकलपे॥

यज्जाग्रत इति पठेत्॥ ततः प्रथमतः सर्वाधिकारिकं चतुरस्रकं डं
निरूपयामि॥

तत्र शहस्त्रहोमेण लयाधिशोभते पुरुषप्रमाणम्॥

आदौ कुण्डस्थानं निते वा शुभे तत् कुर्यात्॥

तदुक्तं विष्णुसंहितायाम्॥

आदौ भूमिं परिक्षे ते वास्तुज्ञाने विशारदः।

शल्पादीन् शोधयद् यत्नाद् अथवा पुरुषं खनेत्॥ ५-१३६॥

पुरुषं पुरुषप्रमाणम्॥

आदौ कुण्डस्थानं गोमयेनोपरिप्यसामान्यार्घं संस्थाप्य सामान्यार्घजलेनात्युक्ष्य पंचगव्यैरत्युक्षणं कुर्यात्॥

चतुर्विंशत्यंगुलप्रमाणं चतुरस्त्रं निर्मायाष्टादशसंस्कारान् कुर्यात्॥

५२ब्) यथा शारदायाम्॥

वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम्।

अत्रेण खननोद्धरौ हृदयेन प्रपूरणम्॥ ५-१३७॥

समीकरणमन्त्रेण सेवने वर्मणामतम्।

कुट्टनं हेति मन्त्रेण चर्ममन्त्रेणमार्जनम्॥ ५-१३८॥

विलेपनकलारूपं कल्पनं तदनन्तरम्।

त्रिसूत्रीकरणं पश्चाद् धृदयेनार्चनं मतम्॥ ५-१३९॥

अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः।

चतुष्पथं तेनुत्रेण ताडयादक्षपातनम्॥ ५-१४०॥

योगे कुण्डानिसंकुर्यात् संस्कारैरभिनीरितैः।

मूलमन्त्रेण देयमन्त्रेण तत् स्थानं पश्यत्॥ ५-१४१॥

अस्त्रायफडिति तत् स्थानं प्रोक्ष्ययेत् पुन एवं दर्भैस्ताडनं तादयेत्।

हुमिति अभ्युक्ष्ययेत्॥

अस्त्राय फडिति कुण्डखननम्॥

यावान् कुण्डस्य विस्तारः खननं तावद् इष्यते।

अस्त्राय फडिति मृत्तिकोद्धरणं नम इति मन्त्रेण पुरणं मृत्तिकान्तर
समीकरणार्थं मृत्तिकोद्धारस्थानं पूरयेत्॥

अस्त्रायेति तत् स्थानं समीकुर्यात्।

हुमिति सिंचेत्॥

फडिति कुण्डनं अथवास्त्राय फडिति कुंडनं दृढीकरणम्॥

अथवाहुमिति मन्त्रेण कुण्डनस्थानं मार्जयेत्।

वम इति गोमयनोपलेपयेत्॥

ततो हुमिति तत् कुडं कलारूपं भावयेत्।

तेन मन्त्रेणरक्तसूत्रत्रयेण शुक्लसूत्रत्रयेण वा मध्यमेखलं वेष्टयेत्
॥

५३अ) इति त्रिसूत्रीकरणम्॥

नम इति कुण्डमुर्चयेत् अस्त्राय फडिति कुण्डं वज्रत्वे न चिन्तयेत्॥

इति वज्रीकरणम्॥

नमः इति मन्त्रेण कुशैः कुण्डाभ्यन्तरे चतुरश्रं कुर्यात्॥

मध्य आवसध्यभगः पूर्वसत्यभागः॥

पश्चिमे आहवनीयभागः॥

उत्तरे अन्नाहार्यः॥

दक्षिणे गार्हपत्यः इति चतुष्पथीकरणम्॥

इति केचित्॥

वस्तुतस्तु कंडमध्यपूर्वदक्षिणोत्तरक्रमेण कुशचतुष्टयदानम् एव तत्॥

नम इति मन्त्रेण कुण्डस्य मेखलायां पश्चिमोत्तरेषु विष्टरत्रये
स्थापनार्थं द्वादशाङ्गुलप्रमाणान् मूलमन्त्रेणाभिमन्त्रितान्
कुशानास्तरेत्॥

तथा च राघवभटे॥

विस्तरस्तरणार्थं तु मूलमन्त्राभिमन्त्रितम्॥ ५-१४२॥

द्वादशाङ्गुलमानं तु अक्षपाटो प्रकीर्त्तितः।

इत्यक्षपाटनम्॥

इत्यस्तादशसंस्कारान् कुर्यात्॥

अथवा तानि संकुर्यात् चतुर्भिवीक्षणादिभिः॥ ५-१४३॥

यथा मूलमन्त्रेण कुण्डं पश्चात्॥

अस्त्राय फडिति कुण्डं प्रोक्षयेत्॥

एवं ताडयेत्॥

हुमिति अभ्युक्षयेत्॥

इति संस्कारचतुष्टयं कुर्यात्।

कुण्डकरणाशक्तौ हस्ते प्रमाणं स्थंण्डिलं कृत्वा यथा
संभवसंस्कारं कृत्वा होमं कुर्यात्॥

स्थंडिलं यथा॥

हस्तायामं सुविस्तारमंगुष्ठोन्नतं चतुरश्रीययेत्॥

५३ब्) तदुक्तं गणेशविमर्षिण्याम्॥

अथवा स्थंण्डिलं कुर्यात्।

द्धोमार्द्धर्थं मन्त्रसत्तमः॥

अंगुष्ठपर्वणो छेदं हस्ता यामं समं शुभम्।

चतुरङ्गुलमूछेदं वालुकाभिः समन्ततः॥ ५-१४४॥

इति॥

ततः कुण्डमध्यपूर्वाग्रं रेखात्रयं विलिख्यार्घपात्रं संस्थाप्य तस्य दक्षिणेर्घपात्रवत् प्रणीतपातं प्रोक्षणीपात्रं च संस्थाप्यार्घजलं तत्र किंचिन्निदद्यात्॥

ततः प्रणवमुच्चरन्।

अर्घजलेन रेखामत्युक्ष्य प्रागग्रायां प्रथमरेखाक्रमे पूजयेत्॥

प्रथमलेखायां। श्रीमुकुण्डाये नमः॥

द्वितीय। ईशानाये॥

तृतीय। पुरन्दराय।

उत्तराग्ररेखायाम्। ब्रह्मणे नमः।

द्वितीय। वैवस्वताय। कुर्माय।

अनन्ताय। पृथिव्यै। सुधासागराय।

रत्नद्वीपाय। कल्पवृक्षाय नमः।

तृतीयलेखामिन्द्वे नमः॥

इति संपूज्य तन् मध्य त्रिकोणं तदुपरि षट्कोणं तदुपरि वृत्तं लिखित्वा ॐकारमुच्चरन् अर्घजलेन संप्रोक्ष्य तदुपरि पीठानर्चयेत्।

यथा॥

ॐ आधारशक्त्यै नमः॥

ॐ कुर्माय। ॐ अनन्तायः। ॐ पृथिव्यै।

इत्यादिविकारमयकेसरभ्यो नमस्तावत्॥

ॐ पंचशद्बीजाढ्यकर्णिकायै नमः।

ॐ धमाय। ॐ ज्ञानाय।

ॐ वैराग्यायै।

५४अ) ॐ ऐश्वर्यायः। ॐ धर्माय।

ॐ अज्ञानाय। ॐ अवैराग्याय।

ॐ अनैश्वर्याय। अमुका देवतास्थंडिलाये नमः।

इति पीठानि संपूज्य तन् मध्यवागीश्वरी मृतुस्नातां नीलेन्दीवरसन्निभान्
।

वागीश्वरेण संयुक्ता मुपचारैः प्रपूज्ययेत्॥

यथा॥

वागीश्वरी सहितवागीश्वरहागच्छेत्या वाह्य इदं पाद्यं ॐ वागीश्वरी
वागीश्वराभ्यां नमः॥

एषोर्घ्यंति पाद्यादिभिः संपूज्य वागीश्वरी वागीश्वराभ्यां नमः॥

इति पुष्पाञ्जलित्रयेण।

ॐ वागीश्वरी इति पूर्वोक्तवत्। नमस्कुर्यात्॥

ततोग्निमरणि संभवं श्रोत्त्रियाघारजं वाणीय स्वदक्षिणे
कांश्यपात्रे संस्थाप्य तस्माद् एकां काष्टिकां गृहीत्वा

ॐ ध्रुवादेभ्यः स्वाहा

इत्यनेन कुण्डस्य नैऋत्यां दिशिप्रक्षिपेत्॥

ततो वह्निमूले न वीक्ष्यास्त्राय फदिति अर्घजले नाग्निप्रोक्ष्यास्त्राय फडिति
दर्भैः सन्तात्र्यहुमित्यर्घजलेन वह्निमभ्युक्ष तस्मिन् न्न्गौ
रांज्याथराग्नये नमः।

नीवैन्द्वाग्नये नमः॥ इति जाथरवैन्द्वके।

पाग्निनामैक्यं विभाव्यरमिति पावकचैतन्यं तस्मिन् संयोज्य

प्रणवेनाग्निमभिमन्त्र्य वमिति धेनुमुद्रयामिति कृत्यास्त्राय फदिति वह्निमभिरक्ष्युहुमिति अवगुंठा वह्निमूलमन्त्रेण संपूज्य वह्निकराभ्यां गृहीत्वा उत्तोल्यजानुस्पृष्ठमहीतलैः कुण्डे।

५४ब) परित्रिः परि आम्यात्मनो मुखवह्नि प्रणवमुच्चरन् परमशिवजीववुध्या सोहमिति जीववुध्या वागीश्वर्या योनौ निक्षिपेत्॥

ततो वागीश्वरी वागीश्वराभ्यां आचमनीयं नमः॥

कामेश्वरी कामेश्वरयोः संगमं विचिन्त्य कामेश्वरीगर्भनाद्यां तच्चैतन्यं संयोज्य इति कुशौ देव्यायोनिं माछाद्य गभरक्षार्थं दर्भरक्षार्थं दर्भकंकणं दत्त्वा ज्वालिनीमुद्रां प्रदर्शयेत्।

मुद्रालक्षणमामाह॥

मणिवंधो समौकृत्वा करौ प्रतिहताङ्गुलौ॥ ५-१४५॥

मध्यमे ललैते कृत्वा तन्मध्यङ्गुष्ठकं क्षिपेत्।

वह्निमुद्दिपयोत् पश्चा ज्वालिन्या रुद्रयानया॥ ५-१४६॥

ततो वह्निमन्त्रेनाग्नि प्रज्वालयेत्।

चित्पिंगल हन २ दह २ पच २ सर्वज्ञापय स्वाहा॥

इत्यग्निं प्रज्वाल्य कृतांजलिः।

ॐ अग्निप्रज्वलितं वन्दे जातवेदं हुतासनम्।

सुवर्णवर्णममलं समीद्धं विश्वतोमुखम्।

इत्येनेनाग्नियुपस्थापयेत्॥

ततो वह्नेः सान्त्विकीनां सप्तजिह्वानां स्वदेहे न्यसेत्॥

लिंगपायूशिरोवक्त्र घ्राननेत्रेषु सर्वत॥ ५-१४७॥

वह्नीरर्घीशसंयुक्ता सादियान्ताः सविंधवः।

वह्ने मन्त्राः समुदिष्टा जिह्वाणां सप्तदैशिकैः॥ ५-१४८॥

पायुगुडः सर्वतः सर्वा व्यापकं न्यसेत्॥

वह्निः रेफः इरोयकारः अर्घीशः।

५५अ) उकारः तेन व्युत्क्रमेण।

स ष श व ल र याः सविन्दवो विन्दुयुतः॥

तेन।

स्युँ म्युँ श्र्युँ व्युँ ल्युँ त्र्युँ र्र्युँ॥

इति वह्नेः सप्तजिह्वा मन्त्रः॥

प्रकारान्तरेण जीह्वा वीजान्याह॥

उक्तं यामले॥

विलेफावर्त्तिमौ च गौरिफषष्ठस्वरस्थितौः।

इन्दु विन्दुसमायुक्तौ जिह्वावीजान्यनुक्रमात्॥ ५-१४९॥

अन्तिमौ वगौय वर्गशाचलौ य ल र व इति यवर्ग श। स लौ सह इति शावर्गः।

अन्तिमोचेतौ वर्गौ विरेफौ रेफा रहितौ।

तेन। य ल व स ष सहः।

तेन व्युत्क्रमेण ह स ष श वलयाः॥

इन्दुरर्धचंद्रः तद्युक्तः विंदुरनुस्वारस्तद्युक्त इत्यर्थः॥

शारदामतमालं व्याह॥

जिह्वास्ता त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु।

हिरण्या गगणा रक्ता कृष्णा न्यासु प्रभामता॥ ५-१५०॥

वहुरूपातिरक्ता च सान्त्विक्यायोगकर्मसुः।

पद्मरागा सुवर्णान्या तृतीया वर्द्धलोहिता॥ ५-१५१॥

लोहितानन्तरश्वेता धूमिनी च कलालिका।

राजस्योरसना वह्ने विहिता काम्यकर्मसुः॥ ५-१५२॥

विश्वमुर्त्ते स्फुलिङ्गिन्यो धूम्रवर्णामनोजवाः।

लोहितान्या कलालाख्या कालीतामस्य ईरिताः॥ ५-१५३॥

एताः सप्तनियोज्यन्ते क्रूरकर्मसुमन्त्रिभिः।

स्वस्वनामसमाभ्याः स्यु जिह्वाः कल्याणरेतसः॥ ५-१५४॥

कल्याणरेतसो वह्नेः प्रथमतः सात्विकीनां स्वदेहे न्यासं कुर्यात्॥

स्युँ हिरण्यायै नमः॥

लिङ्गे॥

ष्र्युँ गगणायै नमः॥ गुडे॥

श्र्यूँ रक्तायै नमः॥ शिरसिः॥

व्र्यूँ कृष्णायै नमः॥ मुखे॥

ऌर्यूँ सुप्रभायै नमः॥ घ्राणे॥

ञ्यूँ वहुरूपायै नमः॥ नेत्रे॥

प्र्यूँ अतिरक्तायै नमः॥ सर्वगात्रेषु न्यसेत्॥

ततो हिरण्यगगणा रक्ता कृष्णा सुप्रभा वहुरूपा अतिरक्तानां सप्तजिह्वानां अधिदेवता।

अमर्त्यपितृगंधर्व यक्षनागपिसाचका राक्षसाः सप्तजिह्वानां ईरिता अधिदेवता॥

अमन्त्यों देवः॥

अधिदेवता नामपि स्वदेहे न्यासं कुर्यात्॥

ॐ देवेभ्यो नमः॥ लिङ्गे॥

ॐ पीतृभ्यो गुदेः॥

ॐ गन्धर्वेभ्यः शिरसि॥

ॐ यक्षभ्यो मुखे॥

ॐ नागेभ्यो घ्राणद्वये॥

ॐ पिशाचेभ्यो नेत्रद्वय॥

ॐ राक्षसेभ्यो नमः॥ सर्वगात्रे व्यापकं न्यसेत्॥

वह्नेरंगमनु न्यसेत् ततो वक्त्रे? नवत्र्मना।

सहस्त्रार्चितः स्वस्तिपूर्णा उतिष्ठपुरुषः पुनः॥ ५-१५५॥

धूमव्याप्ति सप्तजिह्वधनुर्द्धर इति क्रमात्।

षडंगमनवः प्रोक्ता जतिभिः सहसंयुताः॥ ५-१५६॥

तथा करन्यासं कुर्यात्॥

ॐ सहस्रार्चिषे अंगुष्ठाभ्यां नमः॥ अंगुष्ठयोः॥

ॐ स्वस्तिपूर्णाय तर्जनीभ्यां एवम्।

ॐ उतिष्ठपुरुषाय मध्यमयोः॥

ॐ धूमव्यापिने अनामिकाभ्याम्॥

५६अ) ॐ सप्तजिह्वाय कनिष्ठाभ्याम्॥

ॐ धनुर्धराय अस्त्राय फट्॥

करतरपृष्ठाभ्यां नमः॥

ततोगं न्यासं कुर्यात्॥

एवं हृदयादिषडंगं न्यासं कुर्यात्॥

इत्युर्ध्वैर्घं तालत्रयछोतिकाभिदशदिशो वह्नियात्॥

अथमूर्त्तिन्यासः॥

मूर्त्तिरष्टौ ततौ न्यस्यद् दैशिको जातवेदसः।

मूर्द्धांशपार्श्वकव्यन्धुकतिपार्श्वासक पुनः॥ ५-१५७॥

प्रदक्षिणवसा न्यासे दुच्यन्ते ता यथाक्रमम्।

जातवेदा सप्तजिह्वो हव्यवाहनसंज्ञका॥ ५-१५८॥

अश्वोदरजसंज्ञोन्यः पुनः वैश्वो नराह्वयः।

कौमारतेजाः स्याद् विश्वमुखो देवमुखः स्मृतः॥ ५-१५९॥

ताराग्नयपदा याः स्यु नृत्यन्ता वह्नि मूर्तयः।

ताराग्नय इति॥

ॐ अग्नयजातवेदसे नम इत्यादि॥

ततः स्वदेहे न्यसेत्॥

ॐ ग्नयजातवेदसे नमः॥

मूर्ध्नि॥

ॐ अग्नय सप्तजिह्वाय॥ दक्षांस॥

ॐ अग्नय हव्यवाहनाम्॥ दक्षपार्श्वे॥

ॐ अग्नये अश्वोदरजाय॥ दक्षकट्याम्॥

ॐ अग्नय वैश्वानराय पाया?॥

ॐ अग्नय कौमारतेजसे वामकट्याम्॥

ॐ अग्नय विश्वमुखाय नमो वामपार्श्वः॥

ॐ अग्नवेदमुखाय वामांसे॥

ततो मध्य-आसनकल्पयित्वा॥

ॐ वह्न्यासनाय नम इति संपूज्य वह्निं ध्यायेत्॥

यथा पुष्पं गृहीत्वा॥

इष्टं शक्तिं स्वस्तिकाभीति मुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जपाभम्॥

हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद् वह्निं वदनौ? लिंजताभिः॥

५६ब) इति ध्यात्वा मूलमन्त्रेण मूर्त्तिं कल्पयेन्॥

कुंडस्थिताग्नौ पुष्पं दत्त्वा एकीभूतं विचिन्त्य।

ॐ वैश्वानर इहागच्छ इहतिष्ठ इत्यावाज्य इदं पाद्यं वैश्वानरजातवेद
इहा वहलोहिताक्ष सर्वकर्माणि साधय स्वाहा नमः॥

पुनरेवं प्रकारेण अर्घ्यं नमः॥

एवं आचमनीयगंधपुष्पधूपदीपनैवेद्यैः पुनराचमनीयानि दत्त्वा ताम्भूलं च पुष्पांजलि त्रयेण वह्निं संपूज्य मध्यत्रिकोणषद्कोणेषु च।

तथा चोक्तं गणेशविमर्षिण्यी हिरण्यतप्तहेमाभ्य शूलपाणिदिशि स्थिताः॥

वैदूर्यवर्णा कनका प्रचीदिशिसमास्थिताः॥ ५-१६०॥

कृष्णनीलाब्जशंकाशा नैर्ऋत्यां दिशिसंस्थिता।

वहुरूपा यथा व्याख्या दक्षिणोत्तरतः स्थिता॥ ५-१६१॥

षद्कोणेषु वहिस्तेषु सुप्रभा पूर्वदिक् शुभा।

हिरण्या वाणी प्रोक्ता शांकरी वहुरूपका॥ ५-१६२॥

सव्यरक्ता तथाग्ने या मातृरक्ता च संस्थिता।

कनकारसनाया च कुण्डमध्यव्यवस्थिता॥ ५-१६३॥

हिरण्यकनका रक्ता कृष्णा दक्षा पनस्थिता।

सुप्रभा चाति रक्षा च वहुरूपा च वा मत॥ ५-१६४॥

सप्तजिह्वा पूजयेत्॥

ॐ पूर्वहिरण्यायै नमः॥

ॐ आग्नेय गगणायै।

नैऋते रक्तायै।

पश्चिमे कृष्णायै॥

वायौ सुप्रभायौ॥

ईशाने॥ वहुरूपायै॥

त्रिकोणमध्य॥ अति रक्तायै नमः।

इति केसरध्वंगदेवताः पूजयेत्॥

५७अ) यथा अग्निकोणे सहस्त्रार्चिषिहृदयायः।

नैऋते। स्वस्तिपूर्णाय शिरसे स्वाहा॥

वायौ। उत्तिष्ठपुरुषाय शिखायै वौषट्।

ईशाने धूमव्यापिणे कवचाय हुम्॥

मध्यसप्तजिह्वाय नेत्रे त्रयाभ्यां वौषट्।

गोपालपक्ष॥ नेत्राभ्यां वौषट्॥

पूर्वपश्चिमदक्षिण-उत्तरषु धनुर्द्धराय अस्त्राय फट्॥

ततोष्टदलेषु॥

पूर्वादि वह्नि मूर्त्तयः पूज्याः॥

पूर्व-अग्नय जातवेदसे॥

आग्नेयाम्॥ ॐ एवं सप्तजिह्वाय॥

दक्षिणे हव्यवाहनय

नैऋते॥ अश्वोदरजाय॥

पश्चिमः॥ वैश्वानराय॥

वायौ॥ कौमारतेजसे॥

ॐ उत्तरा विश्वमुखाय॥

ईशानेः॥ ॐ अग्नय वेदमुखाये नम॥

ततश्च

ॐ रश्रस्याष्टदिक्षु पूर्वादिक्रमेणेन्द्रादिलोकपालान् पूजयेत्॥

इन्द्रो वह्निर्यमश्चैव निऋृति वरुणस्तथा वायो कुवेर ईशानो नन्तो ब्रह्मा तथैव च॥

प्राच्यादि दिक्षु संपूज्याः प्रसूनगंधचंदनैः॥

तेषा ध्यानम्॥

पीतो रक्तोस्तथा नीलः श्यामश्वेतश्च धूम्रकः।

शुक्लः श्वेतस्तथा शुद्रो रक्तवर्णःस्तथैव च॥ ५-१६५॥

तेषामस्त्राणि॥

वज्रं शक्तिं दण्डमसिं पाशमंकुशकं गदाम्।

शूलं चक्रं तथा पद्मं क्रमतोस्त्राणि पूजयेत्॥ ५-१६६॥

अस्त्राणां ध्यानम्॥

ॐ नकरजततो यदाभ्रचंपारुण हेमनीजलपा प्रवालभासः।

५७ब्) निजनिजलक्षितमौलयो निजास्त्राभययुत पाणियुगास्तु वज्रयुवाः।

पूर्वेलां इन्द्रये नमः॥

एवं आग्नेयां राँ अग्नये दक्षिणे यां यमाय नैऋते क्षां निऋतये पश्चिमे
वां वरुणाय वायौ यां वायव उत्तरे शां कुवेलाय ईशान हाँ
ईशानाये नम ऊर्द्धे ॐ ब्रह्मणे अधः ह्रीँ अनन्ताये नमः॥

तद्बाह्ये तदस्त्राणि पूजयेत् पूर्ववज्राये नमः॥

आग्नेयां ॐ शक्तये दक्षिणे।

ॐ दण्डाये नैऋते।

ॐ स्वर्गाय पश्चिमे ॐ पाशाये वायौ ॐ अंकुशाये उत्तरे ॐ गदायै इशाने ॐ शूलाये नमः॥

उर्ध्वे ॐ पद्माये नमः॥

अधः ॐ चक्राये नम इति संपूज्य मध्यमेखला परिप्रदक्षिणक्रमेण वेष्ठयेत्॥

मध्यमेखलायां दक्षिणपश्चिमोत्तरेषु स्थापनार्थं द्वादशाङ्गुलप्रमाणा नगभान् कुशानास्तारेत्॥

तदुपरि सविस्तरान् परिधीन् दक्षिणादि पूर्ववत् स्थापयेत्॥

च्छंदोगपरिशिष्ठे।

वहुमात्राः परिधये ऋजवः॥

सत्यवोव्रणाः त्रयो भवन्ति शीर्णाग्रा एकेषां तु चतुर्दिशम्।

तत् तत् कण्डानुरूपं वा मानं अस्या निगद्यते॥

५८अ) ततःस्तु कु *? वौ संस्कुर्यात्॥

यथा॥

सुक्षुवौ समाधा याधौमुखौ वह्नौ त्रिधा प्रताव्य वामहस्त कृत्वा
दक्षिणहस्तेन कुशेन तयोरग्रे मुलमध्यानिमार्गनं कृत्वा अद्योदकेन
त्रिवाशोपरि स्थापयेत्॥

आज्यमानीयाज्य स्थाल्यां निक्षिप्य मूलेनाज्यं वीह्मास्त्रामफडिति (?)
प्रक्षाल्याग्नौति प्रताप्य वामहस्ते संस्थाप्य दक्षिणहस्तेनार्घोदकेन
त्रिःप्रोक्ष्युपुनरग्नौ प्रताप्यात्मसम्मुख स्थापयेत्॥

आज्यमानीय स्थाल्यान्ति क्षिप्यं मूले नाज्यं वीक्ष्यास्त्राय फडिति।

आज्यं प्रोक्ष्यास्त्राय फडिति दर्भैर्घृतं सन्ताव्यहुमिति
अघजलेनात्युक्षयेत्॥

इति संस्कारचतुष्टयं कृत्वा कुंडारंगारानुद्धृत्ये वायुकोने

संस्थाप्य नम इति मन्त्रेणाज्य स्थालीं स्थापयेत्॥

इदं तापनम्॥

ततो दर्भयुगलं प्रज्वाल्याक्ष्ये निक्षिप्यदग्धशेषं नम इति मत्रे वह्नौ

क्षिपेत्॥

इदं पवीत्रीकरणम्॥

पुनर्ज्वालितेन दर्भयुगेन हुमिति मन्त्रमुच्चरेन् घृतनीराज्य अग्नौ प्रक्षिपेत्॥

इत्यभिघोतनम्॥

ततः प्रज्वालितकुशमुष्टिं गृहीत्वा अस्त्राय फडिति मन्त्रमुच्चरन्॥

घृते प्रज्वालितान्दर्भात् प्रदर्श्याग्नौ प्रक्षिपेत्।

इत्युद्योतनम्॥

तस्माद् अंगारा दाह्य स्थानीमानीयात्मसंमुखे संस्थाप्य तानंगारानग्नौ प्रक्षिप्याङ्गारस्थान मार्जनं कृत्वा जलजं स्पृशेत्॥

तत-उन्तानहस्तयो लंगुष्ठकनिष्ठाभ्यां पवित्रं पृथक् पृथज्यृत्वास्त्राय फडिति मन्त्रमुच्चरन् प्राङ्मुखं घृतमुत्लु॥

५८ब) पवित्रं स्थानान्तरे स्थापयेत्॥

पुनस्तेनैव प्रकारेण तथैव घृतेन प्रवित्रान्तरं गृहीत्वा तेन पवित्रेण नम इति मन्त्रमुच्चलन् आत्मनोभिमुखं घृतं संप्लाप्य पूर्वस्थापिते पवित्रमिदं चेति पवित्रद्वयमग्नौ प्रक्षिपेत्॥

इत्युत्यवनोत्यवनेन वाह्यस्य संकुर्यात्।

संस्काराः षडुदीरिताः।

ततः प्रादेशमात्रं सग्रन्थिदर्भयुगलमाज्यस्थाल्यां घृतमध्यनिक्षिप्याज्य दक्षिणभागं शुक्लपक्षे माज्य वामभागं कृष्णपक्षं विचिन्त्य वामे इडां दक्षिणे पिङ्गलां मध्येसु षुमृ॥ ध्यात्वा होमं कुर्यात्॥

ततः स्रुवेण नम इति मन्त्रमुच्चरन् दक्षिणभागाद् घृतमोदाय॥

ॐ अग्नय स्वाहा इत्यग्ने दक्षिणलोचने जुहुयात्।

संपातमाज्यं तत्रैव दक्षिनभागेन निक्षिपेत्॥

पुनर्नम इति वामभागाद् घृतमादाय सोमाय स्वाहा॥

इति वामलोचने जुहुयात्।

संपातमाज्यं तत्रैव वामभागे स्थापयेत्।

पुनरेवं मध्यभागाद् घृतमादाय अग्निषोमाभ्यां स्वाहा॥

इति वह्ने ललाटे नेत्रे हुत्वा संपातमाज्यं मध्यभागे क्षिपेत्।

गोपालपक्षे ललाटनेराहुतिं न कुर्यात्॥

नरसिंहविषय कुर्यादेव पुनर्नमदक्षिणभागादाज्य पादाय ॐ अग्नय

स्विष्टकृते स्वाहा

५९अ) इत्येग्ने वक्रे हुत्वा दक्षिणभागे पूर्वोक्तवत् क्षिपेत्॥

इत्यग्निवक्रोद्घाटनम् स्वाहा इत्यस्य हापदेन तस्माद् भागाद् गृहीतमाज्यं
तत्र शेषं स्रुवसंलग्नं न्यसेत्।

तथा च॥ स्वाशव्दमुच्चार्याहुतिं दत्त्वा हाशब्दमुच्चार्याहुतिं शेषं
घृतं तत्रैव स्थापयेद् इत्यर्थः॥

ततो महाव्याहृतिहोमं कुर्यात्।

ततः स्ववामे जलपूर्णपात्रं स्थापयित्वा प्रत्याहुतिं शेषं तत्रैव
स्थापयेत्।

ॐ भू स्वाहा॥

ॐ भुवः स्वाहा॥

ॐ वैश्वानरजातवेद इहावहलोहिताक्ष सर्वकर्माणि साधये स्वाहा॥

इत्यग्निमन्त्रेणाहुतित्रयं हुत्वा हुतशेषजलं पूर्णपात्रे स्थापयेत्।

होमे स्वाहां तता माह॥

यज्ञपार्श्वैः॥

आदाय दक्षिणे पाणौ प्रवत्तिमधुरं हविः।

प्राङ्मुखो वह्नि जाया ते जुहुयान्यब्जपाणिना॥ ५-१६७॥

एवं॥

मन्त्रेणोंकारपूतेन स्वाहान्ते च विचक्षणः।

स्वाहा वसाने जुहुयाध्यायेन् वै मन्त्रदेवताम्॥ ५-१६८॥

त्रिमधुरं घृतमधुशर्करः।

तथा चोक्तं प्रयोगसारे।

पयोमधुघृतं चेति समडिमधुरं स्मृतम्।

वह्नि जाया स्वाहेति।

ततोग्नेर्गभाधाना डिषोडशसंस्कारान् कुर्यात्॥

यथा॥ सारदातिलके॥

गर्भाधानादिका वह्नेः क्रिया निवर्त्तयेत् क्रमात्॥ ५-१६९॥

अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक्।

५९ब्) गर्भाधानं पुंसं वनं सीमंनोन्नयनं पुनः॥ ५-१७०॥

अनन्तरं जातकर्मस्यान् नामकरणं तथा।

उपनिष्क्रमणं पश्चाद् अन्नप्राशनमीरितम्॥ ५-१७१॥

चूडोपकरणे भूयो महानाम्न्यमहाव्रतम्।

अथोपनिषदं स्नानं गोदानोद्वाहकौमृतिः॥ ५-१७२॥

शुभेषु स्यु विवाहान्ताः क्रियास्ताः क्रुरकमंसु।

मरणान्ताः समुद्दिष्टा वह्नेरागमकर्मभिः॥ ५-१७३॥

महानाम्न्यं ब्रह्मचर्यम्॥

मृते अभ्येष्टिः॥

तद्यथा॥

अग्नेर्गर्भाधानं कल्पनामि स्वाहा॥

इत्यष्टाहुतीर्जुहुयात्।

ॐ अग्नेः पुंसवनं कल्पयामि पूर्ववत्॥

ॐ सीमतोनयनमेव मेव ॐ अग्नेर्जातकर्म।

ॐ अग्नेर्नामकरणं कल्पयामि स्वाहा॥

तस्मीन् समये अग्ने त्वं अमुकनामासि।

तन् तन् मण्डाधिष्ठा तृदेवता नाम्ना नामकुर्यात्॥

अथवा॥

अग्ने त्वं वरदनामासिविश्वरूपनामासि वा नामकुयात्॥

अग्नेर्नामानिपूर्वलिखित प्रमाणे नोनुसंधे यानि पुस्तकवाहुल्यात् पुनरत्र

न लिखितानि।

अमुकनामाग्नये पाद्यादिभिर्वह्निं संपूज्यतांवुलं दन्त्वा
नमस्कुर्यात्।

तत ॐ अमुकनामाग्नेर्निष्क्रमणं कल्पयामि स्वाहा।

इत्यष्टाहुतिर्जुहुयात्॥

अमुकनामाग्नेरन्नप्राशनं परिकल्पयामि स्वाहा॥

एवं कुडाकरण॥

एवं उपनयन॥ महानाम्न्य॥

महानाम्नीव्रतं वेदाध्ययनमिति वा एवं महाव्रतं उपनिषद्व्रतं
गोदानं समावर्त्तनं विवाहं अग्न्याधानं कल्पयामि ॐ स्वाहा॥ (८)॥

६०अ) इत्यग्नेः षोडशसंस्कारान्सझाप्यपितरौ तस्म संपूज्यान्मनियोजयेत्।

तस्य वह्नेः पितरौ वागीश्वरी वागीश्वरौ यथा॥

इदं पाद्यं वागीश्वर्यै नम इति पाद्यादिभिः संपूज्य वागीश्वराय
नमः इति पुष्पांजलि त्रयं दत्वा वागीश्वर्यै नमस्कुर्यात्॥

ततो वागीश्वरं पूजयेत्॥

पुनरवं इति नमस्कृत्यं वागीश्वरी सहितवागीश्वरपूजितो सिक्षमस्वे युक्ता
संहारद्रूद्रया स्थंण्डिलान्तं वहन्नासापुटे आनीय सुहृदिस्थापयेत्।

वैश्वानरसंहितायाम्॥

व्रह्माणं स्थापयेद् अग्नौ फरार्थे कर्मसाक्षिकम्॥

तस्य कुण्डस्य दक्षिणे ब्रह्मानं संस्थाप्य पाद्यादिभिरर्चयेत्॥

ततः समिधः पंचजुहुयान् मूलाग्रघृतसंप्लुताः॥

ततो घृतोक्त पंचमेधोग्नौ प्रक्षिपेत्॥

ततोग्नेर्जिह्वांगमूर्तिनां मन्त्रेरेकाकाहुन्ती जुहुयात्॥

स्र्यूँ हिरण्यायै नम इत्यादि द्वादशाहुतीन् प्रत्येकैकं सप्तजिह्वाय
नेत्रत्रयाय वौषट् तावत् दद्यात्।

गोपालपक्षै सप्तजिह्वाय नेत्राभ्यां वौषट्॥

ॐ धनुद्धराय अग्नये जातवेदसे॥

ॐ हव्यवाहनाय॥ अश्वोदरजाय।

वैश्वानरजाय। कौमारतेजस।

विश्वमुखाय। वेदमुखाय स्वाहा॥

ततो वामहस्तस्तु चंणं स्थाप्य दक्षिणहस्तेन स्तुवमादाय नम इति मन्त्र
मुर्च्चरन्।

स्त्रुवेन चतुराज्याहुतितीः स्त्रुचिदन्त्वाधोमुखे मस्त्रुचंपिधाय उन्तिष्ठ
वैश्वानरजातवेद इहावहलोहिताक्ष सर्वकर्माणि साधय वौषट्॥

६०ब्) इत्यग्निमन्त्रेणं पूर्णाहुतिं दत्त्वा श्रीमहागणपतिमन्त्रेण व्यस्तेन च दशाहुतीर्जुहुयात्॥

यथा॥ ॐ स्वाहा॥

ॐ श्रीँ स्वाहा॥ ॐ श्रीँ ह्रीँ स्वाहा॥

ॐ श्रीँ ह्रीँ क्लीँ स्वाहा॥

ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ स्वाहा॥

ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं स्वाहा॥

ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गणपतये वरवरद स्वाहा॥

ॐ श्रीँ ह्रीँ क्लीँ ग्लौगं वरदवरद सर्वजनं म स्वाहा॥

एवं पूर्वोक्तवत्॥

सर्वजनं मेव शमानय स्वाहा॥

इति दशाहुती हुत्वाग्नौ इष्टै देवता यन्त्रं ध्यात्वा विंदुपीठे देवतां ध्यात्वा वाज्याग्निनासहैक्यं विभाव्य वह्निरूपान्तां विचिन्त्य पूजाक्रमपरिवारान्ता संपूय नैंदेव्यं दत्त्वा पुनराचमनीयं ताम्बूरं निवेद्य मूलेनामुकदेवतायै नम इति पुष्पांजलित्रयेण संपूज्य नमस्कुर्यात्॥

ततो वह्निष्टदेवतयोरैकां विभाव्य तस्या मुखे पंचविंशाहुती जुहुयात्॥

तथा मन्त्रमुचरन् इदं स्वाहा अमुकदेवतायै एतत् क्रमेण पंचविंशाहुती जुहुयात्॥

इदं त्रैकीकरणम्॥

ततो वह्नि दैवतयोरात्मना च सहैक्यं विभाव्यमूलनैकादशाहुती जुहुयात् ॥

इदं तु नाडीसंधानम्॥

जुहुयादंगमुख्या तामावृत्तीनामनुक्रमात्।

एकैकामाहुतिं सम्यक् सर्पिषादैशिकोत्तमः॥ ५-१७४॥

अंगमुख्यानामंगप्रधाना नामावृतीनाम्॥

६१अ) यस्य देवस्य यत् संख्या आवरेण देवतास्तासां तत
आवरणदेवतामुदिश्य मूले नैकैकाहुतिं जुहुयात्।

अग्नेरंगविभागमाह श्रीसारदायाम्॥

यवः काष्ठं ततः॥

श्रोत्रं यतो धूमोत्र नासिका॥

यत्राल्पज्वरणं नेत्रं यतो तारस्ततः शिरः।

यत्र प्रज्वालिता ज्वाला सा जिह्वा जातवेदसे॥ ५-१७५॥

आस्यान्तजुहुयाद् अग्ने विपश्चित् सर्वकर्मसु।

कर्णहोमे भवेद् व्याधि नेत्रेन्धत्व मुदीरितम्॥ ५-१७६॥

नासिकायां भवेत् पीडा मस्तके धनसंक्षय।

प्रकृते होमं संपाद्य सूर्यगणेशशिवगोपालादिभ्योपि एकैकाहितिं जुहुयात्॥

ततो महाव्याहृति होमं कुर्यात्।

ॐ भुः स्वाहेत्यादि॥

चतुराहुतीनिति मूलदेवतां गंधादिभिसंपूज्यति लाज्यादिभिः प्रकृत होमं कुर्यात्॥

होमप्रकारमाह॥

हर्विदानं तु न्युब्जपाणिना कर्त्तव्यम्॥

तदुक्तं गवाक्षरतन्त्रे॥

चित्तहस्तेन कर्त्तव्यं नाचित्त्नेन कदाचन॥ ५-१७७॥

हेतुश्चक्षुविनाशाय यजमानेन विश्यति।

तथा च त्रिपुरातत्त्वसारे।

चिन्त्रे हस्ते हविर्दानं क्रियते वहुताशन॥ ५-१७८॥

दातुः पुण्यफलं नास्ति होता च नरकं व्रजेत्।

भैरवतन्त्रेपि॥

हविरुत्तात्तहस्तेन वैश्वानरमुखे हुतम्॥ ५-१७९॥

हेतुश्चक्षुविनाशाय जजमानो विनश्यति।

६१ब्) होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च शूकर॥ ५-१८०॥

मृगी कनिष्ठा तर्जन्यो हंसीमुक्तकनिष्ठिका।

सुकरीकरणंको च मितिमुद्राः प्रकीर्तिताः॥ ५-१८१॥

मृगी च पुत्रकामार्था हंसी सर्वफलप्रदा।

अभिचारेषु सर्वेषु सूकरी कथिता वुधैः॥ ५-१८२॥

प्रकृतहोमं समाप्यगुरुः शिष्यं पंचगव्यं पाययित्वा विधिवत्
स्थापितावर्धिनीरुद्धृत्य शिशोः शिरसि मातृकामनसा जपन् मूलेन

साधितैः कुंभजलैरभिषिंचेत्।

अवशिष्टतोयेन सिष्यमावामेत्॥

उत्थाय गात्रमाजन कृत्वाधौ तेषा ससीपरिधायार्वमत्॥

ततः सूक्ष्मवस्त्रेण वौषडिति मन्त्रं मुच्चरन् शिष्यस्य नेत्रे वध्नीयात्।

ततः करे गृहीत्वा तं शिष्यं कुंडशमीपे समानीये नेत्रवंधं
धृदूरी कृत्य स्ववामे कुशास्तरं रक्षापयेत्॥

ततो गुरुरमुकमन्त्रं ददामीति प्रतिज्ञां श्रावयेत्॥

ततः शिष्योददस्वेति भ्रुयात् प्रणवकं तते।

गुरुः शिष्याग्ने मातृकान्यासं कृत्वा वस्त्रेण शिरः प्रवृत्यादौ
ऋष्यादिकं सक्लोस्मृत्वा च देवताधिया शिष्यस्य दक्षिणे कर्णे वालत्रयं
व्रुयात्॥

वामकर्णे एकवारं ब्रुयात्।

मन्त्रं दत्वा गुरुर्जरं गृहीत्वा विद्ययं मन्त्रो वा तव मम
समानधात्री दाता वास्तु॥

इति विनीतशिष्य हस्तं जलं दद्यात्॥

अस्त्विति शिष्या ब्रुयुः शिष्यो गुरुमन्त्र देवता नामैक्यं भावयेत्॥

६२अ) मन्त्रमष्टोत्तरशतं जपेत्॥

अष्टवारं वा॥

तथा च विज्ञानसंहितायाम्॥

गुरोविद्यां समालोक्य त्यज्यष्टोत्तरशतं जपेत्॥

अथवाप्यष्टकृत्वश्च जपेन्मन्त्रमनन्यधी॥ ५-१८३॥

गुरुरपि स्वशक्तिसिद्ध्यर्थं न्यासं कृत्वाष्टोत्तरसहस्रं शतं वा जपेत्।

ततः शिष्यो जपं समाप्य देवतात्मकं गुरुं डंदवत् प्रणम्य तस्य पादाम्बुज द्वंदं मुर्द्धिं योजयित्वा स्तवं कुर्यात्॥

ॐ नमस्ते नाथभगवन् शिवाय गुरुरूपिणे॥

विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रहः।

नारायण स्वरूपाय रमात्मकमूर्त्तये॥ ५-१८४॥

सर्वज्ञान ततो भेद् भानवे वित्क्वरूपिणे।

स्वतन्त्राय पदाक्तिप्तविग्रहाय शिवात्मने॥ ५-१८५॥

परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे।

विवेकिनां विवेकाय विमर्षाय विमर्षिणा॥ ५-१८६ ॥

प्रकाशाणां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे।

त्वत् प्रसादादहं देव कृत कृत्योस्मि सर्वतः॥ ५-१८७॥

अहं मृत्युमहापाशाद् विमुक्तोस्मि शिवोस्मि च।

इति पठित्वा गुरुं भूयात्॥

ततो गुरुहस्ताभ्यां शिष्यमस्तकं धृत्वा उत्थापयेत्॥

यथा उत्तिष्ठवत् समुक्तोसि सम्यगाचारवाग्भवः।

इत्युक्ता शिष्यमुत्थापयेन् मन्त्राचारान् कथयेत्॥ ५-१८८॥

ततो गुरवे दक्षिणां दद्यात्॥

६२ब) तदुक्तं व्रह्मसंहितायाम्॥

वृथा विप्रवचो यस्तु गृह्णाति नमानवः

शुभे अदत्त्वा दक्षिणं वापि सयाति नरकं ध्रुवम्।

दीक्षान्ते दक्षिणां प्राहुः स्वर्णगोभूमिभूषणम्।

भूमी वृत्तिकरीन्दद्यात् पुत्रपौत्रानुयायिनीम्॥ ५-१८९॥

तथा च पारिजात स्वरे॥

गुरवे दक्षिणां दद्यात् प्रत्यक्षाय शिवात्मने।

गुर्वर्थं मतिमान्नित्यं शरीरमपि सन्त्यजेत्॥ ५-१९०॥

एकैकमक्षरं यस्तु गुरुः शिष्यशिवोधयेत्।

पृथिव्यां नास्ति तद्रव्यं यदत्त्वासौर्ऋणी भवेत्॥ ५-१९१॥

ततः पूर्णा पूर्वकाले॥

ॐ अग्ने त्वं मृदुनामसि मृदुनाम्नेग्नये पाद्यं नमः॥

इति पाद्यादिभिः संपूज्य पूर्णां दद्यात्॥ यथा॥

अग्निपुराणम्॥

मूर्धानन्दे नमन्त्रेण संस्त्रवेन च धारया॥

मूर्धानं दिवोरत्त्विं पृथिव्या वैश्वानरमृतमाजातमग्निम्।

कपिगुस्त्रप्राजमतिथिं जनामासन्नापात्रं जायन्तदेवाः॥ ५-१९२॥

दद्याद् उत्थाय पूर्णां तु नोपविश्य कदाचन।

इति मूर्द्धानन्दिवेत्ति यजुषाम्।

पूर्णहोमं यशसोजुहोमीति सामगानाम्॥

तथा च कृष्णानुसंहितायाम्॥

शुक्स्त्रुवौ चोत्तानास्यौतां गृहीत्वा शंखमुद्रया॥ ५-१९३॥

स्थित्वानाभिसमं कृत्वा ध्यायेद् देवं महेश्वरम्।

पंचाङ्गुलं त्यक्त्वा शंखमुद्रयाधर्याः॥ ५-१९४॥

पंचाङ्गुलं वहिस्त्यक्त्वा धारयेच्छंखमुद्रयति।

६३अ) वाचस्पतिमिश्र कृत महादाननिर्णये वचनात्॥

तान्त्रिकमतमाह॥

स्त्रुकस्त्रूवौचोन्ता नास्यौ गृहीत्वा॥

ॐ भुवे वायवो चान्तरिक्षाय च मते च महते च स्वाहा॥

ॐ सुरादित्याय च चंद्रमसे च नक्षत्रेत्यश्च महते च स्वाहा॥

स्त्रुक्स्त्रुवा चधोमुखौ कृत्वा मूलेन वौषडन्तेन पूर्णां दद्यात्॥

ततोग्निं पाद्यादिभिः संपूज्य वस्त्रनालिकेलफलाद्यग्नौ दद्या ततोग्निं
नमस्कुर्यात् (ः)।

सर्वतः पाणिपादोसि इति श्लोकं पूर्वोक्तम्॥

अयुरारोग्यमैश्वर्यं धृतिं शत्त्वं वलं यशः॥ ५-१९५॥

तेजो वर्चः पशून्वीजं सौर्यं स्त्राम्राज्ये मेव च।

सौभागं कर्मसिद्धिं च कुलज्येष्ठसुकत्थनाम्॥ ५-१९६॥

सर्वमेत सर्वसाक्षिन् इविशोदोरिरीहिनः।

अग्निं प्रज्वालितं वन्दे जातवेदं हुतासनम्॥ ५-१९७॥

सुवर्णवर्णममलं सुसिद्धं विश्वतोमुखम्।

इति पठित्वा नमस्कुर्यात्॥

ततः कृतांजलिरग्निं प्रार्थयेदनेन यथा॥ ५-१९८॥

ॐ आब्रह्मन् ब्रह्मणोवर्चशिजायता माराष्ट्रो राजन्यः शूर इषव्योतीव्याधि
महारथो जायताम्॥

भु दग्धी धेनुवोधा नत्वा नाशुः सप्तपुरंध्रिर्यो षा विष्णुरथेष्टः
सर्भेयो युवस्य जजमानस्य वीरो जायताम्॥

ॐ निकामेनिकामेनः पर्जन्यो वर्ष तु फलवेभ्यो न ओषधयः पश्यन्तां योगक्षेमोनः स्यात्॥

इति पार्थयेत्॥

ततो व देवतागणं तदङ्गे विलीनं विभाव्य॥

६३ब्) भगवति दे पूजिता सिक्षमस्वेति संहारमुद्रया स्वहृदिसमानीय कृताञ्जलिरग्निं विसर्ज्यते॥

ॐ यज्ञयज्ञं गच्छजज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा॥

एष ते यज्ञो यज्ञपते सहसुक्तवाक् सर्ववीरस्त्वं जुषस्व स्वाहा॥

इति पठित्वाग्ने विसर्जनं कुर्यात्॥

ततो ब्रह्मणे दक्षिणां दद्यात्॥

तथा च स्मृतिः॥

ब्रह्मणे दक्षिणा देया यत्र या परिकीर्तिता।

कर्मान्ते मुच्यमानायां पूर्णपात्राधिका भवेत्॥ ५-१९९॥

हेतु वस्त्रयुग्मं कांस्यमित्यपिश्रुते॥

तथा च शक्ता शक्तभेदाद् उभयम्।

यथा पूर्णपात्रमानीय तिलकुशजलान्यादाय विष्णुः॥

ॐ अद्यामुके मासि अमुपक्षेमुकतिथा वमुक देव शर्मामुकदेवता या
यदक्षरमन्त्रस्य दीक्षाकर्माङ्ग होमकर्मप्रतिष्ठार्थमिदं
पूर्णपात्रं ब्रह्माणे हं ददे।

इति दक्षिणा मुत्सृज्य ब्रह्मविमोचनं कुर्यादनेन॥

ॐ उत्तिष्ठब्रह्मणस्य ते देव यं तत्त्वे मह उपप्रयं तु मरुतः स्वदान

चद्वंद्रपाशूर्भवासु च।

इति ब्रह्मविमोचनं कुर्यात्।

ततः परिष्टरणकुशान् घृताक्तास्तृष्णीमग्नौ षक्षिपेत्॥

ततस्तिलकार्थं कुण्डस्य शानकोणात् सुवेन भस्मानीय पात्रान्तरस्थापयेत्।

शान्तिदीपिकायां वसिष्ठ॥

ऐशान्यामाहरे भस्मसुवेणाथस्तु चा पि वा।

वन्धनां कारयेत् तेन शिरः कण्ठांसकेषु च॥ ५-२००॥

६४अ) कश्य यश्यति मन्त्रेण यथा क्रमेण योगतः।

ततः शान्तिप्रकुर्वीत अवधारण वाचनम्॥ ५-२०१॥

अथ होमदक्षिणा प्रपंचसारे॥

एकादशार्धकशिका व रकांचस्य दद्यात् सदैव गुरवेथ सहस्रहोमे॥

अर्धार्धपंचकणिकाद्विकणा च सार्धास्या दक्षिणे।

ह् कथ्थिता मुनिभिस्त्रिधैव॥

शारदायाम्॥

सहस्रहोमे वितरेद् दक्षिणा निह्यमानतः।

तदर्धं वा सुवर्णं वा यथा विभवसारतः॥ ५-२०२॥

निष्कं वा तदर्द्धं वा इति शक्त्यपेक्षया विकल्पः नतु ऐच्छिकः तिह्वे
अप्रवृत्तेः॥

निष्कंपलमिति संप्रदायः॥

तच्च सुवर्णचतुष्टयम्।

पंचकृष्णलकोमाषस्ते तु वर्णस्तु षोडश।

पलं सुवर्णश्चत्वार इति।

शास्त्रस्य निश्चय॥

कृष्णलः स्वर्णमाषकः॥

विश्वप्रकाशे॥

अक्षालंकारयोनिर्ष्कंष्किः स्वर्णचतुष्टय।

निष्कमष्टाधिकः स्वर्ण शतेदीनारकर्षयो॥ ५-२०३॥

इत्युक्तम्॥

ॐ कल्मस्तु निद्रा अष्टकनिकेनद्धा त्रिशद्रक्तिकमितं निष्कमाहुः॥

दक्षिणां तु प्रदातव्या ग्रहादीनां विसर्ज्जनम्।

ततो होस्थलदुग्धं दत्त्वा पृथिविशीतलाभवति वदेत्॥

ततः कृतांजलि होमकर्मांच्छिद्रमस्तुः॥

गुरुयज्ञस्थलाघटसंनिधौ गत्वपविशेत्॥ ५-२०४॥

ततः शिष्यो गुरवे दक्षिणां दद्यात्॥

यथा तिलकुशजलान्यादाय विष्णुः अद्यामुकमासे इत्यादि पूवोक्तविधिना
यदक्षरमन्त्रस्य दीक्षाकर्मप्रतिष्ठार्थमिदं
कांचनममुकगोत्रायामुकशमर्णे गुरवे तुभ्यमहं ददे गुरुः स्वस्तीती

वुयात्॥

वित्तशाठ्यं विनासर्वं गुरवे संनिवेदयेत्।

मण्डपं मडपद्रव्यं गुरवे सन्निवेदयेत्॥ ५-२०५॥

ततो गुरुर्घटे मूलदेवतां पाद्यादिभि संपूज्य तांबुल दत्त्वा पुनराचमनीयं दत्त्वाङ्ग देवतागणं तदंगे विलीनं विभाव्य निर्माल्यं गृहीत्वा॥

ॐ अमुकदेवतायै नमः इति मंडलोपरि पूजयेत्॥

गतसारं तु नैवेद्यं ततश्चैतत् समुद्धरेत्।

ऐशान्यां तद्भुजे दत्त्वा किंचित् स्थानं विशोधयेत्॥ ५-२०६॥

तद्भुजे निर्माल्य भुजे ते च विष्वक् सेनः स्मृतो विष्णोस्तेजश्चंडोविवस्वः।

चण्डीश्वरी तथा शक्तिश्चण्डेशः शंकरस्य च।

लंवोद्लो गणपतेरमीज्युच्छिष्टभोजिनः॥ ५-२०७॥

तथा चागमकल्पद्रुमे॥

दीक्षायां पूजयेत् कुंभे यन्त्रादौ प्रत्यहं येजत्।

ततो घटं संचोल्य स्थानान्तरे संस्थाप्य कृतांजलिः अद्य कृतै
तदमुकदेवता या यन् मन्त्रस्य दीक्षाकर्माच्छिद्रे मस्तु॥

घटजले न शिष्यमभिषिंचेत्॥

यथा॥

सुरास्त्वामभिषिंचन्तु ब्रह्मविष्णुमहेश्वराः॥ ५-२०८॥

वासुदेवो जगन्नाथः तथा संकर्षणप्रभुः।

प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयायते॥ ५-२०९॥

आखण्डलेग्निर्भगवान् यमौ वै नैऋतस्तथा।

वरुणः पवश्चैव धनाध्यक्षस्तथा शिवः॥ ५-२१०॥

६५अ) ब्रह्मणः सहितः शेषो दिक्पालाः यां तु ते सदा।

कीर्त्तिलक्ष्मी धृतिर्मेधा पुष्टिश्रद्धाः क्षमामति॥ ५-२११॥

बुद्धिर्लज्जा वपुः शान्ति स्तुतिः कान्तिश्च मातरः।

एतत्त्वामभिषिंचन्तु धर्मपत्न्यः समागताः॥ ५-२१२॥

आदित्यचंद्रमा भौमो बुधजीवेसितार्कजः।

ग्रहास्त्वामभिषिंचन्तु राहुः केतुश्च तर्पिताः॥ ५-२१३॥

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः।

ऋषयो मुनयो गावो देवमातर एव च॥ ५-२१४॥

देवपत्न्यो ध्रुवा दैत्याश्चान्सरसां गणाः।

अस्त्रानिसर्वसास्त्राणि राजानो वाहनानि च॥ ५-२१५॥

औषधानि च रत्नानि कालस्या वयवाश्च य।

सरितः सागराःश्चैराः तीर्थानिजलदारदाम्॥ ५-२१६॥

एते त्वां अभिषिंचन्तु सर्वकामार्थसिद्धय।

महावामदेव्य ऋषिर्थिराड् गायत्री छंदः इन्द्रो देवता शान्तिकर्मणि

विनियोगः॥

ॐ कयानश्चित्रे आभुवटुति सदा वृधः सखाकया शविष्टयो वृता।

कस्त्वा सत्यो मदानामं हि*? मत्सदंधसः॥

दृढाविदारुजे वसु अभिषुनः सखिना सविता जरित्रीणाम्॥

शतं भवस्य तये॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्तीनः पूषा विश्ववेदाः।

स्वस्तीनस्ताक्ष्यों अरिष्टनेमिः स्वस्तिनो वृहस्पति दधातु॥ ५-२१७॥

इति घटजले नाभिषिच्य यज्ञभस्मना वन्देनां कुर्या।

६५ब) यज्ञभस्म गृहीत्वा॥

ॐ कश्य पस्य त्रायुषं शिष्यस्य ललाटे दद्यात्।

जमदग्निस्स्थायुषमिति कण्ठे देयात्॥

ॐ यद् देवानां त्रायुषमित्यंसयोः।

ॐ तत् ते अस्त्तुत्रायुषमिति हृदि दद्यात्॥

तत वाशीर्वादं कुर्यात्॥

ततः शिष्यो गुरुं दंडवत् प्रणम्य यथा सुखं विहरेत्॥

गुरुरपि यहा स्थानं गच्छेत्॥

अन्यत्योपिदीनानाथेभ्यः किंचिद् दद्यात्।

कुमारी च भोजयेत्॥

तथा चोक्तं मागमकल्पद्रुमे॥

ततः सुस्थिरचित्तेन योगवर्त्संसमभ्यसेत्।

गंगायां गोप्रदानेन दिव्यवर्षशतत्रयम्॥ ५-२१८॥

यत् फलं प्राप्यते नित्यं आराध्याप्नोति तत् फलम्।

कुरुक्षेत्रे तयायां च प्रयागे पुरुषोत्तमे॥ ५-२१९॥

गो सहस्र प्रदानेन यत् फलं समवाप्यते।

तदेतदक्षिलं पुण्यं प्राप्नोत्यवनसंशयः॥ ५-२२०॥

समग्रमसमग्रं वा यो दद्यात् पूजितं हरेत्।

कदाचिददति नित्यं वा पत्त्रपुष्।पादिकं वहु॥ ५-२२१॥

किं तीर्थसेवया दानैरन्यै वहुभिरीरितैः।

आराधनासमर्थस्तु दद्यादर्चनसाधनम्॥ ५-२२२॥

यो दातुं नैव शक्नोति कुर्यादर्चनशर्नम्।

निस्तारायत देवालं भवाव्धै? पततः क्षणात्॥ ५-२२३॥

इति पूजा विधानेन नयत् प्रतिदिनं च यः।

इहा वाप्य तुलां लक्ष्मी मन्त्रे भूयात् परंपदम्॥ ५-२२४॥

दीक्षां कृत्वा यदा मन्त्री चापवासं समाचरेदिति श्लोकैकं पूर्वलिखितम्

॥

दाता गृहीतानोपोष्येद् उपवासः शियं हरेत्।

६६अ) तस्मादन्नं समश्रीयाद् धविष्यान्नेन शाङ्करि॥ ५-२२५॥

अथ संक्षेपदीक्षा॥

मुहुर्त्तसर्वतो भद्रे नवं कुंभं निधाय च।

मोदकं गंधपुष्पाभ्यां मर्चितं वस्त्रमं वृतम्॥ ५-२२६॥

सर्वौषधि नवरत्नपंचवल्लव संयुतम्।

सुरामांसी व चाकुष्टं शैलेयं रजनीद्वयम्॥ ५-२२७॥

शटी चणुपकं मुस्तं च सर्वौसधिगणः स्मृतः।

मृश्निपर्णीश्यामलता तेजपत्त्रं शतावरी॥ ५-२२८॥

गुडूची सहदेवा च महौषधिगणः स्मृतः।

सुरामांसिजटामासी शैलेयं शैलजम्॥ ५-२२९॥

रजनीद्वयं हरिद्रा दारुहरिद्रा पृष्णपर्णीपिप्पली सहदेवा धृतकुमारी॥

नवरत्नं तु शारदायाम्॥

कुक्तामाणिक्यवैडूर्य गोमदान्वक्रविक्रमान्।

पद्मरागं मरकतनीरं चेति यथाक्रमम्॥ ५-२३०॥

ततो देवार्च्चनं कृत्वा हुनेदत्तोत्तरं शतम्।

हुनेदिति शक्तिविषयम्॥

शिष्यं सूलं कृतं वद्या मुपाङ्गमुपवेशयेत्॥ ५-२३१॥

मन्त्रितं प्रोक्षिणीतोयैः शान्तिकुंभजलैस्तथा।

मूलमन्त्रेणाष्टोत्तरशतमभिमन्त्रिते नाभिषेचयेत्॥ ५-२३२॥

अथ संपादयेन् मन्त्रे हस्तं शिरसिनिधाय शमस्त्वित् पक्षतान् दद्यात्॥

ततः शिष्योर्चयेद् गुरुम्॥

यद् वा दीक्षान्तरक्रमं (ः) शंखमभ्यच्च्य सांक्षतं तदं
वुनाभिषिच्याष्टे वालं मूलेन केकरम्।

विधायाष्टौ जपेत् कर्णे उपदेशत्वं यं विधिः।

उपदेशान्तरमाह॥

चन्द्रसूर्यग्रहेतीर्थे सिद्धक्षेत्रे शिवालये॥ ५-२३३॥

मन्त्रमात्रप्रकथनाद् उपदेशः स उच्यते।

६६ब्) इति श्री यदुनाथचक्रवर्त्ति विरचिताया मागः कल्पलतायां प्रथमः
कल्पः॥ १॥

६६ब्) अथात्र होमद्रव्यानां प्रमाणमभिधीयते।

कर्षमात्रं घृतं होमे शुक्तिमात्रां पयः स्मृतम्॥ ६-१॥

शास्त्रीयतोलकद्वयं कर्षपलचतुर्थांशः कर्षः।

पलं सुवर्णाश्चत्वारः शुक्तिरर्द्धपलं तथाः॥ ६-२॥

उक्तानिपंचग्व्यानि तत् सपाणिमणीषिभिः।

तत् समं मधुदुग्धान् नमक्षमात्रं उदाहृतम्॥ ६-३॥

दुग्धान्नं परमान्नं अक्षमात्रं तोलकद्वयम्।

दधिप्रकृतिमात्रस्या राजास्युमुष्टिसम्मिताः॥ ६-४॥

पलद्वयं पृथुकाष्टस्तत् प्रमाणाः स्युः सक्तवोपि तथोदिताः।

गुडं परार्द्धमानं स्या च्छर्करापि तथा मता।

ग्रासार्द्धं चरुमानं स्या दिक्षुः पर्वाविधिः स्मृतः॥ ६-५॥

मयूराण्डसमं ग्रासः।

एकैकपत्त्रपुष्पाणि तथा पूपाणिकल्पयेत्।

कदलीफलनारंग फलान्यनेकशो विदुः॥ ६-६॥

मातुरुंगं चतुःखण्डं पतसंदशधाकृतम्।

मातुरुंगं निंवोजम्विरविशेषः पनसंकण्ठकीफलम्।

अधिष्टानारकीलानखण्डितानिविदुर्वुधाः॥ ६-७॥

त्रिधाकृतं फलं वैल्वं कपित्थं खण्डितं द्विधा।

उवारुकफलहोमे कथितं खण्डितं त्रिधा॥ ६-८॥

उवारुकफलं कर्कटी॥

फलान्यान्यानिखंडानि समिधः स्युदशाङ्गुलाः।

दुर्वात्रयं समुद्दिष्टं गुडुची चतुलंगुला॥ ६-९॥

व्रीहयोमुष्टिमात्राः स्युर्मुद्गामोषाथ वा अपि।

६७अ) तंडूलाः स्युस्तदधाः शाको वा मुष्टिसम्मिताः॥ ६-१०॥

गोधूमरक्तकमला विहितामुष्टिमानताः।

तिलश्चुलुकमात्राः स्युः सर्षपास्तत् प्रमाणकाः॥ ६-११॥

चुलकमात्राः कषमात्राः शुक्तिप्रमाणं लवणमरीचान् यपिविंशतिः।

पुरवदरमानं स्याद् रामठं तत् समं स्मृतम्।

पुरं गुग्गुलुः रामठं दिंगुः॥

चन्दनागुरुकर्पूरककस्तूरीकुंकुमानि च॥ ६-१२॥

तित्तिरीवीजं मानानि समुद्दिष्टानिदैशिकैः।

शारदातिलके मानमुक्तमन्यत् प्रचक्षते॥ ६-१३॥

उक्तं तु दक्षिणा मूर्त्तौ सावधाना व धारये।

कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृत॥ ६-१४॥

अशितिगुंजापरिमितं शास्त्रोकुतोलकम्॥

तद् द्वयं कर्षः शास्त्रोक्ततोलकद्वयं शुक्तिः।

उक्तानि पंचगव्यानि तत् समानिमनिषिभिः॥ ६-१५॥

शुक्तिसमानि॥

तत् समं मधुदुग्धान्नमक्षमात्रमुदाहृतम्।

अक्षमात्रं च वद्भिड?फलमात्रमुपयश्चुलेकनानं स्यात् अस्या
मध्वनिकेचन॥

मनुसंगतमेतत् स्याद् द्रवद्रव्येस्तु व श्रुतेः॥ ६-१६॥

तत् कथं मधुदुग्धाद् ए भवेच्चुलकमानतः।

उच्यते श्वत्थपत्राद् ए विधानान् तत्परं भवेत्॥ ६-१७॥

वस्तुतच्चुलकमध्यतनंस्तु व समं च तत्।

को विरोधस्त्रूवेणैव द्रव्यद्रव्यहुताद्भत्॥ ६-१८॥

दधिप्रसृतिमानं स्याल्लाजाः स्युर्मुष्टिसम्मितः।

पृथुकास्तत् समानः स्युः सक्तवोपितथोदिताः॥ ६-१९॥

गुडं पलार्धमानं स्याच्छर्करापितथोदिता।

ग्रासार्धं चरुमानं स्याद् इक्षुः पूर्वावधिर्मतः॥ ६-२०॥

६७ब्) मयूरांडसमोग्रासस्तदर्धं मयूरांडसमं

मयूरविंवसमम्॥

एकैकं पत्रपुष्पाणि तथा पूपाणि कल्पयेत्।

कदलीफलनारंग फलान्येकैकशोविदुः॥ ६-२१॥

मातुलुंगं चतुषवंडं पनसंदशधा कृतम्।

मातुलुंगं निंवफलं एकैकं मातुरुंगानीत्येकं केचिदिहाचिरे॥

अष्टधानालिकेलानि खण्डितानि विदुर्बुधाः॥ ६-२२॥

त्रिधाकृत्वान्य न्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः॥

अंगुष्ठादधिकाग्राह्याः समिधः स्थूलतः क्वचित्।

नविमुक्तत्ववाश्चैव नसकीटान पाटिताः॥ ६-२३॥

प्रादेशान्नाधिकारानस्तथा नस्या द्विशाखिका।

नाधिकानोना इति अन्युननतिरिक्त इत्यर्थः नविशाखिका इति शाखारहिता इत्यर्थः नसपर्णाननिर्वीर्या होमेषु च विजानता॥

ननीर्वीर्यानशुष्का॥

प्रागग्रः समीधोदेयः पुष्टार्थं विजानता॥ ६-२४॥

शार्थं सत्व च स्मार्द्राविपरीता जिघांसया।

विशीर्णाविदलाहुत्वा वक्राः ससुषिरास्तथा॥ ६-२५॥

दीर्घाः स्थूला व्वुधै? जुष्टा कर्मसिद्धिविनाशका।

ससुषिराः सगर्त्ताः श्रीसोमशंभुरम्याह॥ ६-२६॥

प्रमाणं मूलकादिषु॥

खण्डत्रयं च मूलानां फलाना स्वस्वमानतः।

प्रासादमानमन्नानामक्षानि पंचहोमयेत्॥ ६-२७॥

द्रक्षोरोपर्विकं मानं लतानामगुलं द्वयम्।

कंदानामष्टमं भागं जुहुयाद्विधिनापरम्॥ ६-२८॥

दूर्वात्रयं समुद्दिष्टं गुडूचीचतुरंगुला।

व्रीहयोमुष्टिमात्राः स्युर्मुद्गमाषय वा अपि॥ ६-२९॥

६८अ) तीलाश्चुलुकमात्राः स्युः सर्षपाश्च तथादिताः।

कैश्चिदाहुतिषु प्रोक्ताः कर्षार्धार्धास्तु सर्षपाः॥ ६-३०॥

शुक्तिप्रमाणलवणं मरिचान्य *? विंशतिः।

शुक्तिरर्धपलयाषकचतुष्टयमिति केचित्।

पुरं वदरमानं स्याद् रामठं तत् समं स्मृतम्॥ ६-३१॥

चडरंगुलिमानं स्याद् व्यंजनं कृसरं तथा।

चतुरंगुलिमान द्वादशपर्वप्रमाणं कृसरं तिलतण्डूलम्॥

तिलकत्क्षं तथा प्रोक्तं मन्त्रतन्त्रविशारदैः॥ ६-३२॥

चन्दनागुरुकपूर कस्तूरीकुंकुमानि च।

तिन्तिडीवीजमानानि कथितानि मनीषिभिः॥ ६-३३॥

श्रीसोमशंभुना प्रोक्तप्रमाणं चन्दनादिषु।

कलायसम्मितानेता गुग्गुलुं वदरास्थिवत्॥ ६-३४॥

घनसारश्चंन्दनानि कस्तूरीकुंकुमानि च।

चणकप्रमितान्यन्यैः प्रोक्ता *? गमवेदिभिः॥ ६-३५॥

अनुक्ते तु हविर्द्रव्ये तिलाज्यं हरिरुच्यते।

अनुक्ते चांजनद्रव्ये घृतमेवांजनं विदुः॥ ६-३६॥

संख्यानुक्तौहसस्त्रस्याद् द्रव्यानुक्तौ घृतं तथा।

समिधानुक्तविषयपालाश्यः परिकीर्तिताः॥ ६-३७॥

दक्सिणामूर्त्ति तन्त्रे तु प्राहैतच्छाङ्ग संस्थिता।

आज्यं द्रव्यमानादेशे होमेषु च विधीयते॥ ६-३८॥

समुद्दिष्टमिदं सर्वं स्मृति दृष्टेन वत्मना।

लाजादिहोमो हस्तेन साङ्गुलो न विधीयते॥ ६-३९॥

समिपुष्पफलादीनां होमः स्यान् मृगमुद्रया।

द्रव्य द्रव्यस्तु वः प्रोक्ता मन्त्रतत्र विशारदः॥ ६-४०॥

मिलिनामिकाङ्गुष्ठे ममास्त्राणि योजयेत्।

६८ब) शिष्ठाङ्गुल्यन् सृतां कुर्यान् मृगमुद्रेयमीरिता॥ ६-४१॥

प्रसंगाच्छास्त्रोक्त् ं प्रेमाणमभिधीयते।

पंचकृष्णलकोमाषस्तेसुवर्णास्तु षोडश॥ ६-४२॥

पलं सुवर्णाश्चत्वारो निष्कमष्टोत्तरं शतम्।

निष्कमक्षं वदन्त्येके निष्कंपलमथापले॥ ६-४३॥

द्वेगुजे रूप्यमाषः स्यात् पलानिधरणो दश।

द्वात्रिंशत् पलकं प्रस्थं स्वयमुक्तं स्वयंभुवा॥ ६-४४॥

आढकं तु चतुः प्रस्थं चतुर्भिः द्रोणमाढकैः।

राशिमानं तदेवस्यात् वारीषोडशभिश्चतैः॥ ६-४५॥

विंशत्या च भवेत् कुंभौ वाहः स्या दशभिश्च तैखारीणां त्रित्रयं
भार उदितः शास्त्रतः क्रमात्॥

द्वे सहस्त्रे तु लाभारो भारः सम्यगुदीरितः॥ ६-४६॥

भारस्य दशमांशे न हारमिच्छन्ति केचन।

मुष्टिपलप्रमानं स्याद् द्वेपले प्रसृति भवेत्॥ ६-४७॥

अष्टमुष्टिं भवेत् कुंचः कुंचस्याष्टौ तु पुष्कलम्।

पुष्कलानि च चत्वारि आढकं तदनुक्रमात्॥ ६-४८॥

अष्टौ तु पुष्कलान्येवं पूर्णपात्रमथोचिर।

चतुः षष्ठ्यापलैः कुम्भं (ः) चतुः प्रस्थमुदीरयेत्॥ ६-४९॥

द्वेपले च प्रसंगः स्यात् प्रसवं तद्युगं भवेत्।

तद्युगं कुल वं विघ्नं प्रस्थं पात्रमथः क्रमात्॥ ६-५०॥

तथाढकं शिवमथद्रेणं खारीति केचनः।

पंचगुंजो भवेत् माषस्तेक्षः कषस्तु षोदश॥ ६-५१॥

माषास्तु द्वादशै वाक्ष इति विष्णुरिहा ब्रवीत्।

६९अ) वैदिके परिभाषै षा रागमेषु प्रपूज्यते॥ ६-५२॥

तस्मात् प्रसृतिमुक्ष्यादि (तस्माच्)चुशुक्ति वच्चुलुकादिवत्।

लौकिकं तदुपादेयमिति चागमवेदिनः॥ ६-५३॥

वैश्वानरं स्थितं ध्यायेत् ससिद्धो मेषु दैशिकः।

शियानमाज्यहोमेषु निषण्णोशेषवस्तुषु॥ ६-५४॥

अस्यान्तर्जुहुयाद् अग्ने विपश्चित् सर्वकर्मसु।

कर्णहोमे भवेद् व्याधिर्नेत्रेन्धत्वमुदीरितम्॥ ६-५५॥

नासिकायां मनः पीडा मस्तके धनसंक्षपः।

यतः कोष्ठं ततः श्रोत्रं यतोधूमोत्रनासिका॥ ६-५६॥

यत्राल्पज्वलनं नेत्रं यतोंगारस्ततः शिरः।

यत्र प्रज्वालिता ज्वाला साजिह्वाजातवेदसः॥ ६-५७॥

जातवेदसो वह्नेः॥

स्वर्णसिंदूरवारार्क कुंकुमक्षौद्रसंनिभः।

सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः॥ ६-५८॥

भेलीवारिदहस्तेन्द्र ध्वनिर्वह्निः शुभावहः।

नागचण्पकपुन्नाट् पाटला यूथिकानिभेः॥ ६-५९॥

पद्मेन्दीवरकत्-हार सर्पिर्गुग्गुलुं संनिभः।

पावकस्य शुभोगंध इत्युस्तन्त्रवेदिभिः॥ ६-६०॥

प्रदक्षिणास्त्यक्तं पाच्छन्त्राभाः शिखिनः शिखः।

शुभदायजमानस्य राज्यस्यापि विशेषतः॥ ६-६१॥

कुन्देन्दुधवलोधूमो वह्नेः प्रोक्तः शुभावहः।

कृष्णं कृष्णगतेर्वर्णा यजमानं विनाशयेत्॥ ६-६२॥

कृष्णगते वह्नेः॥

श्वेतोराज्यं निहन्त्याशु वायसस्वरसंनिभः।

खरस्वरसमो वह्ने ध्वनिः सर्वविनाशकृत्॥ ६-६३॥

पूतिगंगोहुतवहो होतुर्दुःखप्रदा भवेत्।

६९ब) च्छिन्नावृत्याशिखा कुर्यात् मृत्युं धनपरिक्षयम् (ः)॥ ६-६४॥

शुकपक्षे निभोधुमः पारावतसमप्रभः।

हानिं तु रगजातीनां गवां च कुरुते चिरात्॥ ६-६५॥

एवं विदेषु दोषेष प्रायश्चित्ताय दैशिकः।

मूलेनाज्यनजुहुयात् पंचविंशतिराहुती॥ ६-६६॥

इत्यागमकल्पलतायां षष्ठमः पटलः॥ ६॥

सामान्य पूजां वक्ष्यामि मन्त्रीणां सिद्धिदायिनीम्।

अथप्रातसमुत्थाय धीमान्ब्राह्मे मुहुर्त्तके॥ ७-१॥

ब्रह्मरन्ध्रस्थिते पद्मे सहस्रदलशोभिते।

श्रीगुरुं परमात्मानं व्याख्या मुद्रालसत्करम्॥ ७-२॥

द्विनेत्रं द्विभुजं प्रीतं ध्यायेद् अखिलसिद्धिदम्।

एवं ध्यात्वा च तत् पादस्मृतपीयुषधारया॥ ७-३॥

प्रक्षालितं निजं देहं संचिन्त्यस्थिरमानसः।

स्वीय हृत्कमले ध्यात्वा यथावत् स्वेष्ठदेवताम्॥ ७-४॥

तत् प्रभा पटलव्याप्तं देहं स्वं परिचिन्तयेत्।

प्रणम्याग्यां गृहीत्वास्य ऋष्यादि न्यास पूर्वकम्॥ ७-५॥

मन्त्रार्थं संस्मरं स्तीप गत्वा शाखोक्तवर्त्मना।

स्नात्वा पश्चात् स्वमन्त्रेण ऋष्यादिन्यास पूर्वकम्॥ ७-६॥

ध्यात्वेष्ट देवतां तीर्थं आचाह्याङ्कुशमुद्रया।

तीर्थावाहनं गंगे च यमुने चैवेति मन्त्रेण॥ ७-७॥

वमित्यमृतवीजेन मुद्रया धेनुसंज्ञया।

अमृती कृत तत् तीर्थं शरेणैव तु रक्षयेत्॥ ७-८॥

तज्जले देवता मूर्त्तिं ध्यात्वा तच्चरणस्नुते।

तीर्थे निमज्यत्रिर्विद्वान् मनसा मन्त्रमुच्चलम्॥ ७-९॥

कृत्वाघमर्शणभूयः संध्यादि कृत पूर्वकम्।

७०अ) जप्त्वा मुलमनुं त्वष्टाविशति प्रमितं ततः॥ ७-१०॥

वक्ष्यमाणेन मन्त्रेण तावत् संख्यं प्रतर्पयेत्।

अभिषिंचेत् ततो मूर्ध्नि तद्वत् कलशमुद्रया॥ ७-११॥

तन्तु देवस्य गायत्रीं जपित्वा पक्तिशस्तथा।

ॐ घृणिः सूर्य आदित्येभ्येष्टाणि न च भानवे॥ ७-१२॥

अर्घं दत्त्वाथमूलेन दशधामन्तित्रैजलैः।

आचम्य दिक्पतीर्नत्वा गच्छेद् देवे गृहं ततः॥ ७-१३॥

वमित्यमृतवीजेनामृतीकरणम्।

स्नानस्य वहुविधत्वात् प्रकृते निमज्जनं अघमर्षणमिति शूद्रेतरविषयम्॥

तर्पणं तु॥

सन्तर्पपीठमन्त्रैः सकृत् सकृत् प्रथममच्युतं तत्र॥

अवाह्य पूजयेत् तन्तो यैरेवाखिलै समुपहारैः।

वद्धाथधेनुमुद्रां तोयैः संपाद्य तर्पणद्रव्यम्॥

तद्धुघ्याञ्जलिनाभं सुवर्णचषकी कृते नतर्पय तु।

भूयः स्वकल्पविहितान् सकृत् सकृत्तर्पयेत् परिवारान्॥

तर्पयामि पदं योज्यं मन्त्रान्ते स्वेषुनामसु।

द्वितीयां तेषु च पुनः पूजा शेषं समापयेत्॥ ७-१४॥

इति प्रयोगादौ॥

गायत्र्यश्चानुसंधेयाः॥

घृणिः सूर्य इति मन्त्रस्तु द्विजविषय एव वैदिकत्वान्तन्मन्त्रस्य॥

ह्राँ ह्रीँ सः सूर्याय नमः इत्यादिना मन्त्रातरेण शूद्रादिनार्घोदेयः॥

ततो द्वारादि पूजा वै कर्त्तव्याभूति मिच्छता।

आचम्य विधिवत् कुर्यात् सामान्यार्घं तु तद्यथा॥ ७-१५॥

अस्त्रेणपात्रं सशोध्य हृन्मन्त्रेण प्रपूज्य च।

तीर्थमत्रेण चावाह्य तीर्थं संवित् प्रमंडलात्॥ ७-१६॥

७०ब्) तज्जले गंधपुष्पाणि निक्षिपेत् तानमुच्चरन्।

अस्त्रेण शोधयित्वै तत् स्मृत्वा? मुलं जपेन्त्रिस्सः॥ ७-१७॥

दर्शयेद् धेनुमुद्रां च सामान्यार्घायमीरितः।

अस्त्रेणास्त्रमन्त्रेण फडिति मत्रेणत्यर्थः।

हृन्मन्त्रेण नम इति मन्त्रेन॥

गंगे च यमुने चैव गोडावरि सरस्वति॥ ७-१८॥

इति॥

एष तीर्थमनुः प्रोक्तो दुरितौघविनाशनः।

तीर्थावहनमंकुशमुद्रये तीर्थः॥

तज्जलेन सामान्यार्घजलेन तारमुर्च्चरन्॥ ७-१९॥

ॐकारमुच्चरन्॥

स्पृष्ट्वार्घजलं स्पृष्ट्वा मूलं मूलमन्त्रम्॥

तज्जलैरस्त्रमन्त्रेण द्वारमत्युपूजयेत्।

विघ्नं द्वारोभ्यशाखायां महालक्ष्मी सरस्वतीम्।

एतन् त्रितयपूजनं तु प्राथक्रमेणैव॥

द्वारोर्ध्वशाखायामिति।

द्वारस्य दक्षिणमध्य वा मध्यवामभागेषु॥ ७-२०॥

तदुक्तं पूर्णपर्द्धतौ॥

द्वारस्य दक्षिणे वामगाणं च सरस्वतीम्।

उर्ध्वोदुंवरके मध्य ततो द्वारश्रियं यजेत्।

ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्यतः॥ ७-२१॥

तयोः पार्श्वे गते गङ्गा यमुने पुष्पवारिभिः।

धातारं च विधातारं शंखपद्मनिधी तथा॥ ७-२२॥

देहल्यामर्च्चयेदस्त्रं प्रतिद्वारमिति क्रमात्।

दक्षिणवामशाखायोः क्रमेण गङ्गायमुने पूजनीय।

तदुक्तं पूर्णपद्धतौ॥

गङ्गा च यमुनां तद्वद् दक्षसव्यस्तशाखयो॥ रिति अत्र केचित्॥

७१अ) विघ्नेशदक्षपार्श्वयोगं गा च मुने एवं क्षेत्रेशपार्श्वयोरपि॥

एवं धात्रादयो पीत्याहुः॥

तन्न॥

वचनार्थासंगतेः॥

उक्तं वचनविरोधाच्च॥

द्वारान्तः पार्श्वयोः पूज्या गंगा च यमुनानदी॥ ७-२३॥

कोणेषु विघ्नं दुर्गा च वाणी क्षेत्रे समर्च्चयेत्॥ इति॥

कोणेषु द्वारकोणेष्विति कल्पद्रुमः॥

तत् प्रमाणा भावात्॥

ततो दक्षिणशखायामित्यादि वहुवचनविधाना च्च ततस्तत् तदेवतायास्तत् तद् वाराधिपान्यजेत्।

ततोस्त्र पूजानं तपम्॥

विष्णो द्वाराधिपानन्द सुरन्दचन्दसंज्ञका॥ ७-२४॥

प्रचंडाथवलश्चैव प्रवलोभद्र एव च।

सुभद्रश्चैव संप्रोक्ताः शैवाद्द्वाराधिपः पुनः॥ ७-२५॥

नंदिसंज्ञो महाकाल गणेशा वृषभस्तथा।

भृंगिरीटस्तथा स्कंद् उमा चण्डेश्वरास्त्वमी॥ ७-२६॥

वक्रतुण्डश्चैकद्रंष्ट्रो महोदरगजाननौ।

लंवोदरोथविकटो विघ्नराजाह्वयो परः॥ ७-२७॥

धूम्रवर्णस्त्विमे वैघ्नाः शाक्तियोमातरः स्मृताः।

ब्राह्मीमाहेश्वरी भूयः कौमारी वैष्णवी तथा॥ ७-२८॥

वाराह्यनन्तरेन्द्राणी चामुण्डा सप्तमी तथा।

अष्टमी स्यान् महालक्ष्मीः प्रोक्ता विश्वस्य मातरः॥ ७-२९॥

इन्द्रोयमोथवरुणः कुवेरस्त्रैपुरामताः।

चतुर्द्वारिनन्दाद् यस्तु युग्मणः कुवेरादयस्त्वेकैकं कैथिलाः पुनरिदानीं विघ्नोत्सारणं वहिरिति वदन्ति॥

७१ब) तन्नवहिरुच्यरणस्य प्रयोजना भावात्।

वहिर्विघ्नोत्सारणेनान्तर्विघ्नोत्सारणा सिर्द्धवस्तुतो यागमंडपान्तः शोधनार्थमेव तत्।

तथाचान्तरे वेति दिक्॥

किंचित् स्पृशन् वामे शाखा देहलीं लिंघयेद् गुरुः॥ ७-३०॥

अंगं संकोचयन्नन्तः प्रविशेन् दक्षिणाङ्घ्रिणा।

वामशाखां वामावस्थितशाखाम्।

अनन्तरं दैशिकेन्द्रो दिव्यदृष्ट्यावलोकनात्॥ ७-३१॥

दिव्यानुत्सारयेद् विघ्नान् अस्त्राद् भिश्चान्तरिक्षगान्।

पार्ष्णिघातैस्त्रिभिर्भौमान् निर्तिविघ्नान्निवारयेत्॥ ७-३२॥

दिव्यदृष्ट्या मूलमत्रेण ऊर्ध्वदृष्ट्या अस्त्राद् भिरहिताय फडिति मन्त्रः तत्
सहिताद् भिरित्यर्थः अन्तरिक्षगानतरिक्षस्तद् भूजान् ततः
सिद्धार्थाक्षतकुसुमं नारावास्त्रधिया गुरुः।

अपसर्पं तु ये भूता इति॥

इत्यन्तेस्त्रं समुच्चार्य मण्डपान्तः परिक्षिपेत्।

पार्ष्णिघातानाह॥

वामपादं ततो भूमौ हत्वावारत्रय ततः॥ ७-३३॥

ततस्तालत्रयं दद्याद् ऊर्ध्वोर्ध्वं वंधनेदिशाम्।

प्रदक्षिणाक्रमेण त्रिच्छोटिकाभिः पुनः पुनः॥ ७-३४॥

इति॥

तदुक्तं सुंदरी रहस्यवृत्तौ॥

आगमकल्पद्रुमे च।

नैऋत्यां दिशिवास्वीशं ब्रह्माणं च समर्चयेत्।

पंचगव्यार्घतोयाभ्यां प्रक्षिपेद् यागमण्डपम्॥ ७-३५॥

पंचगव्यप्रकारमाह॥

स्मृतिशास्त्रे॥

गोमूत्रं गोमयं क्षिरं दधिसर्पिकुशोदकम्।

पंचगव्यमिदं प्राहुर्मन्त्रतन्त्रविशारदाः॥ ७-३६॥

गोमूत्रस्य च भागार्धं शकृत् क्षीरस्य च त्रयम्।

७२अ) द्वयं दध्नोघृतस्यैकं मेकं च कुशवारिणः॥ ७-३७॥

गायत्र्यादायगोमूत्रं गंधद्वारेतिगोमयम्।

आप्यायस्वेति च क्षीरं दधिज्वावणेति वै दधि॥ ७-३८॥

तेजोसीति घृतं चैव देवस्य त्वाकुशोदकम्।

मन्त्राद्यपरिज्ञानेन प्रणवे नैव शोधयेत्॥ ७-३९॥

तथा॥

आहृत्यप्रणवे नैव उत्थाप्यप्रणवेन च।

प्रणवेन समालोत्र्य प्रणवेन पुनः पिवेत्॥ ७-४०॥

पंचगव्येन तद् देहं मण्डपं च विशोधयेत्।

तदूक्तं गोतमीये॥

पलमात्रं दुग्धभागं गोमूत्रतावद्विष्यते॥ ७-४१॥

घृतं च पलमात्रं स्याद् गोमयं तोलकं द्वयम्।

दधिप्रसृतमात्रं स्यात् पंचग्व्यमिद स्मृतम्॥ ७-४२॥

अथवा पंचगव्यानां समानो भाग इष्यते।

मूलमन्त्रेण संमन्त्र्य कुशाग्रेणैव शोधयेत्॥ ७-४३॥

तेन सर्वविशुद्धिः स्यात् सर्वपापो निकृन्तनम्।

तथा तीक्ष्णदंष्ट्रमहाकायेति॥

इत्यनुज्ञां गृहीत्वा स्य जपस्थानं विशोधयेत्॥ ७-४४॥

चतुष्प्रकारं तच्छुद्धिं विदध्याद्विक्षणादिभिः।

वीक्षणं मूलमन्त्रे शरेणप्रोक्षणं मतम्॥ ७-४५॥

चदनागुरुकर्पूरैधूपयेदन्तरं स्वधिः।

अनन्तरं मण्डपस्य॥

विकिरान्विकिरन्त्रजप्तजप्तान् शरानुना॥ ७-४६॥

राजचन्दनसिद्धार्थ भस्मदूर्वाकुशाक्षतः।

विकिरा इति संदिष्टा महाविघ्नौघनाशकाः॥ ७-४७॥

उक्तेस्थवासनेष्वेकं वैराजिनकुशोत्तरम्।

वेदिकायां प्रविन्यस्य प्रक्षयेत् सलिःलैः शुभैः॥ ७-४८॥

आधारादिपृथिव्यन्तस्तत्र संपूज्य देवताः।

७२ब) मेरुः पृष्ठऋषिः छन्दः पृथिव्याः सुतरं मतम्॥ ७-४९॥

देवता कूर्म आख्यातः संस्मरेद् ऋषिपूर्वकम् (ः)।

पृथ्वि त्वया धृता लोका इति मन्त्रं जपन् पीठे प्राङ्मुखो वाप्युदङ्मुखः
॥

स्वस्तिकादिक्रमेणैव ऋजुकायो विशेद्बुधः॥ ७-५०॥

स्वस्तिकादिक्रमश्चान् नप्रपंचेनुसंधेयः आधारादि आधारशक्त्यादि
वद्धपद्मासनो मौनी इति सुवासितांवुं सपन्नमिति भूतशुद्धि ततः
कुर्याद् इति च विपरीतफलं दद्याद् अभक्त्या पूजनं यथा॥

इति तदकरणे निन्द्यार्थवादश्रुतेः।

जपाद्यं सर्वमन्त्राणां इति इत्यनेन मातृका न्यासस्य च तथा त्वात्।

तथोक्तं क्रमदीपिकायाम्॥

इत्युच्यती कृत तनु न्यासम् इति वचनानुरोधाच्च तौ पूजाद् आवश्यकौ तयोर्देव
भावार्पकत्वादिति।

तथोक्तं क्रमदीपिकायाम्॥

स्नातो निर्मलधौतशुष्कवसनो धौताङ्घ्रिपाण्याननः

स्नाचान्तः सुपवित्रमुद्रितकरः श्वेतोर्ध्वपुन्ड्रोज्वलः।

प्राचीदिश्वदनो निवद्धसुद्दढं पद्मासनं स्वस्तिकं

वासिनः स्वगुरुन् गणाधिपमतो वन्देत वद्धांजलिः॥ ७-५१॥

कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः।

नत्वा गुरुं गणेशानं भूतशुद्धिं समाचरेत्॥ ७-५२॥

पाठक्रमेणैव नमस्कारः॥

वामगुरुं दक्षिणतो गणेशं दुर्गां पुरः क्षत्रपतिं च पश्चात्।

इत्येनेन दुर्गा क्षत्रपालयोरपि केचित्॥

तथा पुटांजलि भूत्वा वामे गुरुत्रयं जगत्।

दक्षिणे च गणेशान मूर्धि दैवेनतिं चरेत्॥ ७-५३॥

इति कल्पतरुः॥

७३अ) ॐ सहस्रार वर्मास्त्रं सुदर्शनमनुः स्मृतः।

ॐ सहस्रार हुँ फट्॥

इति मन्त्र॥

सुंगंदपुष्पमदेन सुरभीकृत हस्तकः॥ ७-५४॥

क्षिपेद् उत्तरतः पुष्पमन्त्रीना रा च मुद्रया।

इति पूजाप्रदीपः॥

अथ भूतशुद्धि प्रदीपः॥

अथास्त्रमन्तेण विशुद्धा पाणीत्रितालदिग्धं वहुताशशालान्।

विधाय भूतात्मकं एतद् अंगं विशोधयेच्छुद्धमतिक्रमेण।

त्रितालमूर्ध्वोर्ध्वमस्त्रमन्त्रसहितम्।

ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण कुर्यान् तालत्रयं ततः।

तेन संजनितं तेजः कुर्याद् रक्षां समं ततः॥ ७-५५॥

इति वचनात्॥

हुताशालं वह्निप्राकारम्॥

ततः॥

सुषुमणा वर्त्मनात्मानपरमात्मनियोजयेत्।

योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः॥ ७-५६॥

कारेण सर्वभूतानां तत् स्वान्यपि विजभावेन लीलाति व्युत्क्रमात्
परमात्मनि चिन्मन्त्र सोहमिति मन्त्रः।

मनुना हंसदेवस्य इत्यनेन हंस इति मन्त्रेण आनयनमिति पूजाप्रदीपः।

नैतावता सोहमिति मन्त्रसिद्धिः वस्तुतः।

चिन्मन्त्रेण व्युत्कुमेण योजयेत् परमात्मनि॥ ७-५७॥

इति श्रूतेः॥

उभयो चिन्मन्त्रत्वमविरुद्धमिति तत्त्वानि पंचविंशतिश्चतुर्विंशति वा।

तदुक्तं प्रपंचसारे॥

भूतेन्द्रियेन्द्रियार्थैरुद्दिष्टं तत्त्व पंचविंशतिकं
करणोपेतैरतैस्तत्त्वान् युक्तान्यविहितवचनाद्यैरिति।

७३ब) इन्द्रियाणि ज्ञानेन्द्रियाणि पंचकर्मेन्द्रियाणि पंचेति दश
इन्द्रियानामर्थोश्च दशः अन्तकरणम्॥

मणोवुद्धिरहंकारश्चित्तं च परकीर्त्तितम्।

इति॥

पृथिव्यप्तेजो वायोकाशाः गंधरसरूपस्पर्शशब्दघ्राणरसना-

चक्षुस्त्वक्

श्रोत्त्रवाक्पाणि पादपायुपस्थ वचना दानगमनविसर्गानंदात्मक

पंचविंशतितत्त्वानि वीजभावेन तत्र लीनानि विचिन्त्य॥

इडावक्रे धूमं स तत *? तिवीजं सरवकं सरेन्मन्त्री

पूर्वसकलभूवनोच्छोषणकरम्॥

स्वकं देहं तेन प्रततवपुषा पुर्यसकलविशोख्यव्या मुंचेत्

पवनपथमार्गेन खमणे।

ते नैव मार्गेन विलीनमारुतं वीजं विचिन्त्यारुणमाशुशुक्षणैः॥

आपूर्यदेहं परिदह्य वामतो मुंचत् समीरं सहभस्मना व॥

खमणे मार्गेन सूर्यवत्मना॥

तथा चोभयपक्षमपि॥

प्रमाणिकम्॥

अमरेन्द्रपुरोगतेन सकालप्रथमेन रेफेणेत्यर्थः॥

पूरकं षोडशमात्रया॥

कुंभकं चतुःषष्ठिमात्रया रेचकं द्वात्रिंश मात्रयेति भावः॥

अयमपि प्राणायामविशेषः॥

प्राणायामे च तथा वस्य वक्ष्यमानत्वात्॥

अत्र केचित् या प पुरुषस्य शोधनादिकं वदन्ति तन्मते कुक्षौ पापपुरुषं चिन्तयेत्।

७४अ) यतस्ततः पुरुषनिभं पापमनादिभवसंचितम्॥

ब्रह्महत्या शिरस्कं इत्यादि वामकुक्षौ विचिन्तयेति यावत्॥

ततः संधयेद् देहमित्यादि गुरुतल्पगमने नेत्यर्थः।

विद्ध्यान् मातृका न्यासं इति वचनान् मातृका न्यासस्यावशकत्वम्॥

तथा मातृकामन्त्रस्य ऋषिब्रह्मा समुद्दिष्टो गायत्रीच्छंद ईरीत्ः इत्यादि पंचाङ्गानि मनोर्यस्य तत्र।

मनुं त्यजेद् इति तावत्॥

अंगहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत्॥ ७-५८॥

जातयश्च नमः स्वाहा वषट् हुं वै वौषट् फड्कार एव च॥

जातिषड्कं इदं प्रोक्तं हृदाद्यष्टांगसंयुतम्।

अस्त्रं तु तरयोरिति यद्यपि अस्त्रं तलयो न्यसेद् इति वचनात् पंचाङ्गपक्ष अस्त्रं न्यास॥

करतरयोरेव तथापि रचय तु करद्वंद्वपंचाङ्गं अंगुलिपंचक इति क्रमदीपिका वचना॥

कनिष्ठयोरेवास्त्र न्यास इति कवचमन्त्रस्तु पंचमस्वरसंयुक्तो हकारः पंचमः स्वरः।

ह्रस्व-उकारस्तद्युक्तो हकारः सविंदुरित्यर्थः तेन हुं इति वीजं भवति तथा कवचायेति पूर्ववत्॥

कवचमन्त्र॥

सदौर्षट् शिखाहुमिति वर्मणि स्थितमिति क्रमदीपिका वचनात्।

अन्यथा तत्र च्छंदो भंगापत्यः अतः त्वरिता मन्त्रे दीर्घं तनु च्छदमित्यभिहितम्॥

७४ब) तथा चोभयोरेव कवचमन्त्रत्व मायाति नेत्रत्रयायेति संभवदुक्तिकं इदं यत्र तु नेत्रद्वयं तत्र नेत्राभ्यामिति॥

अंगहीनस्यानुक्ताङ्गमन्त्रस्य स्वे नैव मूलमन्त्रेणैव अत्र करन्यासे

अंगुष्ठाभ्यां नम इत्यादि प्रयोगस्य प्रमाणाभावात्॥

तदंगपंचकं तथा यथा समीरितं करे॥

इति क्रमदीपिका वचनाच्च हृदयाये नम इत्येव प्रयोगः॥

इति पूजाप्रदीपः॥

तन्न॥

अंगुष्ठादिष्वंगुलिषु न्यसेद् अंगैः सजातिभिरिति सारदातिरक वचनानुरोधात्॥

तस्यार्थः॥

अंगुष्ठसजातिभिरंगुष्ठादिष्वंगुलेषु न्यसेद् इत्यर्थः॥

नवाङ्गुलि सा जाभ्यं हृदयादिष्वपीति वाच्यम् व्यवहारविरोधाद् इति किं चक्रमदीपिका वचनस्याप्ययमेवार्थः॥

यथा॥

यन् प्रकारेणाङ्गपंचकं करे समीरितं तथा तन् प्रकारेणैव हृदये पीति ॥

अपि च॥

आदौ चाङ्गसमुच्चार्य मन्त्रं पश्चान् न्यसेत् सुधीरिति वचनविरोधात्॥

करन्यासे इत्यभिधानस्य व्यर्थत्वात्॥

तस्माद् अंगुष्ठाभ्यां नम इत्येव प्रयोगः॥

वह्निजायान्ते वचनात् स्वाहादिपदप्रयोगो नुसरणीयस्तर्जन्यादौ एव करांगन्यासौ विधायमातृका न्यासं कुर्यात्॥

यथा॥

पंचाशल्लिपिभिर्विभक्त मुखदोपन् मध्यवक्षस्थलां भास्वन् मौलिनिवद्धचंद्रशकलामोपीनतुंगस्तनीम्॥

मुद्रामक्षगुणं सदाध्यकलशं विद्या च हस्तांवुजैर्विप्राणां

विषदप्रभा त्रिनयनां वाग्देवतामाश्रय॥

७५अ) पंचाशलिपिभिरिति अकारादिक्षकारान्तलिपिभिर्यथाक्रमेणाङ्गसप्तकं

चिन्तनीयम्।

तदुक्तं प्रपंचशारे॥

अ क च ट त पयाद्यैः सस्तभिः वर्णवर्गे विरचित मुखवाहुपादमध्याख्य

हृत्केति मुद्रातिकं दक्षिणाधः क्रमेण प्रादक्षिण्येन मुद्रा ज्ञानमुद्रम्

॥

तथा अंगुष्ठतर्जनीयोगा ज्ञानमुद्रा पकीर्त्तितेति।

स्थानान्याह॥

ललाटमुखवृत्ताक्षि श्रुतिघ्राणेषुगण्डयोः॥ ७-५९॥

ओष्ठदन्तोत्तमाङ्गास्य दोः पसंध्यग्रकेषु च।

पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयांसके॥ ७-६०॥

ककुद्यंसे च हृत्पूर्वपाणिपादयुगे अपि।

जठराननयोर्न्यसेत् मातृकार्णान्यथाक्रमम्॥ ७-६१॥

केषां चिन्मत हृदयादिषु अंसादिषुरफ न्यासः॥

पादयोः शषोः भुजयोश्च होर्न्न्यासः।

ओमाद्यन्तो नमान्तवा सविन्दुविन्दुवर्जिता।

पंचासदक्षरन्यासः क्रमेणैव विधीयते॥ ७-६२॥

इति विश्वसारश्रवेणात्॥

अत्र केवलानां सविसर्गाणा च सृष्टिक्रमेण विसर्गविंदुसहितानां
स्थितिक्रमेण विंदुनां स्ंहारक्रमेण न्यासः॥

स्थित्यादौ न्यासे विशेषः॥

तदुक्तं शारदातिलके॥

न्यसेत्सर्गान्वितां सृज्या ध्यात्वा देवी यथा विधि।

सर्गचिन्द्वन्ति कान्यसंङ्गार्णायां स्थिति वर्त्मना॥ ७-६३॥

तथा च वैशं पायनसंहिताया॥

७५ब) टपरमती व शुभ्रममृतां शुपथेन विधुम्॥

नय तु ललाटं चद्रममुतः सकलार्णमयीम्।

लपरजपान्निपात्पर च येच्चत या सकलं

वपुलमृतौघवत्तिमथवक्ककराद्यमिदम्॥

टपनं विधुं ठमिति चद्रवीजमीत्यर्थः अमुतोललाटचंद्रात्॥

लपरजपाल्लपालकारस्य परोवकारस्तस्य जपात्।

वमित्य मृतवीजजपात्।

अमृतौघ्नवृत्ति निपात्यतया वशिष्ठभस्मनासकरं वपुः रचयेदिति प्रदीपः॥

एवं॥

ततः शोषयेद् देहं वायुवीजेन वायुना।

वह्निवीजेन ते नैव संदहेत् सकलां तनुम्॥ ७-६४॥

विश्लेषयेस्तदोषान मृतनामृतांभसा।

आपाद्यप्लावयेद् देहे मापादतलमस्तकम्॥ ७-६५॥

संजाते निर्मलदेहे देवताराधनक्षमे।

आत्मलिनानितत्त्वानि स्वस्थानं प्रापयेत् ततः॥ ७-६६॥

आत्मानं हृदयांभोजमानयेत् परमात्मनः।

मनुना हंसदेवस्य कुर्यान् न्यासादिकं ततः॥ ७-६७॥

न्यासादिकं स्वतन्त्रोक्तं हंसदेव मन्त्रः हंस इति॥

उक्तं च सारसमुच्चये॥

संयोज्य जीवमथदुर्गम मध्यनाडीमार्गेण पुष्करनिविष्टशिवेषु
सूक्ष्म्ये॥

हंसेन देवममरेन्द्रपुरोगते नसार्धन्दुनाभसितमाद्विदधीतवुध्या॥

तथा चोभयपक्षमपि प्रामाणिकम्॥

विन्दुसर्गान्वितां न्यसेद् गुल्फादि स्थिति वर्त्मना।

जान्वन्तं तु ततो देवी गृहस्थानां भवेदयम्॥ ७-६८॥

डकारादिठाकारान्तां योजयेत् परदेवताम्।

इति॥

विद्यात् पूर्वोदितान् विद्वान् ऋष्यादीनगसंयुतान्॥ ७-६९॥

७६अ) ध्यायेद् वर्णेश्वरीमत्र वल्लभेन समन्विताम्।

वल्लभो महेशस्तेन युतम्॥

तस्य ध्यानमाह।

सिंदूरकान्तिम् असिताभरणं त्रिनेत्रं विद्याक्षसुत्र मृगयो
तवदान्दधारम्।

पार्श्वे स्थितां भगवतिमपि कांचनाङ्गी ध्यायेत् कराब्जधृत
पुस्तकवर्णमालाम्॥ ७-७०॥

विशेषान विधानाद् विन्दुसर्गरहितोपि सृष्टिक्रमेणैव न्यासः
प्रथमोपस्थितत्वात्।

अकारादिक्षकारान्त न्यास एव सृष्टिप्रकारः स्थितीतिव्या चष्टे टार्णाद् यामिति
॥

तकारादिक्षकारपर्यन्तं वर्णान्विन्यसेत् तकारादि ऐकारान्ता विन्यसेदिति॥ ७-
७१॥

केवलविन्दुयुक्त न्यासमाह॥

विन्दुयुक्तां इमां न्यस्यत् संहृत्या प्रतिलोमतः।

विद्या पूर्वोदिता न्यासान् ऋष्यादीनंगसंयुतान्॥ ७-७२॥

ध्यायेद् वर्णमये पद्मे देवीं वाग्वल्लभाशिवाम्।

अक्षस्त्रजं हरिणपोतमुद्रग्रटेंकां विद्यां करैरविरतं दधतीं त्रिनेत्राम्॥

अर्द्धेन्दुमौलिमरुणामरविंदभासां वर्णेश्वरी प्रणमतं स्तनभारनम्राम्॥ ७-७३॥

संहृत्य (त्य)स्य विवरणं प्रतिलोमत इति॥ तथा च॥

क्षकारमारभ्याकारपर्यन्तं न्यसेद् इत्यर्थः॥

अन्यप्रकारश्च गौरवहयान्नलिखितः॥

प्राणायामं प्रवक्ष्यामि इति॥

७६ब) पवनसेयमनं त्वमुना चरेद्यमुहजप्तुमसौमनुमिच्छति।

अथवा अखिलेषु हरिमन्त्रजपादिषु मूलमन्त्र त इत्यनेन
मूलमन्त्रस्याभिधातात्॥ अथवा॥

अंगजन्ममनुना सुसंयमं सकलेषु कृष्णजपकर्मसुसदितैक-
सप्तकृतिवारमभ्यसं स्तनुयात् समस्तदुरितापहारिणा इत्यादिना
वीजस्याप्येभिधानात्॥

तस्माद् उभयपक्षकीत्तनाद् एकदेशेन्वयः॥

तथा चेच्छाविकल्प॥

मूलमन्त्रोष्टाक्षरगोपालमन्त्रः॥

क्रमदीपिकायां तथैवमूलमन्त्रेणाभिधानाद् दशाक्षरो वा॥

पक्षान्तरमाह॥

अथवा साधकः कुर्यात् प्रणवेणा सुसंयमम्।

स्त्रीभिः शुद्रैश्च कर्त्तव्यो लौकिकेन सुसंयम॥ ७-७४॥

त्रिषद् वा दशवारं वा परतः परतौ जपेत्।

परतः परत इति परः पर इत्यर्थः॥

शुचिः प्राणायामान् प्रणवसहितान् षोडशवशी प्रभाते सायं च
प्रतिदिवसमेवं वितनुते॥

द्विजोजस्तंब्रुनप्रहरणं कृतांहोविकलितं षुनन्त्ये ते मासादिहदुलित

तलौघदहनम् (ः) ॥

स्नप्रभाते सायं च इत्यत्रफलभूमा ॥

अंशत्रयात्मकः सोयं पूरककुंभकरेचकैः प्राणायामस्तावद्
द्विविधो भवति सगर्भोऽगर्भश्च ॥

जपध्यानादिभियुक्तं सगर्भं तं विदुर्बुधः ॥ ७-७५ ॥

तद् पेतमगर्भं तु प्राणायामं परेजगुः ।

तत्प्रकारमाह ॥

७७अ) इडया कर्षयेद् वायु वाह्यषोडशमात्रया ॥ ७-७६ ॥

तारयेत् पूरितं मन्त्री चतुःषष्ट्या तु मात्रया ।

सुषुमणामध्यकं सम्यग् द्वात्रिंशन्मात्र-आसनैः ॥ ७-७७ ॥

नाड्या पिंगला चैन रेचयेद् यागवित्तमः।

प्राणायाममिदं प्राहुर्योगशास्त्रविशारदाः॥ ७-७८॥

भूयोभूयः क्रमात् तस्य वृत्यासेन समाचरेत्।

मात्रावृद्धिक्रमेणैव सम्यग् द्वादशषोडश॥ ७-७९॥

इत्रयेति पूरणं प्रथमप्राणायामाभिप्रायेन द्वितीये पिंगलै व पुरणात्॥

ये नैव सन्त्यजेत् तेन पुरयेद् इति श्रवणात्।

यथा पुरणं तदन्य याने च नमिति सकलप्राणायामानुगतं
षोडशमन्त्रयेत् पुपलक्षणम्॥

मात्रावृद्धिक्रमेणैवत्यादिनाधिके नापि पूरण श्रवणात्॥

सनत्कुमारसंहितायाम्॥

दक्षया रेचयेद् वायुं द्वात्रिंशन् मात्रया ततः

मात्रा च उक्तं मार्कंडेयपुराणे॥

निमेषान्मेषणे मात्रा काल इति।

इडया कर्षयेद् वायुं मनोः षोडशमात्रयाः।

सुषुमणामध्यगं कृत्वा विद्यावत्क्षणधारयेत्॥ ७-८०॥

ये नैव रेचयेद् वायुं ते नैव रेचयेत् पुनः।

उभयोर्मध्यगं कृत्वा तन्मात्राभिधारणम्॥ ७-८१॥

पीठन्यासमथो वक्ष्ये यथावेदवधारयेति पूर्वोक्तम्।

शारदायाम्॥

ऋष्यादि न्यासानन्तरं पीठन्यास उक्तः॥

तन्तश्चोपास्य मन्त्रस्य न्यासान् ऋष्यादिकां चरेत्।

तथा च विशुद्धेश्वरमन्त्रे॥

ऋषिन्यासामूर्ध्निदेशे छंदस्तु मुखपंकजे॥ ७-८२॥

देवता हृदये चैव वीजं तु गुह्यदेशिके।

७७ब्) शक्तिं त्वया दयोश्चैव सर्वादिकीलकं न्यसेत्॥ ७-८३॥

ऋषिस्तु॥

महेश्वरमुखा ज्ञात्वा यः साक्षात् तपसा मनुम्।

संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः॥ ७-८४॥

गुरुत्वात् मस्तके चास्य न्यासस्तत् परिकिर्त्तितः।

सर्वेषां मन्त्रतत्त्वानां साधना छन्द उच्यते॥ ७-८५॥

अक्षरत्वात् पदत्वाच्च मुखे च्छंदः समिरितम्।

ऋषिच्छंदोपरिज्ञात्वान् नमन्त्रफलभाग्भवेत्॥ ७-८६॥

दौर्वल्यं याति मन्त्राणां विनियोगमजानताम्।

इति ऋषिन्यासा वश्यकत्वमिति भावः॥

मन्त्रशास्त्रे तथा चोक्तं प्राप्तमन्त्रेणधीमता॥ ७-८७॥

यस्य मन्त्रस्य ये न्यासाः कर्त्तव्या सिद्धिमिच्छता।

जपतर्पणहोमार्चाः सिद्धमन्त्र कृता अपि॥ ७-८८॥

अंगं न्यासादिभिर्हीना नदास्यन्ति फलान्यमी।

न्यासान् समस्तान् न्यसतः स्वदेहे त्रैलोक्यमेतद् वशमेति पुंसः।

पापानि सद्यः प्रणमं प्रयान्ति त्रेस्यान्ति भूतानि सपन्नगानि॥ ७-८९॥

आदौ ऋष्यादि विन्यासः करन्यासमनन्ततः।

ततो यद्यक्षर न्यासः पदन्यासस्ततः परम्॥ ७-९०॥

यदीति पदं न्यासेप्यनुषह्यते॥

औसर्गिकक्रमो यं क्वचित् कल्पोक्तेनापि वाध्यते॥

पुरश्चरणचन्द्रिकायां च॥

तत्कल्पविशेषोक्ता न्यासानन्यान् समाचरम्।

क्रमदीपिकायां तु॥

अंगादिन्यासं विधाय ऋष्यादि न्यास उक्तः॥

७८अ) ध्यानस्वरूपमाह॥

ध्यानं चेत् स्वष्टदेवस्य मनसावेदनं मतम्।

यज्जीवब्रह्मणोरैक्यं सोहेंस्यादिति वेदनम्॥ ७-९१॥

तन्निगुणं हृदं भोजं कर्णिकाकेसरान्वितम्।

स्वीयष्टदेवतां तत्र ध्यायेद् आगमदैशिताम्॥ ७-९२॥

एवं यद् वेदनं तस्तु सगुणध्यानमुच्यते।

एवं ध्यात्वा महात्मानं पूजयेद् वाह्ययोगत॥ ७-९३॥

आत्माग्रतश्चतुष्कोणं षडश्रं च त्रिकोणकम्।

सामान्यार्घजले नैव कृत्वाङ्गानि प्रपूजयेत्॥ ७-९४॥

आग्नेयादिषु कोणेषु हृदाद्यंगचतुष्टयमिति वामतो वह्निमंडले यावत्॥

वह्निमंडले त्रिकोणे॥

तत्र संध्यादिके देवि निक्षिप्यद्धृदयानुना।

आदिपदात् पुष्पाक्षतपरिग्रहः।

हृदयाणुना नमः इति मन्त्रेण।

अर्घस्वरूपमाह।

गंधपुष्पाक्षतयवा इति अर्घोयं परिकीर्त्तिता।

पुरणमाह॥

पूरयेद् विमलपाथ सासुधीरक्षरैः प्रतिगतै शिरान्तगैः।

अक्षरे मातृकाक्षरैः॥

प्रतिगतै विमलोमस्थैः शिरोतगैः स्वाहान्तैः अकारान्तैरपि केचित्।

विलोममातृकामन्त्र पाथान्तरं मूलमत्रोपि पठनीयः।

इत्यपि केचित्॥

तत्र तीर्थमनुनाभिवाहयन्तिर्थमुष्णरुचिमडलान्ततः।

स्वीय हृत् कमलतो हरिं तथा गालिंनी तदुपरि प्रदर्शयेत्॥ ७-९५॥

तज्जलं नयनं मन्त्रवीक्षितं वर्मणा समवगुण्ठादोयुजा।

७८ब्) मूलमन्त्रसकली कृतं न्यसेद् अंगकैश्च कलयेद् दिशोस्त्रनः॥ ७-९६॥

नयनमन्त्रवीक्षितं वौषडिति मन्त्रवीक्षितं वर्मणा हुमिति मन्त्रेण।

तीर्थावाहनमंकुशमुद्रया॥

तदुक्तं गौतमीये॥

तीर्थमावाहयेद् विद्वान् मुद्रयाङ्कुशसंज्ञया।

प्राक् प्रदर्शितोयं तीर्थमन्त्री सकलीकृतं अभिमन्त्रितम्॥

तथा च शारदायाम्॥

मूलमन्त्रं जपेत् स्पृष्ट्वा जयेत् तस्याङ्गमन्त्रवित्॥ ७-९७॥

धनुमुद्रयामृतीकृत्य सकलीकरणम्॥

तदुक्तम्॥

अमृतीकरणं कृत्वा चिन्तयेदिष्टदेवतात्।

अंगन्यासेन सकलीकृत्यास्त्रेणदिशोदश॥ ७-९८॥

अक्षतादियुतमच्युती कृतं संस्पृशन् जपति मन्त्रं मष्टशः॥

मत्स्यमुद्रया च्छाद्यपेत्।

तदुक्त॥

अष्ट द्दत्वो जपेत् मूलमाच्छाद्य मत्स्यमुद्रयेति दक्षिणे
प्रोक्षणिपात्रमादायाद्भिः प्रपूरयेत्॥

किंचिदर्घांवुसंगृह्य प्राक्षिण्यंभसि योजयेत्।

प्रोक्षणीपात्रतोयेन तेनात्मानं त्रिवारतः॥ ७-९९॥

प्रोक्ष्य पुष्पादिकं चापि मूलेन प्रोक्षयेत् सुधीः।

दक्षिणे पूर्वस्थापितार्घस्य दक्षिणे॥

प्रोक्षणं च करेणैव प्रोक्षयेन् निजतनुं ततो मुनात्रिः करेणमनुणा
तथाखिलम्।

साधनं कुसुमचन्दनादिकमिति॥

पाद्यस्याचमनीयस्य मधुपर्कस्य चाप्यथ॥ ७-१००॥

प्रोत्राण्याधारयुक्तानि स्वर्णादिरचितानि च।

स्थापयेत् पुरतस्तानि पूरयेच्छास्त्रवर्त्मना॥ ७-१०१॥

पाद्यादिपात्रस्थानमाह॥

७९अ) अर्घस्योत्तरतः कार्यं पाद्यमाचमनीयकम्।

इति वचनात्॥

स्वपाण्याह॥

पाद्यं श्यामार्कदूर्वाब्ज विष्णुकान्ताजलैः स्मृतम्॥ ७-१०२॥

जातीलवङ्गकर्कोलजलैराचमनीयकम्॥

आज्यं दधिमधुमिश्रं मधुपर्कः समीरितेः।

पुनराचमनीयकम् केवलं जलोर॥

तदुक्तं गौतमीये॥

ते नैव मनुनाकुर्याद् अभिचारमणीयकम्॥ ७-१०३॥

एकस्मिन्नपि पात्रे वा पाद्यानि प्रकल्पयेत्।

सर्वोपहारवस्तूनामभावे भावयेद् धिया॥ ७-१०४॥

सर्वोपहार इति॥

उपहारविशेषाभावे मनसा कल्पनेमिति पूजाप्रदीपः तच्चिन्त्यम्॥

सोमान्याभावपरमिति निष्कर्षः॥

अथ मानसपूजा॥

अथ मूर्धनिमूलचक्रमध्यनिजनाथं गणनायकं समभ्यर्च्य
आसनक्रमतश्च पीठमन्त्रैजलगंधाक्षपुष्पधूपदीपैः प्रयजेद् अथ
मूलमन्त्रतो निजमूले हृदये ध्रुवोश्च मध्य।

त्रितयं स्मरतः स्मरेत् तद् एकीकृतमानन्दगणं तडिल्लताभम्।

तत् तेजाङ्गैः सावयवी कृत्य निजनाथं गुरुं पीठमन्त्रैः॥

ॐ आधारशक्तये नमः॥

इत्यादि मन्त्रैः स्मरतः कामवीजेनेत्यर्थः॥

ततः संपूजयेद् देवं गन्धाद्यै मूलमूच्चरन्।

पंचकृत्य पुनः कुर्यात् पुष्पांजलिमनन्यधी॥ ७-१०५॥

उत्तमाङ्गे हृदाधारे पादसर्वाङ्गके क्रमात्।

अथवा पाद्यम्॥

दत्वा समर्च्चगन्धपूष्पाद्यैस्ताम्बुलगीतनवाद्यैः सन्तोष्य चूलकसलिलेन
।

७९ब्) ब्रह्मार्पनाख्य मनुना कुर्यात् स्वात्मार्पणं मन्त्री।

अर्पणमन्त्रस्तु अग्रे लिख्यते मानसपूजायां नैवेद्यदानं नास्ति॥

विनानैवेद्यगन्धाद्यैरूपचारैः प्रपूजयेदिति वचनात्।

गुरुपदिष्टविधिना शेषमन्यात् समापयेत्॥ ७-१०६॥

शेषं तत् कल्पोक्तमिति मानसी पूजा।

वाह्यपूजां प्रवक्ष्यामि मन्त्रिणांहितकाम्यया।

एवं देवमये पीठे चिन्तयेद् इष्टदेवताम्॥ ७-१०७॥

मुद्राः प्रदर्श्य विधिवद् अर्घस्थापनमाचरेत्।

इति वचनात्॥

अर्घस्थापनमिदानीमेव तदनुष्ठानं दीक्षा पल्लवेनुसंघेपम्॥

सस्तं निजैकेन तथैव चक्रे चित्ते पटे वा यजनपानभूमौ॥

मोहादसौस्थं डिलगं यजेच्चद्भूशेत्त्विवर्गादपि सिद्धमन्त्रः।

सालिग्राममनौ यन्त्रे मण्डले प्रतिमासु च॥ ७-१०८॥

नित्यं पूजा हरेः कार्या न तु केवलं भूतलेः।

भुनिषेदस्तु मण्डलरहितभूमिपरः।

यन्त्रस्यावश्यकत्वमाह॥

आदौ लिखेद्यन्त्रराजं तत् तत् कल्पोक्तलक्षणम्॥ ७-१०९॥

सौवर्णे राजतताम्रपीठे भूर्जे पटे भुवि।

विनायन्त्रेण चेत् पूजा देवता न प्रसीदती॥ ७-११०॥

दुःखनिर्यन्त्रेणाद्यन्त्रं इत्याहुस्तत्र वेदिनः।

इति कुर्याद्यन्त्रमिति वचनात्।

यन्त्रस्यावशकस्वम्॥

पीठे श्रीखण्डादिनिर्मिते अनुक्तकल्पे यन्त्रकरनमाह॥

वृहन्महत्स्यसूक्ते॥

यन्त्रं तु विलिखेत् पद्मदलाष्टकसमन्वितम्॥ ७-१११॥

८०अ) षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितमिति।

पंचायतनदीक्षा पक्षे।

पंचदेवता स्थाननियममाह॥

शभौमध्यगते हरीनहरभूदेव्यो हरो शंकरे

भास्ये नागसतारवौ गणपती शाजांविका स्थापितः।

देव्यो विष्णु हरैकदन्तरवयो लंवोदरे जश्वरे

नार्याः शंकरभागतोति शुभदा व्यस्तास्तु हारिष्प्रदाः॥ ७-११२॥

शंकरभागतः ईशानादितः॥

तथा चोक्तं समयोज्य मातृकायाम्॥

पूर्वे सूर्यं प्रपूज्याथ दक्षिणे गणनायकम्।

ईश्वरं पश्चिमे देशे उत्त्तरे विष्णुमर्चयेत्॥ ७-११३॥

तस्माच्चक्रचतुर्द्दशी क्रमवशान् नीर्मायचक्रं शुभं शुर्यहस्तिमुखं

परं स्मरहरं गोपालमेवं तथा॥

ध्यात्वाराधनतो सदा वहुविधैः पुष्पैश्च पाद्यादिभि

नानादिव्यसुगन्धमोदकवलैरुद्वासे येत् स्वहृदि॥ ७-११४॥

तथा च ज्ञानमालायां॥

भवानीं यदा मध्य ऐशान्यां माधवं यजेत्।

आग्नेयां पार्वतीनाथं नैरृत्यां गणनायकम्॥ ७-११५॥

प्रद्योतनं तु वायव्या माचर्यस्तु प्रपूजयेत्।

आत्मनः पुरतो भद्रे देवतः पुरतःस्तथा॥ ७-११६॥

पूर्वा शा कल्पिता शैषा सर्वे दैवार्चने मता।

इति दक्षिणामूर्त्ति संहितायाम्॥

देवाग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता गुरुक्रमैरिति॥

उत्तरा शा मुखे देवि पूर्वा शैवेन संशयः॥ ७-११७॥

वायुकोणं तदाग्नेयं ईशानं राक्षसं भवेत्।

(द)दक्षिणाभिमुखो मन्त्री यदा चक्रसमुद्धरेत्॥ ७-११८॥

८०ब) पूर्वां शैव तदा सादि श्रक्षः कोणं तु वह्निवत्॥

अस्यार्थः॥

विष्णुशिवदुर्गा गणेशसूर्यानां मध्य या इष्टदेवता।

तासां मध्य पूजनीया तद्भिन्नचतुष्टयेमिसादिकोणचतुष्टयषु पूजनीयम्॥

यथा शंभो मध्यगते हरिः सूर्यः गणेशदुर्गा इति पूजनीयाः एवं विष्णुवादिष्वपि वोध्यम्॥

पीठस्योत्तरस्यां गुरुपङ्क्तिस्तु॥

गुरुपरमगुरु परमेष्टिगुरु परापरगुरु पीठशक्तयः॥

आधारशक्त्यादिज्ञानात्मनोन्तः पूज्याः पूर्वादिकेशरेषु मध्य च तत् तत् कल्पोक्तपीठशक्तीः संपूज्याः॥

मध्यपीठमनुं यजेद् इति॥

पूर्वादिदिङ्नियमस्तु पूज्यपूजकयो मध्यप्राचीति कथ्यते वुधैः॥

तद् दक्षिणं दक्षिणं स्याद् उत्तरं चोत्तरं मतम्॥ ७-११९॥

पृष्ठं तु पश्चिमं ज्ञेयं सर्वत्रैवं प्रपूजयेत्।

पूर्णा यागे पूजयेद् इत्यनुवृत्तौ॥

मूलेन मूर्त्तिं संकल्पे इति॥ पूर्वोक्तम्॥

मूर्त्तिसंकल्पे पीठोपरिस्थापयित्वा कल्पद्रुमछायायाः संस्थितां
मूर्त्तिध्यात्वा मूलमुच्चार्या मुकमूर्त्तये नम इति पूजयेत्।

मूलेन मूर्त्तिमिष्ट्वास्यां छायायां कल्पशाखिनामिति वचनात्॥

आवाहनप्रकारस्तु पूर्णायोगे॥

मूराधारे स्फुरद् दीप्तशिखाकारं शिवांस्मरेत्॥ ७-१२०॥

शारदायां च॥

मूलं मन्त्रं समुच्चार्य सुषुम्नां वत्मना सुधीः।

८१अ) आनीयतेजः स्वस्थानान् नासिकारन्ध्रनिर्गतम्॥ ७-१२१॥

करस्थमातृकांभोजे चैतन्यपुष्पचिन्तया संयोज्य ब्रह्मरन्ध्रेन मुत्त्र्या वा माह्येत् सुये।

मातृकांभोज स्वरूपं तु शारदायाम्॥

व्योमेन्दौरसनार्णकर्णिकमित्यादिरूपम्॥

करस्थपुष्पनिचयं विभाव्यमूर्त्त्यामारोपयेत्॥

आवाह्य संस्थापनसंनिधा मातृकांभोजस्वरूपं तु शारदायाम्॥

व्योमन्दौरसनार्णकर्णिकमित्यादिरूपम्॥

करस्थपुष्पनिचयं विभाव्यमूर्त्त्यामारोपयेत्॥

आवाह्य संस्थापनं सन्निधानं सन्निरोधनमनन्तरम्।

सकलीकरणं पश्चाद् विदद्यादवगुण्ठनम्।

अमृतीकरणं कृत्वा कूर्वीतपरमीकृतिम्॥ ७-१२२॥

क्रमादेतानि कुर्वीत् समुद्राभिः समाहितः।

आवाहनादि रूपं सिद्धान्तसारे॥

अत एवाभिपूर्णस्य सत्त्वस्यैवार्चनादिषुः॥ ७-१२३॥

सदेवं समुखीभावं आवाहनमितीरितम्।

शिवस्यावाहितस्यास्य विद्यादेहे त्रे सन्ततम्॥ ७-१२४॥

स्थिरीकरणमुद्दिष्टं स्थापनं भक्तितोर्चने।

पूजां प्रयोज्यमानां तु गृहीत्वानुग्रहादिकम्॥ ७-१२५॥

कर्त्तुं सामर्थ्र्यमस्येह तत् सान्निध्यं प्रचक्ष्यते।

आसमाप्तेस्तु पूजायां सानिध्यं हि शिवस्य येत्॥ ७-१२६॥

सं सनिरोध उदिष्टो विभोरप्यस्य भक्तितः।

आनन्दायतनं तत्त्वं सच्चिनन्दलक्षणम्॥ ७-१२७॥

८१ब) तदत्र सकले व्याप्तं धेयं स्यादवगुण्ठनम्।

अविभिन्नस्वभावानां यदभिन्नं प्रयोजनम्॥ ७-१२८॥

अंगानां अंगिनासार्धं अमृतिकरणं त्विदम्।

क्षमा तस्यापराधारं विज्ञयापरमीकृतिः॥ ७-१२९॥

सोमशंभुनाप्येतदेवोक्तम्॥

एवं स्वरूपमावाहनादिविधेयम्॥

अथोपचारान् कुर्वीत् मन्त्रवित्तन्त्रदेशितान्।

प्रयोजयेद् अर्चनायामुषचारांस्तु षोडश।

आसनं स्वागतं चार्घ्यमिति पूर्वं लिखितम्।

अर्घाद्याः पंचपंचैव गंधाद्या इति भेदतः॥ ७-१३०॥

इति च पूर्वोक्तम्॥

पंचोपचारादौ तांवुरावश्यकत्वव्यवहारास्तु भ्रममूलक एवाद्
उल्लभेष्टपचारेषु यत् तत् कव्यतदाह॥

उपचारेषु सर्वेषु यत् किंचिदुल्लभं भवेत्।

तत् सर्वमनसा ध्यात्वा पुष्पक्षेपेण पूजयेत्॥ ७-१३१॥

तत्र तत्र जलं दद्याद् उपचारान्तरान्तरे।

देवतायाः शिरः कुर्यात् कुसुमोपहितं सदा॥ ७-१३२॥

पूजाकाले देवतायानो परिभ्रामयत् करम्।

इति पूजाप्रदीप॥

पुष्पदाने विशेषमाह॥

पुष्पं वा यदि वा पत्रं नेष्टतावद् अधोमुखम्॥ ७-१३३॥

दुःखदं तत् समाख्यातं यथोत्पन्नं तथार्पणम्।

पुष्पं विसर्जयेद् देवि मुद्रया ज्ञानसंज्ञका॥ ७-१३४॥

अंगुष्ठतर्जनीयोगा ज्ञानमुद्रेयमीर्ति।

तर्पणानि पुनः कुर्या त्रिवारं तत्त्वमुद्रया॥ ७-१३५॥

अंगुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरितो।

८२अ) इति सुन्दरिरहस्य वृत्तौ॥

अधोमुखं फलं नेष्ठं पुष्पांजलिविधौ न तु॥ ७-१३६॥

इति वचनादौ जलिदननिषमो नास्तिः।

उपचारविधिं वक्ष्य दत्वा चाथशुभासनम् (ः)।

स्वागतं कुशरप्रश्नं निगतेदग्रतो गुरो॥ ७-१३७॥

पाद्यं पादांवुजे दद्याद् अवस्य हृदयानुना।

हृदये मनुनानेम इति मन्त्रेण॥

स्वधामन्त्रेण वदमे दद्याद् आचमनीयकम्॥ ७-१३८॥

स्वधामन्त्रः स्वधेतिरूपं॥

अर्घं दिशेत् ततो मूर्ध्नि शिरोमन्त्रनदैशिक।

शिरोमन्त्रः स्वाहेति मन्त्र॥

स्वधानुना ततः कुर्यात् मधुपर्कं मुखांवुजे॥ ७-१३९॥

अनुर्मन्त्रः स्वधानुः वमिति मन्त्र इत्यर्थः।

तेनैव मनुना कुर्याद् अभिचारमनीयकम्।

ते नैव स्वधा मनुनै वा अर्घं दत्वा वा पाद्यं दद्यात्।

तदा हक्कमदीपिकायाम्॥

दत्त्वासनं स्वागतं इत्युदीर्य तथार्घपाद्याचमनीयकानि देयामित्यादि श्रवनादिच्छादिकल्प इति भावः॥

आचमनेयं वारत्रयं देयम्।

तदुक्तं पूर्णायागे॥

स्वधेत्याचमनीयं हि त्रिवारं मुखपंकजे॥ ७-१४०॥

मुकुटोपरि पुष्पं च वौषदित्यर्ययेत् सुधीः।

इति पूर्णायागवचनात्।

वौषडिति पूष्पदानमिति श्रुतेः॥

वस्तुतो वौषट् नम इत्येव मन्त्रः॥

केचित् तु स्वधार्घादिदानश्वपि तथा॥

तदुक्तं पाषांडाङ्कुशे॥

नमः स्वधा च स्वाहा च वौषडिति यथाक्रमम्॥ ७-१४१॥

८२ब) हृत्पुरः सरमुच्चार्य पाद्यादीनि प्रकल्पयेद् इति।

तथा चोर्घो नम इति दानमत्रम् (ः)॥

केचित् तु स्वधामन्त्रेण वचन इति वचने स्वधेति पाठं कल्पयन्ति तच्चिन्त्यम्॥

गन्धादिभिः कारयेत् स्नानं वाससीपरीधापयेत्।

दद्याद् दिव्योपवीतं च हाराद्याभरणैः सह॥ ७-१४२॥

अभ्येर्च्यदेवगंधाद्यैरंगादीन् पूजयेत् ततः।

अंगपूजारेयम्॥ ?

तथा च शारदायाम्॥

धूपादिदानानन्तरुमुक्तम्॥

अंगादिलोकपालान्तमिति परिवारार्चनं चरेद् यावद् इति राघवभट्ट इत्येत्रैकवचन श्रुतेः संख्यायां साधकाभावाद् इति॥

अथावरणपूजा॥

तत्र केशरेष्वग्निकोणादि हृदयानी पूजयेत्।

नेत्रमग्रे दिशास्वस्त्रं ध्यातव्या अंगदेवताः॥ ७-१४३॥

तुषारस्फटिकश्यामनीलस्नारुणार्चिषः।

वरदाभयधारिण्यः प्रधानतनवस्त्रियः॥ ७-१४४॥

एवं च॥

अग्नीशासुरवायूना दीक्षुचत्वार्युपक्रमात्।

इति शंभुवचनं शिवपूजाविषयमिति पूजाप्रदीपः॥

केशरेषु स्थानविशेषानुपदेशकल्पेषु।

उपदेशे तु तन्त्रैवाङ्गपूजा॥

प्रणवादि चतुर्थ्यार्थं अंगानां नम उक्ता नमोन्ते न पूजयेत्।

ॐ हृदयाये नमः॥

ॐ शिरसे स्वाहेति केचित्॥

कश्चित् तु॥

ॐ हाँ हृदयाये नमः॥

ॐ हीँ शिरसे स्वाहा॥

षड्दीर्घभाजावीजेन पूजामाह॥

प्रधानतर च इति॥

८३अ) मुख्यदेवतायाः शरीरभूता इत्यर्थः।

पश्चाद् अभ्यर्च्चनीयाः स्युः कल्पोक्तवृतयः क्रमात्॥ ७-१४५॥

अन्ते यजे लोकपालानमुत्र?पारिषदान्वितान्।

इन्द्रं अग्निं यमं रक्षो वरुणं पवनं विद्रुम्॥ ७-१४६॥

ईशानं पन्नगाधीशं अध-उर्ध्वं पितामहम्।

रक्षो निर्ऋतिं अधो निर्ऋति वरुणयोर्मध्यजात्यधिप इति भावप्रधान निदेशात्
साधिपत्यो पेतानि नित्यर्थो लभ्यते।

तथा सुराधिपतये इन्द्राय नम इति केचित्॥

चन्द्रिकायां च॥

पत्त्राधीश्वरवर्णास्त्र परिवाराङ्गसंगतान्॥ ७-१४७॥

इन्द्रादीनचर्यं दित्युक्तं पत्त्रं वाहनम्॥

कनककपिलनिलश्यामलश्वेतधूम्रामलसितशुचिरक्ता वर्णतो वा सवाद्याः।

कलकमलविराजत् स्वायुधा दिव्यवेशा विविधमणिगणस्त्रक् प्रस्फुरत्
तोरणाद्याम् (ः)॥ ७-१४८॥

एषां वाहनान्याह॥

ऐरावतेस्तथा मेषो महिषः ऐतसंज्ञकः।

मकाराख्या मृगः पश्चाद् उरगोवृषभस्तथा॥ ७-१४९॥

कुर्मो हंसः क्रमाद् एषां वाहनानि विदुर्बुधाः।

क्वचिदनन्तरस्य रथो वाहनमुक्तः स्वरूपमाह।

अथ विकसित किंशुकाभमग्निं छगलगतं सितशक्तियुक्तहस्तम्।

मणिमयमुकुटं यजेत् सुगन्धैः कुसुमवरै धृतवान्सुकुण्डलं च॥ ७-१५०
॥

इति सारसमुच्चय वचनस्थ च्छगलपदस्य च्छगलोमेष इति टीकाकारः॥

एवं स्मृतौ च॥

८३ब) भगन्दरजनकपापप्रायश्चित्तमेषीदाने।

देवानां यो मुखं ह वाहनः सर्वपूजितः।

तस्य त्वं वाहनं पूज्यं देवशेन्द्रैर्महर्षिभिरित्यादि मन्त्रमुक्तवान्।

प्रसिद्धिस्तु वह्नेः॥

च्छगलवाहत्वे नैव पूजामन्त्रमाह।

तथा च पूर्णा यागे॥

इन्द्राय वज्रहस्ताय सुराधिपतये पदम्॥

सवाहनाय पदं पश्चात् सपरिवारायेत्यपि।

नमोनं चैवमन्येषां वाहनादिकमुद्धरेत्॥ ७-१५१॥

अन्येषां अग्न्यादीनां वाहनादीनामित्यादिना
स्वनामास्त्राधिपत्यपरिग्रहसूचितः॥

मन्त्रो यथा॥

इंद्राय वज्रहस्ताय सुराधिपतये सवाहनाय सपिरवाराय नम इति मन्त्रः पूजायाम्॥

एवं अग्न्यादीनामपि मन्त्रो वोधव्यः॥

केचिद् ग्रन्थान्तर स्वरसात् सा युधा येत्यादि प्रकारेणापि योजयन्ति पितादिवर्णायेत्यपि कश्चित्॥

एषां मन्त्राण्याह॥

दम्भोलिशक्त्यभिधदण्डकृपाणपाशं चण्डाङ्कुशाह्वयगदा
त्रिशिखारपद्माः।

अर्च्या वहिर्निजस्वरक्षितमौलियुक्ताः स्वा स्वा युधा
भयसमुद्यतपालिपद्माः॥ ७-१५२॥

दंभोलिर्वज्रः कृपालः खड्गः त्रिशिखा त्रिशूलं एषां यथा संख्येनान्वयः॥

निजस्वलक्षितमौलियुक्तः इति स्वस्वकिरिटनिर्मित स्वस्वनामस्वायुधचिह्न इत्यर्थः॥

सुस्वायुधेति स्वस्वमायुधमित्यर्थः तेन वज्रहस्तेन वज्रमित्यर्थः॥

अथवा॥

इन्द्रस्य हस्ते वज्रमेवायुधमुचयं चेति भावः केषां चिन्मध्यवायुर्ध्वजायुधः॥

८४अ) तदुक्तं पूर्णायोगे॥

वायवध्वजहस्ताय प्राणाधिपतये ततः।

इति पूर्णायागे स्वरजा देवं वदन्ति।

शक्तिगदस्त्रीरूपे॥

अत्रोत्तरे विधुः पूजनीयः क्वचिद् उत्तरदिक् पूज्यः कुवेर् इति श्रवणा।

तस्य वाहनं मनुष्यः॥

अस्त्रं गदेति भावः॥

एवं च धूपदीपदानान्तरनेवावरण पूजा।

अभ्यर्च्य देवं गंधाद्यैरंगादीन् पूजयेत् तत इति शारदा वचनात्॥

आदि पदस्वर सा धूपदीपपरिग्रहः॥

तत्र प *? रमाह।

अगुरुश्रीरगुग्गुल इति च शारदायाम्॥

ग्रन्थान्तरेपि॥

शाराङ्गारैर्घृतविलेपितैर्जर्जरैः
संविकीर्णैर्गुग्गुल्वाद्यैर्घनपरिमलैर्धूपमापाद्य मन्त्री॥

दद्यान् नीचैर्दनुजमथना या परेण। थदोष्मा घण्टां
गंधाक्षतसुकुसुमैरर्चितां वादयानः॥ ७-१५३॥

तत् तद् दीपं सुरभिघृतसंसीक्तकर्पूरवर्त्त्यादिप्तं दृष्ट्या
प्रतिविषद्धीः पद्मपर्यन्तमुच्चैः।

कृत्वा दत्त्वा स्तुतिं अथ विधायार्पयित्वाथ पोद्यं सा चासंकल्पय तु
विपूरस्वर्णपात्रे निवेद्यम्॥ ७-१५४॥

नीचैर्देवस्याधः कृत्वा दानमित्यर्थः अपरेण वामकरेण घण्टां
वादयान इति श्रवणात्॥

धूपदीपदानेपि उद्वासनमावश्यकमित्यर्थः॥

पद्मपर्यन्तं मस्तपद्मपर्यन्तं उच्चैरुच्चैर्दर्शनं द्वीपस्यत्यर्थः
घृते नेत्युपलक्षणं तथा च वृत्त्यां कपूर्रगर्भिण्या सर्पिखा तिलजेन वा॥

आरोप्य दर्शयेद् वीपान् उच्चैर्संस्थाप्य पुरतः प्रोक्षतारेण सुमनो न्यसेद्
इसौरभशालिन इति श्रवणात् तैरस्याप्यभिधानात्॥

८४ब्) नैवेद्य दानमाह॥

नैवेद्यपुरतः कृत्वास्त्रेण प्रोक्ष्य ॐकारेण तदुपरि पुष्पं निक्षिपेत्॥

तथा चोक्तम्॥

संस्थाप्य पुरतः प्रोक्षतारेण सुमनोन्यसदिति॥

प्रतिपत्तिप्रकारमाह॥

वीतिहोत्रे मदयितां तमुच्चरन् मूरमन्त्रमथनिक्षिपेज्जलम्॥

अर्पयेत् तदमृतात्मकं हविर्दोर्युजासुकुसुमं समुद्धरन्॥

निवेदयामि भवते जुषोणे देहविर्हरे॥

नैवेद्यार्पणमन्त्रोयं सर्वासुनिजाख्यया॥

वीतहोत्रदयितेति वीतहोत्रे अग्निः तस्य दयिता स्वाहेत्यर्थः सर्वार्चासु
सर्वदेवार्चासु निजाख्यया तत् तद् देवता नाम्ना तथा च ऊह इति भावः
अमृतोपस्तरणमसि स्वाहेत्या च मयेत् ततः॥

ग्रासमुद्रां वामदोस्णा विकरोत्पलसंनिभाम्।

प्रदर्शद्दक्षिणेन प्राणादीनां च दर्शयेत्॥ ७-१५५॥

प्राणापानव्यानोदानसमानाः क्रमाचतुर्थ्या युक्ता॥

उच्चारणीयाः क्रमशो वह्निजायायुतास्तथा।

पानीयममृती कृत मुद्रया धेनुमुद्रया॥ ७-१५६॥

चुलुकोदकममृतापिधानमसिठद्वयम्।

अनेन देवता हस्ते दत्वा वाथ विचिन्तयेत्॥ ७-१५७॥

आचारात् पुनराचमनीयमपि॥

ततो घृतादिसंदीप्तान् पिष्टिकादिविनिर्मितान्।

पारावतभ्रमाकारानुच्चैर्दीपान् प्रदर्शयेत्॥ ७-१५८॥

आरात्रिकमिदं प्रोक्तं घण्टावादनपूर्वक।

गतसारं तु नैवेद्यं ततश्चैतत् समुद्धरेत्॥ ७-१५९॥

ऐशान्यां तद् भुजे दत्त्वा किंचि स्थानं विशोधयेत्।

८५अ) तद्भुजे देवतोच्छिष्टं भुजे स्थानविशोधनमुच्छिष्टभोजिने दातुम्॥

ते च॥

विष्वक्सेन स्मृतो विष्णोस्तेजश्चण्डो विवस्वतः॥ ७-१६०॥

चण्डेश्वरी तथा शक्तेश्चण्डेशः शंकरस्य च।

त्वं वोदरोगणपतेरमी उच्छिष्टभोजिनः॥ ७-१६१॥

तांवुलकमभिसमर्प्य सुवाद्यगीतनृत्तैः सुतृप्तमभिपूजयतात् पुरे व॥

गन्धादिभिः स्वपरिमथार्घमस्मैदत्वा विधाय कुसुमांजलि मादरेण।

स्तुत्वा प्रणम्य शिरसा चुलुकोदकेन आत्मानमर्पय तु तच्चरणाब्जमूले॥

ततः पूर्वं प्राणबुधिदेहधर्माधिकारनः॥

जाग्रत्स्वप्नसुषुत्यवस्था सुमन सा वाचाकर्मणा हस्ताभ्यां
उदरेणशिश्ना यत् कृतं यदुक्तं यत् स्मृतं तत् सर्वं ब्रह्मार्पणं
भवतु स्वाहा॥

मां मदीयं च सकलं हरये समर्पये॥

पुनः पूजा गन्धादिभिर्दीपान्ते नैव॥

तथा चोक्तमागमकल्पद्रुमे।

चन्दनादिप्रदीपान्तैरुपचारैः पुनर्यजेद् इति शारदायां तु
पंचोपचारैरित्युक्तम्॥

गन्धादयो निवेद्यान्त पूजां पंचोपचारिकेति प्रसन्नार्वेयमाख्याता
सर्वदेव प्रसादिनी॥

यथाशक्ति जपं कृत्वा तं जपं सर्वसंपदे।

दक्षिणे देवहस्ते तु अर्पयेत् पूर्ववत् सुधीः॥ ७-१६२॥

अर्पणमन्त्रस्तु॥

ॐ गुह्याति गुह्यत्यादिरूपः॥

यथाशक्तीति॥

अत्तोष्टरसहस्रं वा अत्तोष्टरशतं वा दश वा॥

तदुक्तं पूर्णापद्धतौ॥

संख्यानुष्टौ शतं साष्टसहस्रं वा जपादिष्विति पुष्पांजलि पुनर्दत्त्वा
साष्टाङ्ग प्रणमेन् मुहुः॥

८५ब्) तथा चोक्तं श्रीविष्णुकल्पलतायाम्॥

दोर्भ्यां च पद्भ्यां मंसाभ्यामिति॥

वाहुभ्यामथ जानुभ्यां च च सा शिरसा वृशा।

पञ्चाङ्गकः प्रणामोयं पूजासु प्रवराविंतौ॥ ७-१६३॥

अष्टाङ्ग उत्तमः प्रोक्तं (ः) पंचाङ्गो मध्यमः स्मृतः।

नदेवं पृष्टतः कृत्वेदि।

भ्रान्त्वा भ्रान्त्वा चतुर्प्पार्श्वं यः कृष्णं प्रणमेन्नरः॥ ७-१६४॥

जुष्टाङ्गप्रणिपातेन मुक्तिस्तस्य करे स्थिताः।

परिवारं गणं सर्वमुपसंहारमुद्रया॥ ७-१६५॥

तेन्मुहुर्तावुपसंहृत्य देवतां प्रीतमानसः।

क्षमस्वेति विसृज्यथमन्त्रेण व्यापकं त्रिशः॥ ७-१६६॥

विधाय देवतां पश्चात् स्वीयहृन्सरसीरुहे।

सुषुमणा वर्त्मना पुष्पमात्र्या?योद्वासयेत् सुधीः॥ ७-१६७॥

एवं च निर्माल्यं शिरसाधार्यम्।

सवाङ्गुले ष्वनुलेपनम्।

नैवेद्यं चोपभुंजीत् दत्त्वा तद् भक्तिशालिने॥

ततो गुरोर्नमस्कारः॥ एवं च॥

देवार्चना वशिष्टं यत् सलिलं शंखमध्यगम्।

अंगे लग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति॥ ७-१६८॥

एतां न्यन्यानि पूजोयां साधना वहुनान्यपि।

उत्तमानि च मध्यानि न्युनानि विविधानि वै॥ ७-१६९॥

स्वस्थः समर्थः कुर्वीते न्यूत्तमैरधसाधनै।

मध्यमामध्यमैरवन्यूना न्यूनैश्च साधनैः॥ ७-१७०॥

आपद्यपि समर्थोपि न्यूनैरेव समाचरेत्।

यथा शक्ति यथा न्यायं यथालोकविगर्हितम्॥ ७-१७१॥

पूजां वितेलतः जतुध्यात्वा सम्यक् प्रपूजयेत्।

आथवा मानसी कुर्याद् आत्मपूजामथापि वा॥ ७-१७२॥

अथवा के*? लां पूजां राद्यां? कुर्याद् विचक्षणम् (ः)।

८६अ) आर्चामात्रे समर्थश्चेद् दद्यादर्चनसाधने॥ ७-१७३॥

सपूज्यं व जपं कुर्यान् नमन्त्रं केवलं जपेद् इति वचनान्यूजा यो आवश्यकत्वमिति पूजाप्रदीपः॥

तच्चिन्त्यम्॥

पूजा तु निर्जने कार्या नकुर्याज्जनसंनिधौ।

कदाचिद् देहहानिस्तु न च व्यक्तिः कदाचन॥ ७-१७४॥

वरं पूजा परित्याज्या न प्रकाश्या कदाचन।

इति कुलचुडामणि विरो च विरोधात्॥

वस्तुतोधिकालिनियन्त्रितमिति ध्येयम्।

अथ दाना च पूजायां मुक्तं यद् विहितं तथा॥ ७-१७५॥

निषिद्धं चापि तत् सर्वं मुच्यते ग्रन्थवर्यके।

तदुक्तं यामले॥

नाक्षतैरर्चयेद् विष्णुं नलस्या विनायकम्॥ ७-१७६॥

नदूर्वपार्चयेद् दुर्गां विल्वपत्त्रैर्दिवाकरम्।

उत्तन्मर्कपुष्पं च विष्णोर्वर्ज्यं सदाबुधैः॥ ७-१७७॥

एवं च॥

गंधपुष्पाक्षतयवकुशाग्रतिलसर्षपैः॥ ७-१७८॥

सामान्यः सर्वदेवानां मर्घोयं परिकीर्तितः।

इत्यादि प्राप्तस्याक्षतदानस्य ननिषेधकमिटम्॥

किंतु॥

पुष्पा भावे जलेनापि दुर्वया तन्दूलेन च॥ ७-१७९॥

नित्यं पूजा प्रकर्त्तव्या भक्तिभावेन दैसिकैः।

इत्यादिना पुष्पाद्य भावातिदेश प्राप्तस्य केवलं तंडुलदानस्य निषेधकमिति भावः॥

गौतमीयः॥

नरक्तं जातु गृह्णीयद् चन्दनं रक्तपुष्पकम्॥ ७-१८०॥

विल्वपत्त्रैः प्रसूनैर्वा नार्चयेद् देवकीसुतम्।

ग्रन्थान्तरे॥

देवीनां चाकर्मदालमादित्येतगनं तथा॥ ७-१८१॥

गणेशाये च सूर्याये रक्तपुष्पमति प्रियम्।

निषिद्धान्याह॥

८६ब्) शिवे कुन्दं मदन्तीं च यूथीं वन्धुककेतकी॥ ७-१८२॥

जपां रक्तां त्रिसंध्ये च मारतीं रक्तचन्दनम्।

रक्तवर्णं हयारिं च वर्वरां परिवर्जयेत्॥ ७-१८३॥

तथा॥

शुष्कैस्तु नार्चयेद्विष्णु पत्रैः पुष्पैः फलैरपि।

स्नात्वा नीतैः पर्युषितै याचितैः कृष्णवर्णकैः॥ ७-१८४॥

स्नात्वा नीतैर्मध्याह्न स्थानां तस्मानीतै विति संप्रदायः।

स्वयं विकसितं पुष्पं स्वयं च पतितं भुवि।

वर्जयेद्बृहती पुष्पसगंधं च विसेषतः॥ ७-१८५॥

स्वयं विकसितं स्वयं हस्तेन विकासितमित्यर्थः॥

तथा॥

कालिकादौ तथा त्याज्यं विना चंपकपद्मकैः।

तथा॥

त्रिपत्रान् पूनकुसुमै * *? येत्र कदाचन॥ ७-१८६॥

भूगतं चाङ्गसंस्पृष्टं केशकीटादिदूषितम्।

कुमुदं पाटलं चैव शिरेषं परिवर्जयेत्॥ ७-१८७॥

भूगतं वजयेत् पुष्पं शोफालिं वकुलं विना।

छिन्नभिन्नदोषाभावमाह॥

विल्वस्य खदिरस्यैव तथा धात्रीदलस्य च॥ ७-१८८॥

तमालस्य च पत्रस्य छिन्नभिन्नेनदुष्पति।

तथा नक्षत्रविद्यादौ वृहन्मत्स्यसुक्ते॥ ७-१८९॥

पुष्पं श्रेष्ठं रक्तकोकं वंधुकं सतपत्रकम्।

वर्वरा द्वितयं चैव कर्णिकारद्धयं तथा॥ ७-१९०॥

वकमंदारचुतानि करविरानिशस्यते।

मल्लिकात्रितयं जाती क्षौमपुष्पं जयतिका॥ ७-१९१॥

विल्वपुष्पं कुरवकं मुनिपुष्पं च केसरम्।

वसन्ती द्वितयं चैव काशपुष्पं मरुवकम्॥ ७-१९२॥

दमनं च लवंगं च पुथीं शेफालिकां तथा।

स्वगंधिश्वेतलौहित्यैः कुसुमैरर्चयेद् दलैः॥ ७-१९३॥

तथा॥

देवी पूजा सदा कार्यो जलजैः स्थलजैरपि।

८७अ) विहितैरहितैर्वापि भक्तियुक्तेन चेतसा॥ ७-१९४॥

राघवभट्टोपि॥

सर्वैः पुष्पैः सदा पूजां विहिताविहितैरपि।

कर्त्तव्या सर्वदेवाना भक्तियोगोत्रकारणमिति॥ ७-१९५॥

तथा चोक्तं भविष्ये॥

अलाभेन तु पुष्पाणां इत्यादि भक्त्या संपूजितो भेवेतिति यावत्।

एतद् वचनद्वयं अभावेत्यन्तभक्तिविषयम्॥

कालीतन्त्रे॥

अपामार्गैस्तु भृंगैस्तु सुगधैः श्वेतलोहितैरिति अन्यच्च ग्रन्थगौरवभयान्

नलिखितमिति संक्षेपः।

इत्यागमकल्पलतायां सप्तमः पटलः॥ ७॥

अथ संक्षेपतः सर्वदेवानां नित्यपूजा॥

तदुक्तं यामले॥

आदावृष्योदिभिर्न्यासः करशुद्धिस्ततः परम्।

अंगादि व्यापकन्यासौ हृदादिन्यास एव च॥ ८-१॥

तालत्रयं च दिग्वन्धः प्राणायामस्ततः परम्।

ध्यानं पूजाजपश्चेति सर्वतन्त्रे ष्वयं क्रमः॥ ८-२॥

पूजा तु मूलदेवता एव॥

अथ पूजोपयुक्ता स नमुद्वद्रालक्षणानि च।

जानुर्वोरन्तरे कृत्वा सम्यक् पादतले उभे।

ऋजुकायो विशेद्योगी स्वस्तकं तदुदीरितम्॥ ८-३॥

वामारूपरिदक्षिणं च चरणं संस्थाप्य वामं पुनर्

दक्षोरूपरिप्रपश्चिमेन विधिना धृत्वा कराभ्यां दृटम्।

अङ्गुष्ठे हृदये निधाय चिवुकं णासाग्रमालोकयेद्

एतद् व्याधिविघातकारियमिनां पद्मासनं प्रोच्यते॥ ८-४॥

अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः।

याभिर्विरचिताभिस्तु मोदं ते सर्वदेवताः॥ ८-५॥

८७ब) दक्षिणाङ्गुष्ठतर्जन्या वग्रलग्ने पराङ्गुली।

प्रसार्य संहतोत्ताना एष व्याख्यान मुद्रिका॥ ८-६॥

दक्षाङ्गुष्ठक्षिप्ता * * * * हस्तद्वयेन तु।

सावका शामेकमुष्टिं कुर्यात् सा कुंभमुद्रिका॥ ८-७॥

अधोङ्गुष्ठा खलुतुष्टिः शिखायां करद्वन्द्वांगुरयोवर्मणिस्युः।

नाना च मुक्ष्याद्गतवाहु युग्मकङ्गुष्ठतर्जन्युदितोध्वनिश्च॥ ८-८॥

विष्वग्विभक्तः कथितास्तु मुद्रा यत्राक्षिणी तर्जनिमध्यमेस्तः।

नेत्रद्वयत्रभवेदनामा षडंगमुद्रोः कथिता यथावत्॥ ८-९॥

अंगुल्या ध्यानमुद्रा स्या वासुदेवाभिधा च सा।

कनिष्ठांगुष्ठकौसक्तौ करयोरिति चेतरम्॥ ८-१०॥

तर्ज्जनीमध्यमानामा संहिता भुग्नवर्जिता।

मुद्रैषागालिनी प्रोक्ता शंखस्योपर्चारितेति॥ ८-११॥

शंखस्योपरिवारिता सतीगारिण्याख्यां लभत इत्यर्थः॥

ऋज्वी च मध्यमां कृत्वा तर्जनी मध्यपर्वणि।

संयोज्या कुंचयेत् किंचिन् मुद्रैषाङ्कुशसंज्ञिता॥ ८-१२॥

वामाङ्गुष्ठं तु वध्नीयाद् दक्षिणेन तु मुष्ठिना।

कृत्तोत्तानां ततो मुष्टिमंगुष्ठं तु प्रसादयेत्॥ ८-१३॥

वामाङ्गुल्य तथा श्लिष्ठोः (संयुक्ताः सुप्रसारिता) मुद्रैषा शंखसंज्ञका।

मिथः कनिष्ठके वद्धा तर्ज्जभ्यामनामिके॥ ८-१४॥

अनामिकोर्ध्वसंश्लिष्ट दीर्घमध्यमयोरधः।

अंगुष्ठाग्रद्वयं न्यस्य योनिमुद्रयमीरिता॥ ८-१५॥

अन्योन्याभिमुखाश्लिष्ट कनिष्ठानामिके पुनः।

तथैव तर्जनीमध्या धेनुमुद्रासमीरिता॥ ८-१६॥

८८अ) अधोमुखे दक्षहस्ते तादृशं वामहस्तकम्।

धारयेन् मत्स्यमुद्रेय मर्चनेष्ठा परेमता॥ ८-१७॥

आवाहने समाख्याता मुद्रादैशिकसत्तमैरिति वचनात्॥

अधोमुखी त्वयं चेत् स्यात् थापिणीमुद्रिका भवेत्।

उत्सृतांगुष्ठमुज्योस्तु संयोगात् संनिधायनी॥ ८-१८॥

अतः प्रवेशिताङ्गुष्ठा सैवसंरोधिनी मता।

उत्तानमुष्टियुगला सन्मुखीकरणी मता॥ ८-१९॥

देवताङ्गे षडंगानां न्यासः स्यात् सकलीकृतिः।

तथा च॥

षडंगमुद्रैव सकरीकरणमुद्रेति ताभ्यजेत्।

अन्यथा मुद्राप्रकरणे तत् स्वरूपाभिधानमर्थातरं स्यात्॥

सव्यहस्तकृता मुष्टि दीर्घाधोमुखतर्जनी॥ ८-२०॥

अवगुंठनमुद्रेयं अभितोभ्रामितासती।

अन्योन्याभिमुखेत्यादिना धेनुमुद्रा उक्ता॥ ८-२१॥

अमृतीकरणं कुर्यात् तथा साधकसत्तमः।

अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुलिः॥ ८-२२॥

महामुद्रेयमुदिता परमीकरणे वुधैः।

प्रयोजयेे हि मां मुद्रां देवताह्लानकर्मणि॥ ८-२३॥

अधः कृतादक्षहस्तः प्रसृतोवरमुद्रिका।

उर्ध्वी कृतो वामहस्तः प्रसृतोभयमुद्रिका॥ ८-२४॥

हस्तौ तु सन्मुखो कृत्वा संनम्रौ सुप्रसारितौ।

कनिष्ठाङ्गुष्ठकौ सक्तौ मुद्रैखाचक्रसंज्ञका॥ ८-२५॥

स्पृशे कनिष्ठोपकनिष्ठके द्वे स्वाङ्गुष्ठमुर्धा प्रथमेहमुद्रा।

८८ब्) तथा परातर्जनिमध्यमेस्यादनामिका मध्यमिके च मध्या॥ ८-२६॥

आनामिका तर्जनिमध्यमास्यास्तद्वच्चतुर्थी सकनिष्ठकास्ताः।

स्यात् पंचमीमध्यमतः प्रदिष्ठा प्राणादि मुद्रानिजमन्त्रयुक्ता॥ ८-२७॥

अधोमुखे वामहस्तमूर्ध्वांस्य दक्षहस्तकम्।

क्षिप्ताङ्गुलीरंगुलीभिः संग्रथ्यपरिवर्जयेत्॥ ८-२८॥

एषा संहारमुद्रास्याद् विसर्जनविधौमता।

वक्ष्ये हमुपचाराणा मुद्रामन्त्रेषु देशिताः॥ ८-२९॥

प्रसारयेद् उभौहस्तौ विद्वेष विनियोजितौ।

अगुल्योविस्तृतः कार्या मध्येङ्गुष्ठौ तु विन्यसेत्॥ ८-३०॥

देवस्यासनविन्यासे पद्ममुद्रां प्रदर्शयेत्।

एषन्नम्राङ्गुलिदक्षां संयोज्याङ्गुष्ठकं वरम्॥ ८-३१॥

स्वागतस्वस्तिकामुद्रा मध्यमूलगताङ्गुलिः।

उपचारे स्वागते तु प्रयोक्तव्याविपश्चिता॥ ८-३२॥

स्वस्तिमुद्राद्विहस्तौ तु मुद्रा दीर्घस्य कीर्तिता।

तौ च प्रसारितौ पाद्य मुद्रा प्रकीर्त्तिता॥ ८-३३॥

देशिनी मूलशाङ्गुष्ठा दक्षिणायकनीयसि।

प्रसार्यामध्यमास्ति स्त्रोमुद्रा वामे प्रकीर्तिता॥ ८-३४॥

संयुक्ता नामिकाङ्गुष्ठौ तिस्त्रोन्याः सप्रसारिताः।

मधुपर्क तु सा मुद्रा संकल्प्ये कलसं करे॥ ८-३५॥

कृत्वा मुष्टिं तथा स्नाने मध्यमाङ्गुष्ठकौमतौ।

अन्याः प्रसारितास्तिस्त्रो मुद्राः वश्यकीर्त्तिता॥ ८-३६॥

कनिष्ठाङ्गुष्ठकौलग्नौ तिस्त्रोप्यन्याः प्रसारिता।

यज्ञोपवीतमुद्रेयं कथिता मन्त्रपारगैः॥ ८-३७॥

मधुपर्क्का समुत्ताना मुद्रालंकरणी मता।

मुक्तानिर्नामिकामुष्टि गंधमुद्रेति कीर्त्तिता॥ ८-३८॥

८९अ) उत्थिताधोमुखी मध्या वर्द्धाङ्गुष्ठायदीरिता।

पुष्पमुद्रा तथाख्या पुष्पदाने विवर्द्धिनी॥ ८-३९॥

अंगुष्ठतर्ज्जनीलग्ना तिस्त्राः संकुचिताः परः।

मुद्राधूपप्रदानस्याद् देवानां तुष्टिकारिणी॥ ८-४०॥

उत्ताना पौष्पिकीमुद्रा देवमुद्रेति गीयते।

पंचाङ्गुल्यग्रसंयुक्ता प्रोत्थितोर्ध्वमुखी यदि॥ ८-४१॥

त्रिधा निवद्धा मुद्रेयं नैवेद्यस्य प्रकीर्त्तिता।

मध्यमानामिकाङ्गुष्ठः संरग्नाग्रा अधोमुखाः॥ ८-४२॥

अन्याः प्रसारिताङ्गुल्यो गोमुखी सा प्रकीर्त्तिता।

त्यक्तप्रदेशिनी मुक्तिंष्टिः सूचीमुद्रेति कीर्त्तिता॥ ८-४३॥

रक्षामुद्रेति शैवोक्ता समन्ताग्रमनं यदि।

द्वौकरौ पृष्टसंरग्नौ भ्रामयेद्ग्रथिताङ्गुली॥ ८-४४॥

छोतिकेति समाख्याता प्रणामेतां प्रदर्शयेत्।

देशिन्यंगुष्ठयोर्मध्य दत्त्वाङ्गुलिचतुष्टयम्॥ ८-४५॥

विधायसंपुटीकृत्य लग्नाङ्गुष्ठौ समुत्सृतौ।

कुंभमुद्रे दशीसस्य हृल्लेखाकच्छपीमता॥ ८-४६॥

प्रसार्यदक्षिणं हस्तं कनिष्ठाद्यग्रिमाङ्गुलीः।

क्रमादोकुंचयेदीर्घमुद्रां * * रिति मते॥ ८-४७॥

मिथः पृष्ठार्पितौ हस्ता वन्योन्यग्रथिताङ्गुली।

कृत्वा वद्धा परावृत्य नत्वा सास्यात् क्षमापिणी॥ ८-४८॥

इत्यागमकल्पतोयां अष्टमः पटलः॥ ८॥

पुरश्चर्यां प्रवक्ष्यामि मन्त्रीणां सिद्धिदायिनीम्।

यस्य विज्ञानमात्रेण सर्वसिद्धिश्वरोभवेत्॥ ९-१॥

८९ब) पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः।

किं होमैः किंजपश्चैव किं मन्त्रं न्यासविस्तरैः॥ ९-२॥

रहस्यानां च मन्त्राणां यदिनस्यात् पुरस्क्रिया।

पुरस्क्रिया हि मन्त्राणां प्रधानं जीवमुच्यते॥ ९-३॥

जीवहीनो यथा देहि सर्वकर्मविवर्जितः।

पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्तितः॥ ९-४॥

तस्मादादौ पुरश्चर्यां कृत्वा साधकसत्तमः।

प्रयोगं तु ततः कुर्यात् सर्वसाधकदुर्लभम्॥ ९-५॥

लब्ध्वा तु सद्गुरोर्विद्यां पुरश्चर्यां समाचरेत्।

तथा च तारारहस्य वृत्तौ॥

मन्त्रं नीत्वा गुरोः पार्श्वे गुरुभक्तिपरायणः (म्)॥ ९-६॥

मन्त्रं श्रोत्रस्य हृन्नेत्र प्राणा विज्ञाय तत्त्वतः।

यत्नाच्च कीलकं ज्ञात्वा कुर्यान्मन्त्रपुरस्क्रियाम्॥ ९-७॥

मन्त्राणां प्रणवः श्रोत्रं मुखं रेफः प्रकीर्त्तितम्।

स्वराश्च चक्षुषी ज्ञेया मन्त्रविद्भिरनन्तरम्॥ ९-८॥

अतिरिक्ताश्च ये वर्णा हृदयं परिकिर्त्तीतम्।

तथा च॥

जपहोमतर्पणाभिषेक ब्रह्मणभोजनम्॥ ९-९॥

पंचाङ्गोपासनं लोके पुरश्चरणमिष्यते।

यत्र जपहोमादौ संख्यानोक्ता तत्राष्टसहस्रसंख्या स्यात्॥

तदुक्तं वाराहेतन्त्रे॥

येषां जपे च होमे च संख्या नोक्ता मनीषिभिः॥ ९-१०॥

तेषां अष्टसहस्राणि संख्या स्याज्जपहोमयोः।

सहस्रमष्टौ जुगुयाल्लक्षजापे प्रकीर्त्तयेद् इत्युत्तरदले पाठः।

यस्मिंश्च निगमे चैव मन्त्रसंख्या विधियते॥ ९-११॥

तत्र सर्वत्रमन्त्राणां संख्या वृद्धि युगक्रमात्।

९०अ) कल्पोक्तै व कृते संख्या त्रेतायां द्विगुणं भवेत्॥ ९-१२॥

द्वापरे त्रिगुणा संख्या कलौसंख्या चतुगुणा।

तदुक्तं पूर्णापर्द्धतौ॥

संख्व्यानुक्तौ शतं साष्टं सहस्त्रं वा दशापिवेत्॥ ९-१३॥

जपस्थानान्याह॥

तदुक्तं योगिनीहृदय॥

पुण्यक्षत्रं नदीतीरं गुहापर्वतमस्तकम्।

तीर्थः प्रदेशः सिन्धुना संगमः पावनं वनम्॥ ९-१४॥

उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः।

तुलशीकाननं गोष्ठं वृषं शून्याशिवालयः॥ ९-१५॥

अश्वत्थामलकीमूलं गोशालाजलमध्यतः।

देवतायतनं कुलं समुद्रस्य निजं गृहम्॥ ९-१६॥

गुरुणां सन्निधानं च वित्तैकाग्रस्थलं तथा।

प्रेतभुम्यादिकं चैव तत् तत् कल्पप्रदर्शितम्॥ ९-१७॥

दीपस्थानं समाश्रित्य कृतं कर्मशुभावहम्।

चतुरस्त्रं भुवं कृत्वा कोष्ठानां नरकं लिखे॥ ९-१८॥

पूर्वादिकोष्ठे विलिखेत् सप्तवर्णाननुक्रमात्।

लक्ष्मीशे स्वरान्युग्म क्रमाच्चैव लिखेत् तत॥ ९-१९॥

दिक्षुपर्वादितो यत्र क्षत्राक्षाद्यन्तरं स्थितम्।

मूरवं तस्य तु जानीयाद् धस्तावुभयतः स्थितौ॥ ९-२०॥

कोष्ठे कुक्षे उभेयादो द्वेशिष्ठे पुच्छमीरितम्।

क्रमेणानेन विभजे मध्यस्थमपि साधके॥ ९-२१॥

मुरवस्थोलभते सिद्धिं करस्थः स्वल्पजीवनः।

तदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात्॥ ९-२२॥

पुच्छस्थः पीड्यते मन्त्री वंधनोच्चाटनादिभिः।

कूर्मचक्रमिदं प्रोक्तं मन्त्राणां सिद्धिसाधकम्॥ ९-२३॥

९०ब्) अट्टाटकेशक्तिपीठे तीथक्षेत्रेषु वा पुनः।

अरण्यपर्वते पुण्य कूर्मचक्रं न चिन्तयेत्॥ ९-२४॥

अज्ञातानामवास्तौ च तत्र नाम प्रकल्पयेत्।

सप्तवर्गे॥

क च ट तपाः पंचवर्गाः य ल र व श ष सहेति द्वौवर्गौ एवं सप्तवर्गा भवन्ति लक्षमिति स्वरूपं ईशे ऐशान्यां दिशि लिखेद् इत्यर्थः॥

मध्यमध्यकोष्ठमपि नवधा कृत्वाष्टसुकोष्ठेषु अकारादि द्वौ द्वौ स्वरौ लिखेत्।

मध्यमूलमन्त्रं लिखेत्॥

अथवान्यप्रकारेण पुरश्चरणमिष्यते॥ ९-२५॥

तदुक्तं वीरतन्त्रे॥

अष्टम्यां च चतुर्दशपक्षयोरुभयोरपि।

कृष्णपक्षे विशेषेण साधयेद् वीरसाधनम्॥ ९-२६॥

तत् सार्धप्रहरे यामे गते च सुरसुन्दरि।

शवं वाथ चितां वापि॥

नीत्वा यथा सुखम्॥

साधयेच्च हितं मन्त्री मन्त्रध्यानपरायण॥ ९-२७॥

भयं चैव न कर्त्तव्यं हास्यं तत्र विपर्ययेत्।

चतुर्द्दिशं ननीरीक्षे मन्त्रमेतत् समभ्यसेत्॥ ९-२८॥

पूजाद्रव्यं प्रवक्ष्यामि नानातन्त्रानुसारतः।

समिषान्नंगुडं स्थागं मधूपायसपिष्टकम्॥ ९-२९॥

नानापुष्पं च नैवेद्यं स्वस्वकल्पोक्तसाधितम्।

चितास्थानं समानीय वंधुभिः शस्त्रपाणिभिः॥ ९-३०॥

समानशीलसपन्नैः साधकोनिर्भयः शुचिः।

तथा च योगिनी हृदये॥

वल्यर्थं सामिषान्नं च गुडछागं तथा मधु॥ ९-३१॥

पिष्टकं पलमान्नं च पयोमूलफलं तथा।

९१अ) सप्तरात्रं वलिं दत्त्वा चतुःपात्रं चतुर्दिशि॥ ९-३२॥

पात्रत्रयं सदासव्ये स्थापयेन् मनुना सदा।

स्वगुरुं भ्रातृवर्गं वा ब्राह्मणान् वापि सुव्रतान्॥ ९-३३॥

सुहृदानपि चक्षार्थं कियद्दुरेनिवेशयेत्।

चिता या लक्षणं वक्ष्ये सर्वसिद्धिप्रदायकम्॥ ९-३४॥

तदुक्तं यामले॥

असंस्कृता चिताग्राह्या न तु संस्कारसस्कृतति।

साधका तु प्रवक्ष्यामि पूर्वोक्तं भैरवेन तु॥ ९-३५॥

महासाहसिकश्चैव महावलपराक्रमः।

दयालुः स्वच्छहृदयः सर्वप्राणिहितेरत॥ ९-३६॥

एवं विधिगुणोपेतः कुर्याच्च चितिसाधनम्।

संकल्पं प्रथमं कुर्यात् स्वस्तिवाचनपूर्वकम्॥ ९-३७॥

सामान्यार्घं विधायैव ततः पूजां समारभेत्।

वस्त्रालंकारभूषाद्यै भूषितः पूर्वदिङ्मुखः॥ ९-३८॥

संकल्पो यथा॥

ॐ अद्यत्यादि। अमुकगोत्रः श्री-अमुकशर्माण्मसानशाधनमहं करिष्य इति संकल्पे अस्त्रांन्तमूलं मन्त्रेण यागभूमिं च शोधयेत्॥

मूलमन्त्रेण फङ्कारान्तेन॥

ध्यात्वा गुरुं पादपद्मं गणेशं वटुकं तथा।

योगिनी मातृकां चैव क्षत्रपालं तथैव च॥ ९-३९॥

संपूज्य वं गृहं गच्छेद् वामपाद पुरः सरम्।

अस्त्रमन्त्रेण मन्त्रज्ञो नक्षामात्मनि कारयेत्॥ ९-४०॥

वक्ष्यमाणेन मन्त्रेण पुष्पाञ्जलित्रयं क्षिपेत्।

मन्त्रोयथा॥

उक्तं वीरतन्त्रे॥

ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः॥ ९-४१॥

९१ब) पिशाचा सिद्धयोयक्षा गंधर्वास्सरसांगणा।

योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रिया॥ ९-४२॥

सिद्धिदा स्नाभवन्त्वड तथा च मलरक्षकाः।

प्रणम्यमनुनानेन पुष्पाञ्जलित्रयं क्षिपेत्॥ ९-४३॥

मसानाधिपतिं पश्चा भैरवं कालभैरवम्।

महाकालं यजेद् यत्नात् पूर्वादिक् चतुष्टये॥ ९-४४॥

पाद्यादिभिश्च संपूज्य वलिं पश्चान् न वेदयेत्।

वलिदानमाह॥

यथा॥

पूर्वे श्मसानाधिपतिं पंचोपचारैः संपूज्य॥ ९-४५॥

अणेन वलिं दद्यात्॥ यथा॥

ॐ हुँ श्मसानाधिप इमं सामिखान्नं हुं महावलिं गृह्ण २ गृह्णा पय
२ विघ्ननिवारणं कुरु सिद्धिं मम प्रयच्छ स्वाहा॥

ततो दक्षिणस्यां पूर्वभैरव संपूज्य

ॐ हुं भैरव भयानक श्मसानाधिपं इमं पूर्ववत्॥

ततः पश्चिमायां एवमुत्तरे पाद्यादिभिमहाकालं इमं वलिं दद्यात्।

चितामध्यवलिं दद्याद् वलित्रयमनुत्तमम्।

कालरात्रि महारात्रि कालिके घोरनिः स्वने॥ ९-४६॥

गृहाणे मं वलिं मात देही साध्यमनुत्तमम्।

ॐ हुं भूतनाथ श्मसानाधिप॥

इमं मन्त्रः॥

ॐ हुं शब्दान्ते सर्वगणनाथा ते चाधिपाये।

श्मसानमस्तके दत्त्वा पूर्ववच्च समुद्धरेत्॥ ९-४७॥

ताराद्यन वलिं दत्त्वा पंचगव्येन सुन्दरि।

अभिः संप्रोक्षणं कृत्वा पीतवस्त्रलिखेत् ततः॥ ९-४८॥

९२अ) भूर्जे वा वटपत्त्रे वा तत्र पीठमनुं ततः।

पीठमास्तीर्य तस्मिन् वै वद्धवीरासनं तत॥ ९-४९॥

विरानेन देवेशि रक्षां दिक्ष्व प्रकल्पयेत्।

अस्यार्थः॥

पीतवस्त्रादौ तत् तत् कल्पोक्त पीठमन्त्रं लिखित्वा तदुपरि व्याघ्रचर्माद्यासनमास्तीर्ये तदुपरि वीरासनक्रमेणैव विद्या विरान्दनमन्त्रेण चतुर्दिक्षुरक्षां कुर्यात्॥

वीरान्दनमन्त्रस्तु॥

हुँ हुँ ह्रीँ ह्रीँ कालीके घोरदंष्ट्रे प्रचंडनायिके दारय २ हन २ अस्मिन्
महाविघ्नं च्छेदय २ स्वाहा फट्॥

अनेन मन्त्रितं लोष्ठं दशदिक्षु विनिक्षिपेत्॥ ९-५०॥

यदि वा साधको भयविह्वलो भवति तदा सर्वैः सुहृद्वार्गैः परिरक्षणीयः
ततस्तु तत् तत् कल्पोक्त भूतशुद्ध्यादि न्यांसजालं समाप्येष्ट देवतां
संपूज्य संकल्पं कृत्वा इष्टदेवतां ध्यायेन् मन्त्रं जपेत्॥

संकल्पस्तु॥

अद्यत्याद्यमुकगोत्रामुकशर्मामुकमन्त्रस्य सिद्धिकामः अमुकमन्त्रस्य तत्
संख्यं जपमहं करिष्ये इति संकल्प्य जपेत्॥

एकारक्षस्य मन्त्रस्य दिक् सहस्त्रं जपं चरेत्।

द्यक्षरे अयुतार्धं च त्र्यक्षरेष्टसहस्त्रकम्॥ ९-५१॥

अतः परं तु मन्त्राणां गजाष्टकसहस्त्रकम्।

गजोष्टसंख्याकेः अष्टोत्तरसहस्त्रमित्यर्थः॥ ९-५२॥

यद्य सज्यभ्यं कर्णे नेत्रे वस्त्रेण वद्धयत।

ततोर्घरात्रपर्यन्त्रं यदिर्किंचिन् नद्दश्यते॥ ९-५३॥

जयदुर्गाख्यमनुना सर्षपान् दिक्षु निक्षिपेत्।

ॐ दुर्गे २ रक्षिणि स्वाहा॥

ॐ तिलोसि सोमदैवत्यो इति॥

९२ब) पिड्डणां सुखदातात्वं मर्त्याणां ममरक्षकः॥ ९-५४॥

भूतप्रेतपिशाचानां विघ्नेशान्तिकारकः।

इति मन्त्रं समुच्चार्य तिलान्दिक्षुविनिक्षिपेत्॥ ९-५५॥

इशानादिचतुर्दिक्ष्विति शेषः॥

ततः सप्तपदं गत्वा पुनस्तत्रे वसं विशेत्।

पुनः स्वेष्टदेवतां ध्यात्वा संपूज्य पुनर्जपेत्॥ ९-५६॥

यद्यागत्य वरं गृह्ण इति वाक्यमुदीरयेत्।

ददतां कामयत् सत्यं मन्त्री जपपरायणम् (ः)॥ ९-५७॥

ततः सत्यं कारयित्वा वरयेद्वरमुत्तमम्।

जपादौ वलिमाहृत्यं जपान्ते च वलिं हरेत्॥ ९-५८॥

तथा चोक्तं योगिनिहृदये॥

जपान्ते च वलि दद्याद् देवतायै यथाविधि।

माहिषं च्छागलं वापि गृहीत्वा वरमेव च॥ ९-५९॥

जपान्ते जपमध्ये वां वलिं देहीति भाष्यते।

पिष्टके न वलिं दद्यान् माहिषं च्छागमेव वा॥ ९-६०॥

वलिं च यवपिष्टके निर्मितं ध्यान्वोद्भवं वा वलिं दद्यात्॥

पुनर्यद्विनरं देहि कुंजरं देहि या च ते।

दिनान्तरे प्रदास्यामि प्रतिष्ठां श्रावयेत् ततः॥ ९-६१॥

प्रतिज्ञां * * संगृह्य गृहं गच्छेद् यथा सुखम्।

अपरेह्नि ततो दद्या पिष्टेन नरकुंजरम्॥ ९-६२॥

तथा चोक्तं कालिकापुराणे॥

यवक्षोदमयं वापि शालिक्षोदमयं च वा।

चन्द्रहासे न विधिवत् तत् तन् मन्त्रेण घातयेत्॥ ९-६३॥

चन्द्रहासेन खड्गेन॥

समाप्य साधनं देवि दक्षिणां विभवावधि गुरुवे गुरुपुत्राय तत् पत्न्यै वा निवेदयेत्॥

परेह्नि नित्यक्रियां कृत्वा पंचगव्यं पीत्वा पिष्ठकनिर्मित वलिं दद्याद् अनेन॥

येषां यजमानोहन्ते गृह्णन्तु इमं वलिम्।

९३अ) इति वलिं दत्त्वा पंचविंशब्राह्मणान् भोजयेत्॥

तथा च योगिनीतन्त्रे॥

परेह्नि नित्यमाचर्य पंचगव्यं पिवेत् ततः।

ब्राह्मणान् भोजयेत् तत्र पंचविंशतिसंख्यकान्॥ ९-६४॥

पंचसप्तविहीनाम्वा क्रमेणैवदशावधि।

भुक्त्वा च वान्धवैः सार्धं निवसेद् उत्तमस्थले॥ ९-६५॥

यदिनस्याद् विप्रभोज्यं गदानिर्धनतां व्रजेत्।

तेन चे निर्धनत्वं स्यात् तदा देवि प्रकुप्यति॥ ९-६६॥

त्रिवारं वा तु षड्रात्रं नवरात्रं तु गोपयेत्।

स्त्रीशर्म्या यदि गच्छे तु तदा व्याधिं विनिर्दिशेत्॥ ९-६७॥

गीतं श्रुत्वा तु वधिरो निश्चक्षु नृत्यदर्शनात्।

यदि वक्ति दिने वाज्यं तदास्य मुकता भवेत्॥ ९-६८॥

त्रिपंचदिवसं यावद् देहे देवस्य संस्थिति।

नस्वीकुर्याङ्गन्धपुष्पं वहियाति यदा तदा॥ ९-६९॥

तदा वस्त्रं परित्यज्य धौतवस्त्रं च धारयेत्।

तथा कल्पागमद्रुमे॥

अथ वक्ष्यामि संक्षेपाद् वीरसाधनमुत्तमम्॥ ९-७०॥

कृतेन दिवसे केन सिद्धिं विन्दतिमानवः।

यष्टि प्रभृत्यस्त्रभिन्नं शूलविद्धं ययोमृतम्॥ ९-७१॥

शवमानीयकर्त्तव्यं नग्राह्यं स्वेच्छयामृतम्।

रात्रौ प्रथमयामार्धे तत्र गच्छेत् संहिताः॥ ९-७२॥

पंचोपचार सासंग्री ससुरां तत्र संहरेत्।

गुडार्द्रकरसैनैव सुरात्रब्राह्मणस्य च॥ ९-७३॥

शौडीने याक्षन्त्रियेण माध्वी वैश्येन तत्र तु।

कदलीमधुसंमिश्र शानत्वस्वरसैः सुरा॥ ९-७४॥

शूद्रेणात्र प्रदातव्या दातव्यं नैव संस्पृशेत्।

माषभक्तं च वल्यर्थमिति पूर्वोक्तम्।

९३ब) ॐ आधारशक्त्यै नम इत्युच्चार्यासने समुपवेशयेत्।

भूतशुद्धिं ततः प्राणं संयम्य मातृकां न्यसेत्॥ ९-७५॥

आघोरस्य मुनिः च्छन्दो देवताङ्गानि विन्यसेत्।

शिखां ते नैव वद्धाग्नि प्राकारं वन्धनं दिशः॥ ९-७६॥

सुदर्शनेन वा रक्षा मुलाभ्यां वा प्रकल्पयेत्।

जयदुर्गाक्षमन्त्रेण सर्षपान् दिक्षुविक्षिपेत्॥ ९-७७॥

ॐ तिलोसि सोमदैवत्योगसवतृप्तिकारकः।

पित्रूणां स्वर्ग दाता त्वं मत्यानां ममरक्षकः।

इति क्षिप्त्वा तिलानात्मचतुर्द्दिक्षु शिवादितः॥ ९-७८॥

कारभैरवनामानमिति माषभक्तै वलिं दिशेत्॥

यावत्।

ततः शवं क्षालयित्वा स्नापयेच्च प्रयत्नतः।

यदि रक्ताक्तकस्तिष्ठे भैरवाश्च भयं भवेत्॥ ९-७९॥

एलालवंगकर्पूर जातीखदिरसांरसाद्रकैः। (?)

ताम्बुलं तन्मुखे क्षिप्त्वा शवं कुर्याद् अधोमुखम्॥ ९-७९॥

स्थापयित्वा च तस्पृष्ठं चंदनेन विलेपयेत्।

वाहुमूलान्तु कट्यन्तं चतुरस्त्रं विभाव्य च॥ ९-८०॥

मध्यपद्मं समालिख्य दलाष्टकसमन्वितम्।

ततःश्चैरेयमजिनं कवलान्तरितं न्यसेत्॥ ९-८१॥

पूजाद्रव्यं सन्निधौ च दुरे चोत्तरसाधकम्।

सन्ताप्यासनमभ्यर्च्य तत्रास्वारोहवद्विशेत्॥ ९-८२॥

कुशान् पादतले दत्वा शवकेशान् प्रमार्ज्य च।

दृढं निबध्यजुतिकां तत् तद् देवस्वरूपिणाम्॥ ९-८३॥

तस्यां देवं सुसंपूज्य पठेद् उत्थाय सम्मुखेः।

ॐ वशे भव देवेश स्वकांममेष्ठसिद्धि देहि वीरसिद्धिं देहि वीरसिद्धि
कृतांवरवद्धा भवे देवेशि अमुकममेष्ठसिद्धिं देहि वीरसिद्धि
कृतांवरम्॥

९४अ) पट्टसूत्रस्य रज्वाथं चरणौ वंधये दृढम्॥ ९-८४॥

ॐ भीमभीमभयाभाव भाव्यलोचनभावुक।

त्राहि मां देव देवेश शवानामधियाधिप॥ ९-८५॥

इति पादतले तस्य त्रिकोणं चक्रमुल्लिखेत्।

तेनोत्थां तु न शक्नोति शवश्च निश्चलो भवेत्॥ ९-८६॥

उपविश्य पुनस्तस्य वाहुनिस्सार्य पार्श्वयो।

हस्तयोः कुशमास्तीर्य पादौ तत्र निधापयेत्॥ ९-८७॥

ओष्ठौ संपुटकौ कृत्वा स्थिरचित्ता स्थिरन्द्रियः।

सदा देवं हृदिध्यात्वा मानीजपमथारभेत्॥ ९-८८॥

वलासना भयं नास्ति भयजाते वदेत् तत्।

यत् प्रार्थयसिवलित्वेन दातव्यं कुंजरादिकम्॥ ९-८९॥

दिनान्तरे तु दाश्यामि स्वनामकथयस्वमे।

इत्युक्ता संस्कृतो भक्त्या निर्भयस्तु पुनजपेत्॥ ९-९०॥

पुनश्चेन्मधुरं वक्ति वक्रव्यं विनये न वै।

तस्मात् सत्यं कारयित्वा वरं च पार्थयेत् ततः॥ ९-९१॥

यदि सत्यं न करोति वरं वान प्रयच्छति।

तदा पुनर्जपेन् मन्त्रे मेकाग्रयतमानसः॥ ९-९२॥

सत्यं कृते वलं रब्धा सत्यजेत् तु जपादिकम्।

फलं जातमिति ज्ञात्वा जुतिकां मोचयेत् ततः॥ ९-९३॥

शवं प्रक्षाल्य संस्नाप्य वन्धनं मोचयेत् पदे।

पादचक्रं मार्जयित्वा पूजाद्रव्यं जलेक्षिपेत्॥ ९-९४॥

शवं जलेथगन्ते वा निक्षिप्य स्नानमाचरेत्।

ततस्तु स्वगृहं गत्वा वलिं दद्यादिनातरे॥ ९-९५॥

९४ब्) अग्रिमरात्रौ येषां देवानां जयमानोहं ते गहं तु मया दत्तनिमं वलिम्।

इति यैर्याचितानश्च नरकुंजलशूकराम्।

दत्त्वा पिष्ठमया नेव कर्त्तव्यं समुपोषणम्॥ ९-९६॥

परेह्नि नित्यमाचर्य पंचगव्यं पिवेत् ततः।

ब्राह्मणान् भोजयेत् तत्र पंचविंशतिसंक्षकान्॥ ९-९७॥

पंचपंचविहिनान् वा क्रमेणैवं दशावधि।

तत स्नात्वा चतुस्काथ च निवसेद् उत्तमे स्थले॥ ९-९८॥

यदिनस्याद् विप्रभोज्यमिति पूर्ववत्।

यदीवक्तिदीनवाक्यमिति च॥

देव गो ब्राह्मणांदीश्च प्रत्यहं स्पृशेच्छुचिः।

प्रातर्नित्यक्रिया ते तु विल्वपत्त्रौदकं पिवेत्॥ ९-९९॥

ततः स्नायात् तु गंगायां प्राप्ते षोडशवासरे।

स्वाहान्तं मुलमुच्चार्य तर्पणान्ते नमः पदम्॥ ९-१००॥

अनेनविधि देवं तर्पयेद् दैशिकोत्तमः॥

तथा च मूलमालायाम्॥

श्रीदेव्युवाच॥

रहस्यातिरहस्यं मे पुरश्चर्यविधि प्रभो।

वदस्व यदनुष्टानात् सर्वकामाभवन्ति हि॥ ९-१०१॥

श्री-इश्वर उवाच॥

गृहीत्वा सद्गुरोर्दीक्षां शुभेकालेदि वाणिशि।

आरामो वैष्णवः प्रोक्तो मध्यमः शैवदीक्षिताः॥ ९-१०२॥

अनया दीक्षिता यो वै स एव परमोगुरुः।

शक्तिक्षेत्रेषु गंगायां नद्यां पर्वतमस्तके॥ ९-१०३॥

पवित्रे च स्थले देवि यजे विद्या प्रसाधयन्।

शक्तिक्षेत्रे कामरूपादौ॥

तत्र स्थित्वा जपेल्लक्षं साक्षाद् देवीस्वरूपकः॥ ९-१०४॥

ततो भवति विद्येयं त्रैलोक्यवशकारिनि।

चतुर्दशसहस्राणि सेविते हरि पदांवुजे॥ ९-१०५॥

९५अ) ततो भव देवेशि त पुजारतः पुमान्।

कायने मणसा वाचा सुवर्णकशतादिभिः॥ ९-१०६॥

सन्तोष्यपरया भक्त्या गुरुं दीक्षां समाश्रयेत्।

पूर्वोक्तस्थानमाश्रित्य जपपूजां समाश्रयेत्॥ ९-१०७॥

प्रातः पालं समारभ्य जपेन् मध्यन्दिनावधि।

प्रथमे हनियज्जप्ते तज्जप्तं व्यदिने दिने॥ ९-१०८॥?

न्युनाधिकं न जप्तव्यं नासमाप्ते सदाजपेत्।

गते प्रथमयामे तु तृतीयप्रहरावधि॥ ९-१०९॥

निशायां च प्रजप्तव्यं रात्रीशेषजपेन च।

हविष्ये भक्ष्य यद् रातौ नकदाचिदिनेन च॥ ९-११०॥

लब्धाहारं प्रकुर्वीत युवती पूजने रतः।

भैक्षं हविष्यं शाकादि इति पूर्वोक्तम्।

तथा च वृहत्मत्स्यसूक्ते॥

शाकं मूलं भैक्ष्यं इति च पूर्वोक्तम्।

निषिद्धमाह॥

मधुमांसं तथा क्षारलवणं तेलमेव च॥ ९-१११॥

स्निग्धं पर्युषितं चैव निस्नेहं कीटदुःखितम्।

काचिकं गृजनं विल्व करजं लशुनं तथा॥ ९-११२॥

मसुरं को इवं माषं मंडुकं च न कादिकम्।

ताम्बुलं कांस्यपात्रं च दिवाभोजनमेव च॥ ९-११३॥

एवमादीनि चान्यानि जपकाले विवर्जयेत्।

अन्यथा भोजनान् तेषां सिद्धिं नाप्नोति साधक॥ ९-११४॥

गृजनं मूलिकाकृतिरक्तवर्णं गाजल इति यस्य प्रसिद्धि।

कोद्रवं कोड इति मण्डूकं मन्दू वा इति।

स्वनारीमन्यनारी वा पूजयेत् सर्वपर्वसु।

नाधमे संगतिः कार्या सर्वप्राणहितेरतः॥ ९-११५॥

९५ब्) यस्या पावा जपः प्रोक्तस्तद्दशांशमनुक्रमात्।

तन्त्रद्रव्यैर्जपस्यान्ते होमं कुर्याद् दिने दिने॥ ९-११६॥

होमस्य तु दशांशेन तर्पणं प्रोक्तमेव च।

पर्वणस्य दशांशेन शिरोमार्जनमेव च॥ ९-११७॥

तद्दशांशेन विप्रेन्द्रा न्युवतीकुलकन्यकाः।

संभाजयेत् प्रीतियुतैद्रव्यै नानाविधैः शुभैः॥ ९-११८॥

तर्पणप्रकारमाह॥

हंसपारायणे।

तर्पणं तु प्रकुर्वीत य य सापायसन वा।

आज्यनमधुना वापि सुरयामन्त्रसाधकः॥ ९-११९॥

ब्राह्मणैः क्षत्रिया वैश्यैः शूद्रैरस्या यथाक्रमात्।

विनामांसेन मत्सेन पुंश्चरीसेवनं विना॥ ९-१२०॥

नमन्त्रसिद्धि भवति तस्माद्यत्न परो भवेत्।

तथा॥

मादनं सकलं वस्तु वर्जयेत् कणकादिकम्॥ ९-१२१॥

कनकं पातकी तस्मा धर्मोवेदविदाम्वरः।

कालिकापुराणे॥

ब्राह्मनस्तुरां दत्वा ब्रह्मण्या देव ही यते॥ ९-१२२॥

स्वगात्ररुधिरं दत्वा आत्मवध्यमवाप्नुयात्।

एवं चाशवं सर्वत्र चमरजाती परं चरमज्जाति परशूद्रजाति परमित्यर्थः॥

अन्येषां पातक हेतुत्त्वात्॥

क्षीरेण ब्रह्मणैस्तर्या घृतेन नृपवंशजः॥ ९-१२३॥

माक्षिकैवश्यवंशैश्च आसवैः शूद्रजातिभिः।

होमाद्यशक्तौ देवेशि कुर्यात् तद् द्विगुणं जपन्॥ ९-१२४॥

यदि पूजाद्यशक्तः स्याद् द्रव्याभावे न सुन्दरि।

केवलं जपमात्रेण पुरश्चर्याविधीयते॥ ९-१२५॥

दिव्योथयदिभावेस्तु भावचुडामणावणु।

९६अ) संधेयः॥

मत्स्यमांसाद्यरनेशकुर्यात् पुरस्क्रियाम्।

एकरात्रौश्मसाने वा शवे वा प्रोढवालयो॥ ९-१२६॥

मयोक्तं भैरवकल्पे विधाने वरवर्णिनी।

हस्तमात्रनिखाते वा मुडे वा विजने वने॥ ९-१२७॥

विराणा कथिते देवि साधनं तु विदुल्लभम्।

कुमारी पूजना देव पुरश्चर्या विधिः स्मृतः॥ ९-१२८॥

उक्तं गन्धर्वतन्त्रे॥

कुमारीका द्विवर्षा च त्रिवर्षा च त्रिमुर्त्तिनी।

चतुवर्षा तु कल्पाणि पंचवर्षा तु रोहिणी॥ ९-१२९॥

षड्वर्षा तु भवेत् काली सप्तवर्षा तु चद्रिका।

अष्टवर्षा शांभवी तु दुर्गा तु नवभिः स्मृता॥ ९-१३०॥

दशवर्षा तु भद्रेति नामभिः परिकीर्त्तिता।

ॐ मन्त्राक्षरमयी लक्ष्मी मातृणां रूपधारिणीम्॥ ९-१३१॥

नवदुर्गात्मिका सा अत कन्यामावाहयाम्यहम्।

नानाजाति भवाः कन्या रूपयौवन संयुता॥ ९-१३२॥

अभ्यन्ते प्रौढा वाला वा पूजनीया यथा विधिः।

द्रव्यैः प्रियकरैः सर्वै भक्ष्यभोज्यादिभिः शुभैः॥ ९-१३३॥

पूजयेत् परभावेन नानारूपमनोहराः।

भगिनीकन्यका वापि दौहित्री वा कुटुंविनि॥ ९-१३४॥

मातृवर्ज्यं सदा पूज्या नानाजाति समुद्भवाः।

अथवान्यप्रकारेण पुरश्चरणमिष्यते॥ ९-१३५॥

सूर्योदयं समारभ्य यावत् सूर्योदयं भवेत्।

तावज्जप्ते महेशानि पुरश्चर्याविधियते॥ ९-१३६॥

९६ब्) कृष्णाष्टमीं समारभ्य यावत् कृष्णौष्टमी भवेत्।

सहस्त्रसंख्यजप्तेन पुरश्चरणमिष्यते॥ ९-१३७॥

शुक्लां चतुदशीं प्राप्य नवम्यं तं महोत्सवे।

अष्टमी नवमी रात्रौ पूजां कुर्याद्विशेषतः॥ ९-१३८॥

दशाम्यां पारणं कुर्यान् मत्स्यमासांदिभिः प्रिये।

षड्सहस्त्रं जपेन्नित्यं भक्तिभावपरायणः॥ ९-१३९॥

चतुर्दशीं समारभ्य यावदन्या चतुर्दशी।

तावज्जप्ते महेशानि पुरश्चरणमिष्यते॥ ९-१४०॥

केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि।

विना होमादिदानेन विशेषात् पीठपूजने॥ ९-१४१॥

योनिपीठं महापीठं कामरूपं तथापरम्।

तयोरेकतलं पूज्यं रुद्रदेह इवापरः॥ ९-१४२॥

अथवान्यप्रकारेण पुरश्चरणमिष्यते।

शरत्कारे चतुर्थ्यादि नवंम्यतं विशेषतः॥ ९-१४३॥

भक्तितः पूजयित्वा च तावदात्रौ सहस्त्रकम्।

जपेदेकाकिविजने केवलं तिमिरालय॥ ९-१४४॥

अष्टम्यादि नवम्यान्तमुपवासपरो भवेत्।

अष्टम्यां सिद्धिवेला या यामष्टोत्तरतायुतम्॥ ९-१४५॥

प्रविश्यमन्त्रविधिवन्ताः समभ्यर्च्य यत्नतः।

पूर्वोक्तं न्यासमासाद्य जपपूजादिकं चरेत्॥ ९-१४६॥

केवलं कामदेवोसौ जपादष्टोत्तराच्छतान्।

अष्टम्यां च चतुर्द्दश्यां नवम्यां च विशेषतः॥ ९-१४७॥

रात्रियोगेन देवेशि गत्वा च पितृकानने।

दिगंवरो मुक्तकेशो भुत्वा च सुरसुन्दरि॥ ९-१४८॥

प्रजपेदयुतं मन्त्रं देवताभाव तत्परः।

९७अ) मन्त्रसिद्धि भवेत् तस्य देवी पूत्र तु भूतले॥ ९-१४९॥

अथवा प्रजेपेद्विद्यां शून्यागारचतुष्पथे।

राजद्वारे श्मसाने वा सभवेत् साधकोत्तमः॥ ९-१५०॥

भौमावास्या लिखित्वा च योजयेत् साधकोत्तमः।

मन्त्रसिद्धि भवेत् तस्य चण्डिकां तत्र पूजने॥ ९-१५१॥

कुजे वा शनिवारे वा नरमुण्डं समाहृतम्।

पंचगव्यं मिलितं चंदनाद्यैर्विशेषतः॥ ९-१५२॥

निक्षिभूमौ हस्तार्धमानतो निजने वने।

एकाकी प्रतपे (?)मन्त्रं सभावेत् कल्पपादपः॥ ९-१५३॥

एकरात्रौ जपेन्मन्त्रमेकाकी निर्जने वने।

सभवेत् साधकश्रेष्ठो महसिद्धीश्वरो भवे॥ ९-१५४॥

वितायां च जपेन् मन्त्रं मन्त्रसिद्धिर्नसंशयः।

सभवेत् साधकश्रेष्ठो देवी पुत्रोन संशयः॥ ९-१५५॥

इति भैरवानन्दसंहि (सा)ताम्॥

सनत्कुमारसंहितायाम्॥

अथवान्यप्रकारेण पुरश्चरणमिष्यते।

चंद्रसूर्यग्रहे चैव ग्रासावधिविमुक्तित॥ ९-१५६॥

यावत् संख्यामनुजप्त्वा तावद् वोमाधिकं चरेत्।

शुद्धदानानुरोधेन यदि जाप्यं त्यजेन्नरः॥ ९-१५७॥

सभवेद् देवता द्रोहि पित्रुन् सप्तरजप्यधः (?)।

इति सनत्कुमारसंहिता वचनेन प्रमेतपितृकस्यापि ग्रहणे जपश्यावश्यकत्वे स्मृत्युक्ते वहुवचन व्याकोपने॥

तथा हि॥

सर्वस्वेनापि कर्त्तव्यं श्राद्धं वा राहुदर्शन॥ ९-१५८॥

अकुर्व्वानस्तुतच्छ्राद्धये के गौरि व सीदति।

तथा विरुद्धधर्मसमवाय भूयसां स्यात् सधर्मकत्वमिति जैमिन सूत्रान्॥

एवं पट्यप्यदन्तकः पूषापैमन्ति सदावरम्।

अग्निन्द्रेश्वरसामान्यान् तण्डुलात्र विधियते॥ ९-१५९॥

इति च्छंदोगपरिशिष्टीयात्॥

स्मृतेर्वलवत्त्वेन सनत्कुमारीयस्यनीर्विषयापन्तिमि?रिति चेत् सा वै वम्।

आरव्धपंचाङ्गमहापुरश्चरणमध्ये पूर्वान्नपतित सूर्यग्रहणविषयत्वे नैवोपपन्तेः॥

एवं च निंद्यार्थवादेन ग्रहणश्राद्धस्यावशकत्वे प्रतिनिधिद्वारातदिति

॥

अथ भूतभैरवम्॥

यदुक्तं सारसर्वस्वे सर्वतन्त्रेषु गोपितम्।

वीरसिद्धेर्विधानं तु देव देवेन शंभुना॥ ९-१६०॥

यस्य विज्ञानमात्रेण संदभाग्योपि सिद्ध्यति।

अहोरात्रेणकालेन नहेलया साधकोत्तमः॥ ९-१६१॥

मन्त्रं त्वीत्वागुरोः पार्श्वे गुरुभक्तिपुरस्सरः।

मन्त्रश्रोत्रास्य हृन्नेत्र घ्राणान्विज्ञाययत्नतः॥ ९-१६२॥

यत्वा च कीलकं ज्ञात्वा कुर्यान् मन्त्र पुरस्क्रियाम्।

पुरश्चरणसंपन्नो विरसिद्धिं समाचरेत्॥ ९-१६३॥

पुत्रधारधनस्नेह लोभमोहविवर्जितः।

मन्त्रं वा साधयिष्यामि देहं वा यातयाम्यहम्॥ ९-१६४॥

प्रतिज्ञामीदृशीं कृत्वा वलिद्रव्यं समाहरेत्।

यस्य मन्त्रो यद्रुक्तं तद् गृह्या शेषविधानतः॥ ९-१६५॥

स्त्रीवर्ज्यं पतितं वर्ज्यं कुष्टरोगादिनिदितम्।

नदुर्भिक्षमृतं वृद्धं नपर्युषितमेव वा॥ ९-१६६॥

स्त्रीजनं चेदृशं रूपवर्जितं परिवर्जयेत्।

९८अ) संस्थाप्य कुशशर्या या मुत्तानं दिव्यरूपिणम्॥ ९-१६७॥

कृतनित्यक्रियोदिक्षु विदिक्षुपि च कीलयेत्।

यन्त्रं लिखित्वा वीरस्य ललाटभ्यर्च्यदेवताम्॥ ९-१६८॥

वलिदानेन सन्तोष्य शवस्य हृदि संस्थितः।

वलिमाहमुण्डमालायाम्॥

केवलं वलिदानं न तुष्टा भवति सुन्दरि॥ ९-१६९॥

कथितं पूर्वमस्मभ्यं प्रकाशं कुरु शंकरः।

श्रीशङ्कर उवाच

अत्यन्तगुह्यं देवेशि विधानं वलिपूजितम्॥ ९-१७०॥

कथयामि वरारोहे सुस्थिराभव सांप्रतम्।

दधिक्षीरं गुदं न्नान्नपायसं सर्करान्वितम्॥ ९-१७१॥

पायसं क्षौद्रमात्रं वा नारिकेलं समोदकम्।

शशकं मेखषंडं च साद्रकं सहसर्करम्॥ ९-१७२॥

रम्भाफलं लडुकं च भर्जितान्नं तु पीठकम्।

शालमत्स्यं च पाठिनं शकुलं चिङ्कट तथा॥ ९-१७३॥

मङ्गुरं चिल्लिषं दद्यान् मांसमेषस्य सन्ततम्।

पक्षिमांसं वरारोहे डिंभं नानासमुद्भवम्॥ ९-१७४॥

कृष्णभागं मेषमांसं गोधिकाहरिणीं तथा।

जलजे मत्स्यमांसे च गंधकीमासमेव च॥ ९-१७५॥

नानाव्यंजनदुग्धानि व्यंजनानि मधुनि च।

ईषद्दग्धं घृते नोक्तं निशायां दिवसेपि वा॥ ९-१७६॥

वलिं दद्याद् विशेषेण कृष्णपक्षे शुभे दिने।

च्छागे दत्ते भवेद् वाग्मी मत्सौ दन्तैः कविर्ध्रुवम्॥ ९-१७७॥

महिषेधनवृद्धिः स्यान् मृगे भोगफलं भवेत्।

दत्ते पक्षिणे ऋद्धिः स्याङ्गोधिकायां महाफलम्॥ ९-१७८॥

९८ब) मेषदत्ते महर्द्धिः स्यात् सर्वसिद्धिरनुत्तमा।

ललाटहस्तहृदय शिरोवक्षस्तु मध्यतः॥ ९-१७९॥

स्वदेहाद्रुधिरेदत्ते वरदेह इवापरः।

सुरादानेन देवेशि महायोगीश्वरो भवेत्॥ ९-१८०॥

रात्रौ प्रथमयामार्धे पूजार्थं वलिमाहरेत्।

पंचोपचारद्रव्याणि ससुराणि प्रयत्नतः॥ ९-१८१॥

गुडार्द्रकरे सेनैव सुरात्रे ब्राह्मणस्य च।

गौडीने या क्षत्रियेण माध्वी वैश्येन तत्र तु॥ ९-१८२॥

कदलीफलसंमिश्र शानत्वक् स्वरसैः सुराः।

शूद्रेणात्र प्रदातव्या देया वै नैव संस्पृसेत्॥ ९-१८३॥

सुरा तु त्रिधिधा देवि स्फाटिकी डाकिनी तथा।

कार्णिकी सुरया देवि योर्चयेत् पलमेश्वरीम्॥ ९-१८४॥

गुटिकांजनस्तंभादि मारणोच्चाटनादिभिः।

महासिद्धिश्वरो भूत्वा वसेत् कल्पायुतं दिवि॥ ९-१८५॥

अर्घे दन्ते महेशानि सर्वकामार्थसिद्धये।

जया कुमारी

सुशीतलजलैर्वापि कस्तूरी कुंकुमान्वितैः॥ ९-१८६॥

मूलमन्त्रेण देवेशि आकृष्यनिभर्यः शुचिः।

अर्घं दत्त्वा विशेषेण चक्रवातेन पुजितम्॥ ९-१८७॥

कुमारी पूजने शक्तो नारीस्वप्नेपि नस्मस्मरेत्।

ताम्रपात्रे कपाले वा श्मशानकाष्टनिर्मिते॥ ९-१८८॥

शनिभौमदिने वापि शरावे मृत्सुमुद्भवे।

स्वर्णैरौप्यथलोहे वा चक्रमर्च्यधिधानतः॥ ९-१८९॥

पुष्पाण्यपि तथा दद्याद् रक्तकृष्णासितानि च।

श्वेतं रक्तं जयापुष्पं करवीरं तथा प्रिये॥ ९-१९०॥

तगलं मल्लिकाजाति मालती युथिका तथा।

९९अ) दुस्तुराशोकवहुलश्वेतकृष्णापराजिता॥ ९-१९१॥

वकपुष्पं विल्वपत्रं चम्पकं नागकेशरम्।

रंगिकाचिन्त्रिकाकांचि रक्तं यत् परिकीर्त्तितम्॥ ९-१९२॥

अर्कपुष्पं जवापुष्पं वर्वरं च प्रियंवदे।

अष्टम्यां च प्रदानेन सन्तुष्टा तस्य पार्वती॥ ९-१९३॥

पद्मपुष्पे संरक्तेनः सन्तुष्टा सर्वदेवताः।

कृष्णवायदिवाशुक्लं कालिकावरदा शुभा॥ ९-१९४॥

श्मशाने दुस्तरेणैव तुष्टा भूमावती शिवा।

आमलक्ष्यास्तु पत्रेण तुष्टा पुष्पण पर्वणि॥ ९-१९५॥

अष्टम्यां च चतुर्दश्यां नानापुष्पैः समर्चयेत्।

श्मशाने रात्रिशेषे वा शनिभौमदिने निशि॥ ९-१९६॥

पूजयित्वा विशेषेण सर्वसिद्धिस्वरो भवेत्।

वलिं दत्वा प्रयत्नेन भूतशुद्धिं समाचरेत्॥ ९-१९७॥

भूतः शुद्धिं ततः कृत्वा कराङ्गन्यासमाचरेत्।

ध्यात्वा तु देहि देवं च नान्य चेता जपं चरेत्॥ ९-१९८॥

स्वतन्त्रोक्तविधानेन नदिशश्चानवलोकयन।

न पश्यदद्भुतं किंचिन् नभाषे ततवस्पृशेत्॥ ९-१९९॥

अहोरात्रं जपं कुर्यात् यावत् प्रत्यक्षतां व्रजेत्।

वदभ्यागत्य चेष्टां वा देहस्फुर्तिं करोति च॥ ९-२००॥

एते न जायते वीरसिद्धिविद्या ततो वलिम्।

देवतां स्वगुरुं नत्वा विस्मृत्य हृदये पुन॥ ९-२०१॥

स्थापये भोजयेद्विप्रान् शवं तो ये विनिक्षिपेत्।

ताराकाली मनानारी द्वालसिद्धिं समाहरेत्॥ ९-२०२॥

९९ब्) अथासनविधिं वक्ष्य सर्वतन्त्रानुसारत।

आसनेन विनासिद्धिं नविन्देयुः सरा अपि॥ ९-२०३॥

स्तम्भनं मोहनं चैव पूर्वोक्तमेव।

आसनं कुरुते मन्त्री सर्वकामार्थसिद्धये॥ ९-२०४॥

तदुक्तं भैरवीतन्त्रे॥

मेषव्याघ्रगजोष्ट्रवृक्षतुरगलग्भिस्तु षड्कर्मसु प्रत्यकं विविधासनानि

क्रिमिजं ताराक्षसारं गजम्।

मोक्षं भोगदमासनं च कुरुते और्वं तथा चैलजं वैनं चैव

मृगाजिनं शुभकरं सर्वप्रणीतं वुधैः॥ ९-२०५॥

निषिद्धमाह॥

भूमौ भूपभयं कुलक्षयकरं वंशासनं रोगदं काष्ठं चैव

तथासनं प्रकुरुते शैलं महद्दुःखदम्।

वैत्रपल्लवमृत्तिकासनयुतं त्रैणं च विद्वेषकृच्छेषं क्रैमिजमासनानि

सकलं मोक्षादि सिद्धिप्रदम्॥ ९-२०६॥

कृष्णांजिने ज्ञानसिद्धिः मोक्ष श्रीव्याघ्रचर्मणि।

चर्माशने व्याधिनाश उर्णायां दुःखमोचनि॥ ९-२०७॥

कुशासने मन्त्रसिद्धि नात्रकार्या विचारणा।

काम्यार्थं कंवरं चैव सर्वार्थैरक्तकेवलम्॥ ९-२०८॥

स्वस्तिकादिक्रमेणोक्तं विशेन् तत्र निचामष।

स्वस्तिकादीनि वक्ष्यामि आवनानि विशेषतः॥ ९-२०९॥

स्वस्तिकं पद्मकं वज्रं वीरं चेति चतुष्टयम्।

जपे प्रशस्तमेतेषु पूजिते पुनरादिमे॥ ९-२१०॥

तेषां तु लक्षणं वक्षे स्वस्त्यादीनां यथाक्रमम्।

जानूपूर्वोरतरं कृत्वा सम्यक् पादतल उभे॥ ९-२११॥

१००अ) ऋजुकायः समासीनं (ः) स्वस्तिकं तदुदाहृतम्।

वामोरूपरिविन्यस्य दक्षिणं चरणं वुध॥ ९-२१२॥

वामं पुन दक्षिणारौव्युक्रमस्य विधानतः।

धृत्वा कराभ्यामङ्गुष्ठे निधाय चिवुकं हृदि॥ ९-२१३॥

नासाग्रं वेक्षेयेद् विद्वान् पद्मासनमिदं मतम्।

जपादावचमाख्यातं पद्मासनमितं वुधैः॥ ९-२१४॥

वामोरौ दक्षिणं पादं न्यसेद्वामं तथान्यतः।

एता वदेव निवर्त्त्यजपहोमादिकं चरेत्॥ ९-२१५॥

नारदीय तथा प्राह नारायणमणौ मुनिः।

उभात्यामुरुमूलाभ्याम् अग्रपादावुभावपि॥ ९-२१६॥

उपर्यारोप्य आसीते पद्मनाम तदासिनम्।

एकपादं तथैकस्मिन् विन्यस्योरुणि संस्थितम्॥ ९-२१७॥

इतरस्मिन् तथा चारौ वीरासनमुदीरितम्।

मेढ्रादुपरिविन्यस्य सव्यं गुल्फं ततोपरि॥ ९-२१८॥

गुल्फान्तरं च विन्यस्य वक्रासनमुदीरितम्।

अथ मालाविधिं वक्ष्ये प्रवक्ष्यामि विशेषतः॥ ९-२१९॥

प्रथमतः कलमाला प्रकारमाह॥

तत्राङ्गुलि जपं कुर्यान् नङ्गुष्ठाङ्गुलिभिर्जपेत्।

अंगुष्ठेनविनाकर्म कृतं तदफलं भवेत्॥ ९-२२०॥

सामान्यं तु॥

तदुक्तं गौतमीये॥

आरभ्यो नामिकं मध्या प्रदक्षिणक्रमेण च।

तर्जनीमूलपर्यन्तं जपेदशसु पर्वसु॥ ९-२२१॥

तथाहं समारायणि॥

अमामिकात्रयं पर्व यथा देवो तथा हरिः।

१००ब) तस्मात् तु स्थिरचित्तेन कर्मकुर्यादहरिशम्॥ ९-२२२॥

एतद्रहस्यं परमं मयोक्तं ते स्वरेश्वरि।

त्वया गुप्ततरं कार्यं नाख्येयं यस्य कस्यचित्॥ ९-२२३॥

प्रकारान्तरेणं भैरवकल्पे [भैवकल्पे]॥

अनुलोमविलोमस्थै विंदुवस्मातृकाक्षरैः।

क्षमेरूकैः साष्टवर्गैः क्लिप्तयावर्णमालया॥ ९-२२४॥

प्रत्येकं वर्णयुद्व्मत्रा जप्ताः स्युः क्षिप्रसिद्धिदाः।

वैरिमन्त्रा अपि नृणामन्ये मंश्च किं पुनः॥ ९-२२५॥

अकचटतप यसावर्गाद्यार्णाः समीरिताः।

मन्त्राणां वर्णयुक्तत्वं प्रथमं वर्णमुर्चरेत्॥ ९-२२६॥

अनया यो जपं कुर्या तस्य सिद्धिरदूरतः।

अनुलोमेति आदावनुलोमेन जपः।

अकारादिक्षकारान्ते जपः पश्चाद्विलोमेन जपः ॥

क्षकाराक्षि अकारा तेन जप इत्यर्थः ॥

अत्र अक्षरोमेरुत्वेन अल्पनीयः ॥

तथा च ॥

हकारानन्तरं रकारोदेयः ॥

अन्यथा पंचाशद्वर्णानुपपत्तेः शतार्द्धकेनेति।

क्रमदीपिकोक्तपाठविरोधाच्च शतार्द्धे नेति पाठ नैव निर्वहति कथं
शतार्द्धकेन तस्या च्छतार्द्धके किं विशिष्टेन केन पृथिवी जेन
सहरकारेण सहेत्यर्थः ॥

एते न नपंचाशद्वर्णत्वहानिरित्यर्थः ॥

अत जपमाला विधानम् ॥

आदिक्षान्तं तु योगत्वा दक्षमालेति कीर्त्तितः॥ ९-२२७॥

तद् वर्णसंख्यैर्मणिभिर्जपमालां प्रकल्पयेत्।

१०१अ) रुद्राक्षमालिका देवि जपेन समनोरथान्॥ ९-२२८॥

पद्माक्षैर्विहिता माला शत्रुनाशकरी मता।

कुशग्रन्थियुता माला सर्वपापप्रणासिनी॥ ९-२२९॥

पुत्रः वीजफलैः क्लिप्ता कुर्चते पुत्रसंपदा।

निर्मितारौप्यमणिभि जपमालेप्सित प्रदा॥ ९-२३०॥

स्वर्णै विरचिता माला इष्टान् कामान् प्रयच्छति।

प्रवालैर्विहिता माला प्रयच्छेत् पुष्कलं धनम्॥ ९-२३१॥

सौभाग्यं स्फाटिकी माला मौक्तिकैर्विहिता तथा।

विहिताः शंखमणिभिः कुरुते कीर्त्तिमव्ययम्॥ ९-२३२॥

सर्वैरेतैर्विरचिता मालास्यान्मुक्तये नृणाम्।

नित्यजपं करे कुर्यान् न तु काम्यमेवाधनात्॥ ९-२३३॥

नासाभिस्तु प्रकुर्वीत् नित्यं काम्यं च साधकः।

उच्चाटन स्वदन्तानां माला प्रोक्ता तु सूरिभिः॥ ९-२३४॥

खरंदन्तैरधोभूतै मानुष्यस्नायुतन्तुना।

ग्रथितैर्निमितो माला शत्रुनां नाशिनी मता॥ ९-२३५॥

प्रेतदन्तैरधोभूतैः कर्त्तव्या जपमालिका।

साध्यदेहभवैः केशैः स्रोतव्या द्वेषकर्मणि॥ ९-२३६॥

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे।

त्रिपुरा या जपेशस्ता इद्राक्षै रक्तचन्दनैः॥ ९-२३७॥

महाशंखमयी माला नीलसारभ्यतीमनौ।

अंगुली जपसंख्यानमेकमेकमुदाहृतम्॥ ९-२३८॥

पुत्रवीजैदशगुणं शतं शंखैसहस्त्रकम्।

प्रवालैर्मणिरत्नैश्च दससाहस्त्रकं मतम्॥ ९-२३९॥

तदेव स्फातिकी प्रोक्तं मौक्तिकैलक्षमुच्यते।

१०१ब) स्वर्णैदशसहस्त्रं तु शंखैः शतगुणं तथा॥ ९-२४०॥

कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत्।

शुक्लपद्माक्षमणिभिरपि स्यादमितं फलम्॥ ९-२४१॥

मातृकात् तु समूभूत मालयापि च तत्फलम्।

अथवा तां शतैः कुर्यात् सर्वसाधारणे जपे॥ ९-२४२॥

पंचाशद्धिः काम्य कर्मसिद्धिः स्याच्चतुरोहरैः।

अष्टोत्तरशतैः सर्वसिद्धिरुक्त कृतस्त्रजा॥ ९-२४३॥

मातृका तु समुद्भूत मालयापि च तत् फलम्।

अथवा तां शतैः कुयात् सर्वसाधारणे जपेत्॥ ९-२४४॥

पंचाशद्धिः काम्यक्रमसिद्धिः स्याचतुरोत्तरैः।

अष्टोत्तरशतैः सर्वसिद्धिरुक्तकृतस्त्रजा॥ ९-२४५॥

मोक्षार्थी पंचविशत्या धनार्थी त्रिशन्ता जपेत्।

पुष्ट्यार्थे सप्तविंशत्या पंचदशाभिचारके॥ ९-२४६॥

नारदीये तु संप्रोक्तं नपंचदशकस्यचित्।

अनयोः पक्षयो तस्माद् विकल्पः स्याद् देवि स्थितः॥ ९-२४७॥

अथवान्यप्रकारेण। मालावक्ष्यामि तत्वत।

तदुक्तं सारसंहितायाम्॥

अंगुल्या जपसंधानमेकमेकं वरानने॥ ९-२४८॥

पर्वचाष्टगुणं विद्यात् पुत्रजीवै फलैर्दश।

शतं वै शंखमणिभि प्रवालैश्च सहस्रकम्॥ ९-२४९॥

मौक्तिकैर्दशलक्षं तु सुवर्णैः कोटिरुच्यते।

कुशग्रन्थ्या दशकोटि रुद्राक्षैश्चाप्यनन्तकम्॥ ९-२५०॥

मौक्तिकैः श्वेतपद्माक्षै रुद्राक्षैर्मुक्तिचेतरे।

स्तंभे सुवर्णं जानीयादाभिचान तु निंदकम्॥ ९-२५१॥

१०२अ) रक्तचंदनपद्मं च पुत्रजीव प्रवालकम्।

वश्याकर्षणयोर्देवि पुरः क्षोभे विशेषतः॥ ९-२५२॥

सर्वा सा मध्यमालानां जपे यत् फलमुच्यते।

तत्फलं शतसाहं प्रजपेदंगुलिपर्वणि॥ ९-२५३॥

तस्मादंगुलिपर्वाणि जपार्थं प्रवलानि च।

अंगुष्ठेल जपेन् मोक्ष तर्जन्यात्वभिचरिके॥ ९-२५४॥

मध्यमा वनिकामार्था शान्तौ पुष्टावनामिका।

कनिष्ठाकर्षणे चासां जपकर्मणिशोभने॥ ९-२५५॥

अगुष्ठेन जपेज्जप्यमन्यैरंगुलिभिः सह।

अंगुष्ठेन विनाकर्म कृतं तन्निष्फलं भवेत्॥ ९-२५६॥

पंचविंशतिमोक्षार्थी सप्तविंशति पौष्टिके।

धनार्थी त्रिंशतात् कुर्यात् पंचदश्याभिचालिके॥ ९-२५७॥

कुल्लुकां च ततो नत्वा माला पूजां विधाय च।

गृह्णियाद् दक्षिणे नाथ न च वामेन संस्पृशेत्॥

नाभि हृच्छिरदेशे तु कुल्लुकां परिचिन्तयेत्॥ ९-२५८॥

स्फाटिक्यरुद्राक्षकपुत्रजीवैरिन्द्राक्षपद्माक्षकमौक्तिकैश्च।

प्रवालसौवर्णिककोशशंखै माला भवेत् सौख्यकरीरराणाम्॥ ९-२५९॥

देव्या भवेत् प्रीतिकरी प्रवालैः सोवर्णिकैः स्फाटिकमोक्तिकैर्वा।

शिवस्य रुद्राक्षविनिर्मितैश्च प्रीतिर्भवेस्फाटिकनिर्मितैर्वा॥ ९-२६०॥

विष्णोः सदा प्रीतिकरी प्रशस्ते रुद्राक्षमालाथ च कौशवी वा।

पद्माक्षकै वा प्यथ मौक्तिकैर्वा रुद्राक्षमाला सततं प्रणस्ता॥ ९-२६१॥

प्रवालैरेव कर्त्तव्या त्रिपुरा या विशेषतः।

१०२ब्) अथवा शंखमणिभि मालाकार्या विशेषतः॥ ९-२६२॥

अष्टोत्तरशतैर्बीजै प्रशस्ता सर्वकर्मणि।

शतार्धेनापि कर्त्तव्या तथैव परिकीर्त्तिता॥ ९-२६३॥

पंचपंचाशतैर्वापि मारणोच्चाटनादिषु।

सात्त्विकी राजसी चैव तामसीति त्रिधोदिता॥ ९-२६४॥

सात्त्विकी प्रथमामाला द्वितीया राजसी मता।

तृतीया तामसी प्रोक्ता मारणादौ प्रयोजयेत्॥ ९-२६५॥

शुक्लैर्विनिर्मिता माला मोक्षकर्मणि शस्यते।

कृष्णैर्विनिर्मिता माला मारणादौ प्रयुज्यते॥ ९-२६६॥

पट्टसूत्रैः कृता माला देव्याः प्रीतिकरी सदा।

कर्पासैर्वैष्णवी माला पट्टसूत्रैरथापि वा॥ ९-२६७॥

ऊर्णाभिर्वाल्कलैर्वापि सौरीमाला प्रकीर्त्तिता।

अन्येषामपि देवानां कर्त्तव्या कामचारतः॥ ९-२६८॥

द्वादश्यां वैष्णवीमाला कर्त्तव्या सोपवासकैः।

मन्त्रज्ञैर्विश्वमन्त्रेण दिवाभागेन शल्यते॥ ९-२६९॥

शक्तीनामपि कर्त्तव्या रात्रौ तुल्का यथाविधि।

अष्टम्यां च नवम्यां च चतुर्दश्यां तथैव च॥ ९-२७०॥

त्रयोदश्यां तिथौ कुर्या च्छिवस्यापि सुरेश्वरि।

अर्धवतुलतामाला स्थूलासूक्ष्मानियो जपेत्॥ ९-२७१॥

सर्पाकारा भवेत् सा तु शुभदा सर्वकर्मणि।

सर्वथापि हि मालानां मेरु पार्श्वद्वयं तथा॥ ९-२७२॥

न स्पृशेत् तु कदाचित् तु स्पृष्टे त्वा वर्त्तनं पुनः।

हस्तपर्वणि वा कुर्यात् सर्वत्रैषविधिः स्मृतः॥ ९-२७३॥

अनामिका त्रिपर्वाणि कनिष्ठा मूलतो जपेत्।

१०३अ) मध्यमाया द्वयं मेरुरंगुष्ठायास्त्रयं तथा॥ ९-२७४॥

नकदाचित् स्पृशेन् मन्त्री सततं जपकर्मणि।

यथा शक्तिजपेन्मन्त्री सहस्त्रमयुतं तथा॥ ९-२७५॥

शतमष्टोत्तरं वापि जपान्ते शिरसिक्षिपेत्।

ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम।

शिवं कुरुष्व मे भद्रे यशोवीर्य च सर्वदा॥ ९-२७६॥

ग्रहणे स्थापने चैव पुजने विनिजोजयेत्।

अथ जपविधानम्॥

तथोक्तं कपिलपंचरात्रे॥

सुप्तः प्रवोधकालोथ मन्त्राणामभिधियते॥ ९-२७७॥

अग्निसोमात्मकामन्त्रा विज्ञया क्रुरसौम्ययाः।

कमणो वह्नितारााभ्यं विषत्प्रायसमीरिताः॥ ९-२७८॥

अग्नेयामनवः सौम्या भुयिष्ठेन्द्वमृताक्षराः।

आग्नेयां संप्रबुघ्यते प्राणे भवति दक्षिणे॥ ९-२७९॥

भागेन्यस्मित् स्थिते प्राणे सौम्यवोधं प्रयान्ति च।

नाडीद्वयगते प्राणे सर्ववोधं प्रयान्तिते॥ ९-२८०॥

प्रयच्छन्ति फलं सर्वे प्रवुद्वा मन्त्रिणः सदा।

यद्वा॥

प्राणापान समायुक्ता शिवशक्त्योस्तु मेलनम्॥ ९-२८१॥

प्रवोधकालो विज्ञेयः स्वापकालस्ततः पलः।

वामवाहौ यदा वायुर्दीर्घाणां जोजनं तदा॥ ९-२८२॥

दक्षिणस्यां यदा वायुस्तदा ह्रस्वानि योजितः।

उभयस्थो यदा वायुस्तदान्य द्वितयात्मकः॥ ९-२८३॥

संपुटीकृत्य मन्त्रेण नाता *? द्यात् सविंदुकान्।

पुनश्च सविसर्गांस्तात् क्षकारे केवलं जपेत्॥ ९-२८४॥

एवं जप्ता यदिष्ठश्चत् प्रवुद्धः शीघ्रसिद्धिदः।

इति सुप्तप्रवोधकालः॥

१०३ब्) अथातः संप्रवक्ष्यामि जपं मन्त्रस्य तत्त्वतः॥ ९-२८५॥

आदौ तु कुल्लुकां ध्यायेन् मन्त्रसिद्धि प्रदायिनीम्।

नाभिहृच्छिरदेशे तु मन्त्री नियतमानसः॥ ९-२८६॥

ध्यानं यथा॥

रक्तारक्तसरोजस्थां रक्ताङ्कारभूषिताम्।

रक्ताम्वरधरा देवीं विसतन्तु तनीयसीम्॥ ९-२८७॥

कामराजगतां सार्द्धं वेष्टने त्रयशोभिताम्।

सप्तसर्यनिभां भास्वत् भास्कराकारमंडलाम्॥ ९-२८८॥

एवं विचित्य प्रजपेदासनस्थो जीतेन्द्रियः।

एवमादौ कुल्लुकां ध्यात्वा तस्मामत्तोत्तरं शतं जप्त्वा पुनर्मूलमन्त्रं जपेत्॥

कुल्लुकायामन्त्रो यथा॥

एण वाहुं नमः पश्चान् मन्त्रोयं चतुरक्षरः॥ ९-२८९॥

ॐ हुं नमः॥

कुल्लुकां च ततो नत्वा मूला पूजां विधाय च।

गृह्णीयाद् दक्षिणे नाथ नववामेन संस्पृशेत्॥ ९-२९०॥

जपस्तु त्रिविधो ज्ञेयो वाचिकोपांशुमानसः।

नातिस्स्ष्ठां न चास्पष्टनाति द्रुतनिलंवितम्॥ ९-२९१॥

जपेन् मन्त्रमभिन्नं च ह्येकचित्तः समाहितः।

यद्यदुच्चरते मन्त्री स्पष्टशब्दयुतैः स्वरैः॥ ९-२९२॥

शनैरुच्चारयेन् मन्त्रं जपायज्ञश्च वाचिकः।

शनैरुच्चारयेन् मन्त्रमीषदोष्ठं प्रचालयेत्॥ ९-२९३॥

किंचि च्छ्रवणयोग्यः स्याद् उपांशुः सजपः स्मृतः।

धिपा यदक्षरश्रेणीं वरस्वमपरात्मिकाम्॥ ९-२९४॥

शब्दार्थचितनाभ्यासः स-उक्तो मानसो जपः।

उच्चैजे पादुपांशुर्यः ससहस्त्रगुणो भवेत्॥ ९-२९५॥

१०४अ) सहस्त्रगुणमुद्दिष्टस्तस्मादपि च मानसः।

ध्यायेत् तु मनसा मन्त्रं जिह्वोष्टौ न च चालयेत्॥ ९-२९६॥

नकंपयेच्छिरोग्रिवं दन्तान्नैव प्रकाशयेत्।

अराक्षरभेदेन सिद्धविद्याधरागणाः॥ ९-२९७॥

हरन्ति प्रकटं यस्मात् तस्माद् गुप्तं सदाकुरु।

आसनस्थो जपेत् सम्यङ्मत्त्रान्वै यत मानसः॥ ९-२९८॥

विंदुलीनं नमः कृत्वा नादमार्गे नियोजयेत्।

नादमार्गे विलीनं तु मनोनान्यत्र गच्छति॥ ९-२९९॥

प्राणायामं त्रयकृत्वा गायन्त्यादिन् जपेद् इति।

अनेनैव जपेद् यस्तु महापातकसंचयः॥ ९-३००॥

सकृदुच्चरिते नैव वक्षयं यात् पुपपातकम्।

इति॥

मालयाग्रथनं वक्ष्ये सर्वतन्त्रेषु गोपितम्॥ ९-३०१॥

कृतनित्य क्रिये नित्यं एतेषुक्तेषु मन्त्रवित्।

यथा कामं यथा लोभमक्षमानीय यत्नतः॥ ९-३०२॥

अन्योन्य समरूपाणि नातिस्थूलकृषानि वै।

कीटादिभिरदुष्टानि नजिर्णानि नवानि वै॥ ९-३०३॥

गव्यैस्तु पंचभिस्तानि प्रक्षाल्य च पृथक् पृथक्।

गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्॥ ९-३०४॥

पंचगव्यं विजानीयात् सर्वकर्मसुमन्त्रवित्।

पयोदधिघृतं क्षौद्रं शर्कराद्यैरनुक्रमात्॥ ९-३०५॥

पंचामृतं विजानियात् सर्वकर्मसुसाधकः।

ततो द्विजेन्द्रे पुण्यस्त्री निर्मितं ग्रंर्थिवर्जितम्॥ ९-३०६॥

त्रिगुणं त्रिगुणी कृत्य सूत्रं प्रक्षाल्य पूर्ववत्।

शुक्लं कृष्णं तथा रक्तं शातिवश्याभिचारके॥ ९-३०७॥

१०४ब्) सुत्रं संपादयेद् विप्रान् पट्टसूत्रमथापि वा।

अश्वत्थपत्त्रे नवके पद्माकारेण स्थापिते॥ ९-३०८॥

सूत्रं मणींश्चगधाभः क्षालितां स्मत्रनिक्षिपेत्।

तारं शक्तिमातृकां च सूत्रे चैव मणिष्वथ॥ ९-३०९॥

विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः।

होमकर्मण्ये शक्तश्चेद् द्विगुणं जपमाचरेत्॥ ९-३१०॥

मणिमेकैकमादाय सूत्रे वै योजयेत् ततः।

मुखं मुखे च संयोज्य पुच्छं पुच्छे च योजयेत्॥ ९-३११॥

गोपुच्छसदृशी कार्या यद्वा सर्पाकृतिः शुभा।

तत् सजातीयमेकं तु मरुत्वेनाग्रतो न्यसेत्॥ ९-३१२॥

एकैकं मणिमध्ये तु ब्रह्मग्रन्थिं च दापयेत्।

जपमालां विधायेत्थं ततः संस्कारमाचरेत्॥ ९-३१३॥

क्षालयेत् पंचगव्येन सद्योजातेन सज्जनैः।

मन्त्रो यथा॥

ॐ सद्योजातं प्रण्यामि सद्योजाताय वै नमः

भवे भेवेनाति भवे भजस्वं माभवोद्भवाय नमः

चंदनागुरुगंधाद्यैर्वामदेवेन घषयेत्॥

ॐ वामदेवाय नमो जुष्टाय नमो रुद्राय नमः कालाय
नमः कलविकरणाय नमो विकरणाय नमो वलप्रमथनाय
नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥

धूपयेत् तां अघोरेण लेपयेत् तत् पुरुषेण तु॥ ९-३१४॥

ॐ अघोरेभ्योथ घोरेभ्यो घोरघोरतरेभ्यः।

सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपेभ्यः॥ ९-३१५॥

ॐ तत् पुरुषाय विद्महे महादेवाय धीमहे तन्नो रुद्रप्रचोदयात्॥ ॥

१०५अ) मन्त्रयेत् पंचमे णैव प्रत्येकं च शतं शतम्।

ॐ ईशान सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति
ब्रह्मणोधिपति ब्रह्माणि वामेस्त्र सदाशिवाम्॥

सुमेरुपंचमे णैव ततो मन्त्रेण मन्त्रयेत्॥ ९-३१६॥

संस्कृत्यैवं वुधोमालां तत् प्राणात् स्थापयेत् ततः।

एवं कृत्वाक्षमालायां जपेन् मातृकया सुधीः॥ ९-३१७॥

मातृकामन्त्रभेदेभ्यः सर्वेमन्त्राः प्रजज्ञिरे।

अतः? सकलमन्त्राणां जपः कार्यान या स्त्रजा॥ ९-३१८॥

गुरुं संपूज्य तद्धस्ताद् गृह्णीयात् सर्वसिद्धये।

गायत्री जपेन केचिन् मालां ग्रन्थं ल्य मन्त्रकम्॥ ९-३१९॥

नहीत्थं ग्रथनं क्वापि मन्त्रशास्त्रे निरूपितम्।

अशुचिर्नस्पृशेदेनां करभ्रष्टां नकारयेत्॥ ९-३२०॥

अंगुष्ठस्थामक्षमालां चालयेन् मध्यमाग्रतः।

तर्जन्या नस्पृशेत् सेयं मुक्तिदो गणनक्रमः॥ ९-३२१॥

भुक्तो मुक्तौ तथा कृष्णौ मध्यमायां जपेत् सुधीः।

अंगुष्ठानामिकाभ्यां च जपेद् उत्तमकर्मणि॥ ९-३२२॥

तर्जन्यंगुष्ठसंयोगाद् विद्वेषोच्चाटना जपेः।

कनिष्ठाङ्गु संयोगाज्जपेन् मारणकर्मणि॥ ९-३२३॥

जपान्यं काले तां मालां पूजयित्वा तु गोपयेत्।

गुरुं प्रकाशयेद् विद्वान् मन्त्रं नैव प्रकाशयेत्॥ ९-३२४॥

अक्षमालां च मुद्रां च गुरोरेपि न दर्शयेत्।

भूतराक्षसवेतारां (ह्) सिद्धे गंधर्वचारणाः॥ ९-३२५॥

हंरन्ति प्रकटं तस्मात् तस्मागुप्तं जपेत् सुधीः।

जीर्णे सूत्रे पुनः सुत्युं ग्रथयित्वा शतं जपेत्॥ ९-३२६॥

१०५ब्) प्रतिष्ठायां विधिं देव श्रोतुमिच्छामि तत्त्वतः।

श्री-ईश्वर उवाच

शिल्पिनं पूजयेदादौ वस्त्रगंधानुलेपनैः॥ ९-३२७॥

श्रृष्टकालयेत् मालां विश्वस्थां स्वर्णरूपिणीम्।

यथाक्रमं यथातत्त्वं यथापूर्वयथोदितम्॥ ९-३२८॥

निर्विटंका च सा माला निर्मलाक्षतवर्जिता।

यथायोग्य वेधवती माला कुर्याद् विचक्षणः॥ ९-३२९॥

वर्णिनायै न या कार्या पंचगव्यत्र्यहं क्षिपेत्।

सूत्रं चापि चतुर्थैह्नि क्षालयेदस्त्रमन्त्रकैः॥ ९-३३०॥

समानवर्णसूत्राणां ग्रथयेद्धृदयानुना।

नम इति मन्त्रेण॥

सुवर्णादिगुणेवापि ग्रथयेत् साधकोत्तमः॥ ९-३३१॥

ब्रह्मग्रन्थि ततो दद्यान् नागपाशमथापि वा।

कवचेनावध्नीया मान संध्यामयोगतः॥ ९-३३२॥

कवचे न हुं मिति मन्त्रेण॥

सर्वशेषे ततो मेरुं सूत्रद्वयसमन्वितम्।

ग्रथयेत् प्रणवयोगेन वध्नीयात् साधकोत्तमः॥ ९-३३३॥

एवं निष्पाद्य देवेशि प्रतिष्ठां च समाचरेत्।

स्थण्डिले मण्डलं कृत्वा यथा भागविधिक्रमात्॥ ९-३३४॥

पूजयित्वा यथा न्यायमिष्टदेवमनुक्रमात्।

न्यासपूर्वं जपेन् मन्त्रं मष्टोत्तरसहस्रकम्॥ ९-३३५॥

जुहुयात् तद् दशांशेन यस्य देवस्य यत् प्रियम्।

ततो मण्डलमध्य तु तन्मालां स्थापयेद् बुधः॥ ९-३३६॥

अस्त्रमन्त्रं यथा न्यस्य मूलमन्त्रं ततो न्यसेत्।

अस्त्रमन्त्रं फडितिमन्त्रम्॥

अङ्गानि तानि विन्यस्य देवरूपं विचिन्तयेत्॥ ९-३३७॥

१०६अ) अभेदरूपमासाद्य मालां कुर्यात् तदात्मिकाम्।

ततो वलिं यथा न्यायं दद्याद् वै साधकोत्तमः॥ ९-३३८॥

एवं प्रतिष्ठामासाद्य मालायामिष्टदेवताम् (ः)।

आचार्यं पुजयेन् मन्त्री शिल्पिनं च यथाविधि॥ ९-३३९॥

नान्य मन्त्रं जपेन् तत्र यदीच्छेत् परमात्मनः।

इति माला प्रतिष्ठामन्त्रविधिः॥

अथ पुरश्चरणसामान्य धर्माः॥

मन्त्रं साधयमानस्तु त्रिसंध्य देवमर्चयेत्॥ ९-३४०॥

द्विसंध्यं एकसंध्यं वा नमन्त्रं केवलं जपेत्।

जपान्ते वा भवेत् पूजा पूजान्ते वा जपेन् मनुम्॥ ९-३४१॥

इति वचनात्॥

पूजा या आवश्यकत्वमिति॥

देवी चित्तगता कार्या कार्यं च हृदयस्थिरम्।

तत् तर्जप्ताम्नपानीयैः कुर्यात् पानादिभोजनम्॥ ९-३४२॥

नित्यं नैमित्तिकं कुर्यात् संगमं साधुभिः सह।

स्नायाच्च पंचगव्येत केवलामलकेन वा॥ ९-३४३॥

आज्येन दध्ना क्षीरेणतिलकल्केन वा कृतम्।

पुरश्चर्या विधौ तद्वत् स्नानं कुर्याद् विशुद्धये॥ ९-३४४॥

शक्तौ त्रिषवणस्नानमशक्तौ द्विसकृत् तथा।

अस्नातस्य फलं नास्ति न च तर्पयतः पित्रुन्॥ ९-३४५॥

अन्यानि काम्यकर्माणि तथा साधुसमागमम्।

स्त्री शूद्रपतित वात्य नास्तिकेतितभाषणम्॥ ९-३४६॥

असत्यभाषणं चोक्तिं कौटिल्यं परिवर्जयेत्।

त्यजेद् उष्णोदकस्नानं अनिवेदितभोजनम्॥ ९-३४७॥

शयित कुशशय्यायां शुचिवस्त्रधरः सदा।

प्रत्यहं क्षालये च्छय्यामेकाकीनिभयः स्वयेत्॥ ९-३४८॥

१०६ब्) श्रुतिस्मृतिविरोधेन जपं रात्रो विवर्जयेत्।

गुरवे दक्षिणां दद्याद् भोजनाच्छादनादिभिः॥ ९-३४९॥

गुरुसन्तोषमात्रेण सर्वसिद्धिर्भवेद्धुवम्।

गुरुमूलमिदं सर्वमित्याहुस्तत्र वेदिनः॥ ९-३५०॥

एकग्राम स्थितो नित्यं गत्वा वन्दे तु वै गुरुम्।

गुरुलेव परंब्रह्मं तस्मादादौ तमर्च्चयेत्॥ ९-३५१॥

मिष्टं नानाविधं भक्ष्यं भुजीतवंधुभिः सह।

ततः॥

प्रातः कारे समारभ्य जपेन् मध्यन्दिनावधि॥ ९-३५२॥

इत्यादौ मध्यं दिनावधीतिननियमः॥

पुनरवधिमात्रवोधकमिदम्॥

अन्यथा नियमे सति समाप्ति दिवसे कदाचिज्जपसंख्ययात्
पुनत्वान्नियमहान्यापत्तेरिति भावः॥

मनः संहृत्य विषयान् मन्त्रार्थगतमानसः।

नद्रुतं नविलंवितं जपेन् मौक्तिकपंक्तिवत्॥ ९-३५३॥

जपः स्याद् अक्षरावृत्ति मानसोपांशुवाचिकः।

धियायदक्षरश्रेणां वर्णस्वरपदात्मिकाम्॥ ९-३५४॥

उच्चरेदर्थमुद्दिश्य मानसः * जपः स्मृतः।

जिह्वोष्टौ चालयेत् किंचिद् देवतागतमानसः॥ ९-३५५॥

किंचिच्छ्रवणयोग्यं स्याद् उपांशुः सजपः स्मृतः।

मन्त्रमुच्चारयेद् वाचा वाचकः सजपः स्मृतः॥ ९-३५६॥

वाचिकाल्लक्षगुणित उपांशुः परिकीर्त्तितः।

उपांशोः कोटिगुणितं मानसेषु प्रश्नस्यते॥ ९-३५७॥

कृत्वा जपं पुरा चैवं तेजोरूपं समर्चयेत्।

देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः॥ ९-३५८॥

१०७अ) शक्तिविषय वामहस्ते जपं समर्पयेत्।

तथा च॥

एवं जपं पुरो कृत्या गंधाक्षतकुशोदकैः॥ ९-३५९॥

जपं समर्पयेद् देव्या वामहस्ते विचक्षण इति वचनात्।

नन्यूनं चाधिकं वापि जपं कुर्याद् दिने दिने॥ ९-३६०॥

यदि कुर्यात् प्रमादा तु नेष्टं फलमवाप्नुयात्।

जपा ते प्रत्यहं मन्त्री होमयेत् तु दशांसतः॥ ९-३६१॥

तर्पणं चाभिषेकं च तद् दशांशसतोमुने।

प्रत्यहं भोजयेद् विप्रान् न्यूनाधिकप्रशान्तये॥ ९-३६२॥

अथवा सर्वमूर्त्तौ च होमाधिकमथाचरेत्।

हौमाद्यशक्तौ तु॥

यद्यदङ्गं भवेद् भंगं तत् संख्या द्विगुणो जपः॥ ९-३६३॥

होमाभावे जपः कार्यो होमसंख्या चतुर्गुणः।

तथा च गौतमीये॥

द्विप्राणां क्षत्रियाणां च समसंख्या च गुणः स्मृतः॥ ९-३६४॥

वैश्यानां वसुसंख्या कमेषां स्त्रीणामयं विधिः।

यं वर्णमाश्रितः शूद्रः स च तस्य विधिं स्मरेत्॥ ९-३६५॥

इति यद्वचनं तद् वैष्णवे विषयम्॥

तथा च योगिनीहृदये।

होमर्कमन्यसक्तानां विप्राणा द्विगुणो जपः।

इतरेषां तु वर्णानां त्रिगुणादि समन्वित॥ ९-३६६॥

इति सर्वत्रविषयम्॥

एतेन शूद्रस्यापि होमाधिकार इति तन्न॥

प्रणवस्य जपाद्धोमात् सालिग्रामशिलार्चनात्।

ब्रह्मणी गमनाश्चैव शूद्रश्*?डां लतां व्रजेत्॥ ९-३६७॥

तस्या ब्राह्मणक्षत्त्रिय वैश्यानामेव होमाधिकारः।

शूद्रस्तु होमानुकल्पद्विगुणजपं कुयात्॥

१०७ब्) तथा च नारदपंचरात्रे॥

त्रयाणामेववर्णानां होमे विधिरुदीरितः।

शूद्रस्तु तत् फलाकांक्षी होमात् तु द्विगुणं जपेत्॥ ९-३६८॥

तथा च स्मृतिः॥

अमन्त्रस्य तु शुद्रस्य विप्रो मन्त्रेण गृह्यत।

इति वचनात्॥

होमस्तु ब्रह्मण द्वारै व कर्त्तव्यः॥

अन्यथा विनिगमका भावात्॥

शूद्रस्यापि सोमयागा वधिकारापत्तेः॥

तथा च वचनमिदम्॥

ब्रह्मणादिवर्णत्रयविषयम्॥

तथा च स्त्रीणामपि होमनाधिकारः॥

एवं च॥

लाजा त्रिमधुरोपेतै होमकन्या प्रयच्छति॥ ९-३६९॥

अणेन विधिनाकन्या वरमाप्नोति वांच्छितमिति वचनस्य विवाह प्रकरणीयत्याद्य जमानपत्नीवत् प्रेक्षणमात्रविधानयकत्वाच्च स्त्रीणां होमेपि ब्रह्मणद्वारै व इत्मेषां तु वर्णानामिति वचनं सर्ववर्णविषयमिति एतेन सुद्रस्यापि होमाधिकार इति केचित्॥

तत् तुच्छं एतद् वचनार्था वोधात्।

एतद् वचनस्य सूद्रहोमविधाय कत्वा? भावात्।

सूद्रे तरविषये त्वे इत रेखामिति वहुवचनामुपत्तेस्तस्मात्
सर्ववर्णानुकल्पयेनमेतत्॥

ननुजपान्ते प्रत्यंहमन्त्री इति वचन मन्त्रि स्वेनोपदाना च्छुद्रस्यापि
मान्त्रिके त्वा द्धौमाधिकारोपत्तेरिति वेत्।

स्त्री शूद्रानाधियतामिति विशेषश्रवणाद् विद्याप्रयुक्ते कल्पनात्।

१०८अ) न च स्थपत्यधिकरणे विरोध इति वाच्यम्।

विधेराधारस्य प्रापकत्वात्॥

नुचाधानानुपत्तिः॥

अस्य शुद्रस्य विप्रो मन्त्रेण गृह्यत इति वचनस्य वलवत्त्वात्॥

न च प्रकरणनियन्त्रितेति वाच्यम्॥

सामान्यवाधका भावात्।

शूद्राद्यरूपत्तेश्च तस्मलौकिकादिकरण न्यायेन सर्वविषयमिदम्॥

तच्च शूद्राणां व्यश्रकुंडमिति वचनं तन्न॥

शूद्रस्य साक्षात्कत्वाधिदायकं ब्राह्मणकर्तृत्वे नैव पत्तेः॥ न च॥

मोक्षशक्तौ द्विजातीनां मनुकल्पो विधीयते।

इति॥ स्मृति वचनान् मोक्षशक्तस्यैवानुकल्पेधिकारा नास्ति कथं तस्य
होमानुकल्पं विधानमिति वाच्यम्॥

शुद्रस्यानुकल्पा भावात्॥

ब्राह्मण द्वारा होमादिविधानात्॥

तस्मात् स्त्रीशुद्राणां ब्राह्मणद्वारा होम विधिरिति केचित्॥

ननु पुरश्चरणादौ फलश्रवणात् काम्यमेव तथा च यतीनां कथमत्र समावेशः तथा श्रीभगवद्गीतासु॥

काम्यानां कर्मणा न्यासं न्यासं कवयोविदुः॥

इति वचनात्॥

तेषां काम्यकर्माधिकारा भावात्।

न तेषां पुरश्चरणाधिकार इति पुरश्चरणस्तावद् विधी भवति पंचाङ्गः केवलजपश्च यतीनां केवलजपपुरश्चरणेधिकारः नविशिष्ठ इत्यर्थः वस्तुतस्तेषां पापक्षयसाधनतयो जपेधिकारात्॥

१०८ब्) क्ष मोक्षार्थि तया जपादौ प्रवृत्तिर्बोधका भावात्।

प्रवृत्तिश्च वेदान्तश्रवण प्राणायामादौ तद्बोधकश्रुतिरिति द्विक्॥

होमाशक्तौ तु सर्वेषां द्वि शोजपः॥

तथा च योगिनीहृदये॥

होमार्थं द्विगुणं वापि जपन्मन्त्रमनन्यधीः॥ ९-३७०॥

नैकवासो जपेन् मन्त्रं वहुवासस्तु संयुतः।

पतितानामन्त्यजानां दर्शने भाषणे श्रुते॥ ९-३७१॥

क्षुतेधो वायुगमने जृम्भनेजपमुत्सृजेत्।

तथाचम्य च तत् प्राप्तौ प्राणायामं षडंगकम्॥ ९-३७२॥

कृत्वा सम्यग् जपे च्छेषं यद् वा सूर्यादिदर्शनम्।

आदि पदाद्वह्निं ब्राह्मणं च॥

एवं सिद्धमनुर्मन्त्री साधयेत् सकलेप्सितान्॥ ९-३७३॥

अथवान्यप्रकारेण पुरश्चरणमिष्यते।

ग्रहणे कस्य चेन्दोर्वा शुचिः पूर्वमुपाषितः॥ ९-३७४॥

नद्यां समुद्रगामिन्यां नाभिमात्रोदकस्थितः।

स्पर्शाद् विमुक्तिपर्यन्तं जपेन् मन्त्रमनन्यधीः॥ ९-३७५॥

नद्याभावे॥

यद् वा पुण्योदके स्नात्वा शुचिः पूर्वमुपोषितः।

ग्रहणादिविमोक्षान्तं जपेन् मन्त्रमनन्यधीः॥ ९-३७६॥

दृष्ट्वा स्नात्वा ससंकल्पो विमोक्षान्तं जपं चरेत्।

इति जपन्मन्त्रसिद्धिर्भवत्येव नसंशयः।

श्रद्धदानावरोधेन यदि जाप्यं त्यजेन्नरः॥ ९-३७७॥

सभवेद् देवता द्रोही पित्रूत्सप्तनयत्यधः।

१०९अ) इति सनत्कुमालसंहिताया वचनं आरब्ध महापुरश्चणमध्यपतित
श्राद्धनिषेधपरम्।

योगिनिहृदये॥

कल्पोक्तविधिनामत्री कुर्याद्धौमं समाहितः॥ ९-३७८॥

अथवा तद् दशांशेन होमाङ्गाश्च समाचरेत्।

ननुपंचाङ्गोपासनं लोके पुरश्चरणमिष्यते॥ ९-३७९॥

इति वचनात् पुरश्चलणपद्जपहोमतर्पणाभिषेक ब्रह्मणभोजनानीति पंचाङ्गपरम्॥

ग्रसनादौ तु॥

सूर्योदयं समारभ्य यावत् सूर्योदयावधि।

इत्याद्येकवाक्यतावलात् पुरश्चरणपदं जपमात्रवोधकमिति॥

कथं होमादि प्रसंग इति चेत्॥

तावद् यज्ञाधिकं कार्यं ग्रहणान्ते शुचिः पुमान्॥

इति वचनात्॥

न च पुरश्चरणस्य पंचाङ्गवोधकत्वात्॥

सर्वस्य व तद् वोधकत्वं स्याति वाच्यम्।

अत्र विशेषो पादान्तपद् वै यक्यापत्तैः॥

ग्रहण पुरश्चरणे विधानं तु प्रधानतुल्यताख्यापनाय एते न पंचाङ्गस्वरूपे कृते मोक्षेप्यधिकार इति प्रकाशितं तस्मात् तयोरकरणे केवलजपमात्राङ्गपुरश्चरणेनाधिकार इति सर्वजनसिद्धान्तः॥

अथवज्ये परां सिद्धिं श्मशाने वीरसाधनम्॥ ९-३८०॥

पूर्वोक्तद्रव्यमाहृत्य श्मशाने चोपविश्य च न्यासादिकं तु सकलं रक्षार्थं पुर्ववच्चरेत्॥

आम्मनः परितः पश्चाद् यजे देता डिशवादितः शिवादितः ईशानोदितः॥

१०९ब) कारभैरवनामानं महाभैरवसंज्ञकम्।

वटुभैरव भैरवौ माषभक्तैवलिहरेत्॥ ९-३८१॥

ततः पंचोपचारेण पूरतो देवतां यजेत्।

निमीलं चक्षुषी पश्चाद् देवं ध्यायेन् मनुं जपेत्॥ ९-३८२॥

यद्य सज्य भयं भयं कर्णनेत्रा वस्त्रेणवंधयेत्।

अस्त्रप्रहारनेत्रे वा कर्णे वा धैर्यमावहेत्।

ततोर्द्धरात्रिपर्यन्तं यदि किंचिन् नलभ्यते॥ ९-३८३॥

जयदुर्गानुनाचार्घ्यं ते नैव सर्षपाल्क्षिपेत्।

मन्त्रस्तु॥

ॐ दुर्गे २ रक्षणी स्वाहा॥

पुर्ववर्त्तिरमुत्क्षिप्य गत्वा सप्तपदान्यथा॥ ९-३८४॥

देवं तत्रापि संपूज्य प्रजपेन् मनुवर्यकम्।

निर्भयेत् सजपेद् यावत् सिद्धिं वा गुव्यते नरः॥ ९-३८५॥

ततः सत्यं कारयित्वा प्रार्थयेद्वरमुत्तमम्।

यदि देवः प्रार्थयते नरकुंजलमेव वा॥ ९-३८६॥

दिनान्तरे तु दास्यामि स्वीकृत्य स्वगृहं व्रजेत्।

परेह्नि पूर्ववद् दद्यात् पिष्ठेन नरकुंजरान्॥ ९-३८७॥

अन्यत् सर्वं यथा पूर्वं कल्पयेत् साधकोत्तमः।

अथवान्य प्रकारेण पुरश्चरणमिष्यते॥ ९-३८८॥

ग्रहणे कस्य चन्दोर्वेति नद्यां समुद्रगामिन्यामित्यादि पूर्वोक्तम्॥

द्विगुणं वा जपेन् मन्त्रं शेषं पूर्ववदाचरेत्।

तदन्ते मन्त्रसिद्धार्थं गुरुं संपूज्य पूजयेत्॥ ९-३८९॥

ततःश्च मन्त्रसिद्धिः स्याद् देवता च प्रसीदति।

अथवा देवता रूपं गुरुं भक्त्या प्रदोषयेत्॥ ९-३९०॥

११०अ) पुरश्चरणहीतोपि मन्त्रसिद्धो न संशयः।

अथ प्रयोगं वक्ष्यामि पुरश्चरणकर्मणः॥ ९-३९१॥

पुर्वदिने निरामिषमेकवामं भित्का (?)परदिने नद्यादौ गत्वा स्नानादिकं कृत्वा जलादुत्थाय धौते वाससीपरिधायाचम्य श्री-अमुकदेवताया यदक्षरस्य मन्त्रस्य मन्त्रस्य पुरश्चरणसिद्धये॥

मये यं गृह्यते भूमिर्मन्त्रोयं सिद्ध्यतामिति।

नदीपर्वतादौ यथेच्छया ग्रामान्नगराच्च क्रोशमितं क्रोशयुगमितं वा दूरं गत्वा पुरश्चरणयोग्यस्थलं गृहीत्वा क्षीरवृक्षोद्भवान्वितस्तिपरिमिता नष्टा कीलकान् गृहित्वास्त्रमन्त्रेण प्रत्येकमेकादशवारं षड्वारं वाभिमन्त्र्य तेषु चास्त्रं संपूज्य गृहीतक्षेत्त्रमध्ये क्षेत्रपालं संपूज्यतस्मैमाषभक्तवलिं दद्यात्॥

यथा क्षेत्रपालस्य मन्त्रस्य ब्राह्म-ऋषिः गायत्रीच्छंदः क्षेत्रपालो देवता पुरश्चरणरक्षार्थे विनियोगः॥

इति कराङ्गन्यासौ कृत्वा धारणत्त्यादिपिठात् संपुज्य वामा ज्येष्ठा रौद्री काली कलवीकरणी वलप्रमथनी सर्वभूतदमनी मनोन्मनी पीठशक्तिः पूर्वादिके सरे च मध्ये च संपूज्य॥

ॐ नमो भगवते सकलगुणात्मशक्तियुक्ता यानं ताय योगपीठात्मने नम

इति पीठसंपूज्यध्यायेत्॥

यथा॥

नीलांजनाद्रिनिभमूर्ध्वपि शंगकेशं

वृत्तोग्रलोचनमुपा तु कपालशूलम्॥

आशांवरं तुंगभूषणमुद्रग्रदंष्ट्रं

क्षेत्रेण मद्भुततनुं प्रणमामि देवम्॥ ९-३९२॥

११०ब्) इति ध्यात्वा॥

ॐ क्षीँ क्षँत्त्रपालाय नम इति गधादिभिः पूजयेत्॥

केसरेष्वंगानि पूजयेत्॥

पत्रेषु अनिलाग्निकेशे कलालघंटा रवमहाकोपपिशिता
शनपिंगलाक्षोर्ध्वकेशा नर्चयेत्॥

इन्द्रादीन् तद्बहिस्तेषामस्त्राणि पूजयेत्॥

ततो गंधादिभिः संपूज्य माषभक्तवलिः सपरिवाराय त्रपालायनम इति
सोपदंशं वृहत्पिन्त्रं माषभक्तवलिं तत् करकपाले दद्यात्॥

ततोष्टदिक्षुवलिं दद्याद् अनेन॥

ये रौद्रा रौद्रकर्माणो रौद्रस्थान निवासिनः।

मातरोप्यग्ररूपाश्च गणानामधिपाश्च ये॥ ९-३९३॥

विघ्नभूतास्तथा चान्ये दिग्विदिक्षुसमाश्रिताः।

सर्वे ते प्रीतमानसः प्रीत्या गृह्वन्त्विमं वलिमित्यष्टदिक्षुवलिं दद्यात्॥

ततः परिगृहीतक्षेत्रस्य पूर्वसीमां गत्वा पूवादिक्रमेणाष्टदिक्षु कीलका नारोपयेदनैन॥

ये चात्र विघ्नकर्त्तारो दिविभुव्यन्तरिक्षगाः॥ ९-३९४॥

विघ्नभूतश्च ये चान्ये मम मन्त्रस्य सिद्धिषु।

मयै तत् कीलितं क्षत्रं परित्यज्य विदूरतः॥ ९-३९५॥

अर्पसर्पं तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे।

इति पठन् अष्टदिक्षुकीलकानारोपयेत्।

ततस्तेषु कीलकेषु पूर्वादिक्रमेणें द्रादीनावाज्यतन्नाममन्त्रैरेव संपूज्यैषमाषभक्तवलिं रिंद्राय नम इति पूर्वादिक्रमेण माषभक्तवलिं दद्यात्॥

पुवलश्चरण पूर्वतृतीयदिवसे हविष्यान्नमेकवारं भुक्त्या ग्रिमदिवसे प्रातः स्नात्वा मन्त्रसिद्धि प्रतिवंधकज्ञताज्ञत

१११अ) कपापक्षयार्थमयुतादिगायत्री जपप्रायश्चित्तं विधाय भोजना च्छादनादिभि ब्राह्मणान् सन्तोष्य वहुवस्त्रालंकारादिभि गुरुं संपूज्य सुप्रीतं कृत्वा तदनुज्ञां गृहीत्वा तद् दिने हविष्याशीरोत्रौ कुशशय्यायां शयनं कुर्यात्॥

ततो गुरोरसंनिधाने मनसैवगुरोराज्ञां गृह्णीयात्॥

ततो ब्राह्मे मूहूर्त्ते उत्थाय प्रातः कृत्यं कृत्वा स्नात्वा नित्य कृत्यं समाप्यकुटीद्वारमागत्याचम्य दिक्पतीन्नत्वा प्राङ्मुखस्तिलकुशजलान्यादाय ॐ अद्यत्यादि अमुकगोत्रः श्री- अमुकशर्मामुकदेवताय यदक्षरमन्त्रस्य सिद्धिकामोद्यारभ्यामुकमन्त्रस्य यत् संख्या जप तद् दशांश तन् मन्त्रं करणकहोमदृशांश तन् मन्त्रकरणतर्पण तर्पणदशांशाक तन् मन्त्रकरणकाभिषेक दशांश ब्राह्मनभोजन रूपपुरश्चरणमहं करिष्ये॥

केषांचिन् मते जपदशाशे नैव होमतर्पणमार्जनानि देवता चिंतनमधिकं ब्राह्मनभोजन स्थाने इति विशेषः॥

यत्र होमोदि संख्या विसेष्योक्ता तथैव होमादिकमिति यत्र विशिष्यसंख्यानोक्ता तत्राष्टसहस्राणि संख्या स्यात्॥

तथचोक्तं वाराहीतन्त्रे॥

येषां जपे च होमे च संख्या नोक्ता मनीषिभिः॥ ९-३९६॥

तेषां मष्टसहस्राणि संख्यास्याज्जपहोमयोः।

सहस्रमष्टौ जुहुयाल्लक्षयाप्ये प्रकीर्तयेद् इत्युत्तरदले पाठः॥

१११ब्) तदुक्तं पूर्णापद्धतौ॥

संख्व्यानुक्तौ शतं साष्टं सहस्त्रं वा जपादिषु॥ ९-३९७॥

कृतांजलिः॥

अमुकमत्रस्यामुक-ऋषिः अमुकः च्छंदः अमुकदेवता अमुकवीजं अमुकाशक्तिः पुरश्चरण जपे विनियोगः॥

इति कुशाक्षतजले संकल्पानन्तरं कुर्यात्॥

ततः कुटीनिकटे सामान्यार्घं कृत्वा द्वारदेवतां संपूज्य गृहं प्रविश्याघ्यं जलेन गृहं प्रोक्ष्य रक्तकंवलासनमास्तीर्य तदुपर्युपविश्य शिवस्य संनिधानं अग्नेर्विष्णुर्वा सूर्यस्य वा गुरोर्वा प्रदीपस्य संनिधानं प्रकल्प्य पीठस्याग्निकोणेषु पूर्णकुंभचतुष्टयं स्थापयित्वा तेषु क्रमेण गणेशसरस्वती दुर्गा क्षेत्रपालान् संपूज्य यथोक्तप्रकारेणेष्टदेवतां संपूज्य होमान्तं कर्मसमाप्य वलिं दद्यात्॥

तद्यथा ये रौद्रा रौद्रकर्माण इति पठित्वाष्टदिक्षुवलिं दत्त्वा भूतवलिं दद्यात्॥

यथा॥

भूतानि यानी ह्वसन्ति भूतले वलिं गृहीत्वा विधिवत् प्रयुक्तम्॥
सन्तोषमासाद्य व्रजन्तु सर्वे क्षमन्तु तान्यत्र नमोस्तुतेभ्यः॥

ततः पूजां समाप्य पुष्पमाघ्राय ह्त्यं कजे देवतां मानसैरुपचारैराराध्य कराङ्गन्यासौ कृत्वा प्राणायामत्रयं कृत्वा यथा शक्ति जपेत्॥

मन्त्रस्य श्रोत्रमुखहृदयनेत्राणि ज्ञात्वा जपेत्॥

तदुक्तं विशुद्धे श्वरतन्त्रे॥

मन्त्रस्य प्रणवः श्रोत्रं मुखं रेफः प्रकीर्त्तितम्।

स्वराश्च चक्षुषी ज्ञेया मन्त्रविद्भिरनन्तरम्॥ ९-३९८॥

अतिरिक्ताश्च ये वर्णा हृदयं परिकीर्त्तितम्।

जपस्थानमाह॥

पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम्॥ ९-३९९॥

तीर्थप्रदेशाः सिन्धुनां संगमः पवनं वनम्।

उद्यानानिविविक्तानि विल्वमूलं तटं गिरेः॥ ९-४००॥

तुलसी काननं गोष्ठं वृषशून्यः शिवालयेः।

अश्वत्थामलकीमूलं गोशालाजलमध्यतः॥ ९-४०१॥

देवतायतनं कुलं समुद्रस्य निजं गृहम्।

गुरूणां सनिधानं च चित्तैकाग्रस्थलं तथा॥ ९-४०२॥

एतज्जपश्च प्रातराखा कामवीजं कम्॥

पगे ११२ इस् मिस्सिन्ग्

११३अ) श्रीवीजं चापि निक्षिप्य जपेन् मन्त्रं तु सिद्धये।

हृल्लेखा ह्रीँ कामवीजं क्लीँ॥

श्रीवीजं श्री॥

ह्रीँ क्लीँ श्रीँ इति वीजत्रयं मन्त्रादौ दत्त्वा जपेत्॥

तारं संपुटितं वाथ दुष्टमन्त्रोपि सिद्धति॥ ९-४०३॥

तारः प्रणवः इति संहितायाम्॥

अथारिमन्त्रत्यागः॥

शुचिः समाहितो भूत्वा ज्यारभेत् तु शुभे दिने।

अशेषदुःखनाशाय दैशिकः प्रवरोविधिम्॥ ९-४०४॥

तत्रादौ भवने कुंभं स्थाप्य दीक्षाविधिक्रमात्।

मंडले स्थापयेद् विद्वान् पुरयेत् तं शुभैर्जलैः॥ ९-४०५॥

विलोमे मन्त्रपाठेन तत्रावाह्य तु देवताम्।

सकलीकृत्य संहृत्य चाष्टाङ्गावरणं यजेत्॥ ९-४०६ ॥

एवं सावरणान्निष्ठा मन्त्रीमन्त्रस्य देवताम्।

हुत्वा विलोममन्त्रेण सर्पिषा गोरपि द्विजः॥ ९-४०७॥

ततो यथावद् उन्धा?न्नैर्दैवताभ्यो वलिं हरेत्।

विदिक्षुदिक्षु च तथा वक्ष्यमाणैर्मनुक्रमैः॥ ९-४०८॥

आयाहीन्द्रसुराधीश शतमन्योशचीपते।

नमस्तुभ्यं गृहाणे मं पुष्पधुपादिकं वलिम्॥ ९-४०९॥

आया हि तेजसां नाथ हव्यवाहवर प्रदे।

गृहाण पुष्पधूपादि वलिमेनं सुपूजितम्॥ ९-४१०॥

ऐतराजसमा या हि भिन्नांजनसमद्युते।

वलिं दत्तं गृहाणे मंसुप्रीतो वरदा भव॥ ९-४११॥

नमस्ते रक्षसां नाथ निर्ऋते त्वमिह गतः।

गृहाणवलिपूजादि मया भक्त्या निवेदितम्॥ ९-४१२॥

एहि पश्चिमदिक्पाल जलनाथनमोस्तु ते।

भक्त्या निवेदिता पूजां गृहीत्वा प्रीतिमाप्नु हि॥ ९-४१३॥

प्रभंजन प्राणपते त्वमेहि सपरिच्छदः।

मया प्रजुष्टं विधिवद्गुहाणवलिमादरात्॥ ९-४१४॥

कुवेरतारकाधीशौ आगच्छत्तां सुरोत्तमौ।

पुष्पधूपादिभिः प्रीतौ भवेतां वरदौममः॥ ९-४१५॥

ईशत्वमेव भगवन् सर्वविद्याश्रय प्रभो।

पूजितः पुषधूपाद्यैः प्रीतो भवति भूतये॥ ९-४१६॥

आया हि सर्वभूतानां नाथब्रह्मन् समार्चनम्।

गृहाण सर्वविघ्नान् मे निवर्त्तयनमोस्तु ते॥ ९-४१७॥

आगच्छवरदा भ्यक्त विष्णो विश्वस्य नायकः।

पुजितः परया भक्त्या भवत्वं सुखदो मम॥ ९-४१८॥

ततः सपरिवारांश्च पूजयेन् मन्त्रदेवताम्।

मन्त्रेण विपरीतेन पुष्पदीपोपचारकैः॥ ९-४१९॥

ततस्तु प्रार्थयेद् विद्वान् पूजितां मन्त्रदेवताम्।

११३ब्) अनुकुलं समालोच्य मया च वलवुद्धिना॥ ९-४२०॥

यदुपात्रं पुजितं च प्राभो मन्त्रस्वरूपकः।

तेन मे मनसः क्षोभमशेषं विनिवर्त्तय॥ ९-४२१॥

पापं प्रतिहतं भूयाद् भूयः श्रेयः सनातन।

ततो नु मम कल्याणं पारकी भक्तिरेव ते॥ ९-४२२॥

इति संप्राथ्य मन्त्रेशं पत्त्रे मन्त्रं विलोमतः।

लिखित्वामलकर्प्पुर चंदनेन समर्चयेत्॥ ९-४२३॥

कलशोपरि संस्थाप्य भक्त्या परमयायुतः।

तत् पत्रं मतिमान् पश्चाद् वद्धा निजशिरस्यथ॥ ९-४२४॥

स्नायात् पूजितकुंभस्थ तोयैर्मन्त्रमयैः शुभैः।

पुनश्चान्येन तोयेन कुंभमापूर्यसंयतः॥ ९-४२५॥

तन्मध्ये मन्त्रपत्रं च निक्षिप्याथ प्रपूजयेत्।

तं कुंभं निम्नगातीर्थजलाश्रये विनिक्षिपेत्॥ ९-४२६॥

ततोपि विप्रान् संमन्त्र्य यथा शक्त्या प्रभोजयेत्।

चिन्तितो दुष्टमन्त्रोपि स्थानस्थः फलदो न हि॥ ९-४२७॥

इत्थं कृत विधानस्य साधकस्य यथाक्रमम्।

भवत्येव न संदेहः क्रमाच्चित्तप्रसंनता।

जायते तीवसंपन्नो वर्त्तते स्वकुलं क्रमात्॥ ९-४२८॥

इत्यारिमन्त्रत्यागविधिः॥

इति श्रीयदुनाथचक्रवर्त्ति विरचिता यामागमकल्पलतायां द्वितीयः पल्लवः॥
२॥

श्रीरामाय नमः

मन्त्रोद्धारं प्रवक्ष्यामि सर्वतन्त्रानुसारतः।

यं जप्त्वा मन्त्रिणः सर्वे वांच्छितं फलमाप्नुयुः॥ १०-१॥

तत्र प्रथमतो धर्मार्थकाममोक्षाद्यखिलपुरुषार्थसं पादकं श्रीरघुनाथमन्त्रं निरुपयामि॥

तथा चोक्तं वसिष्टं संहितायाम्।

विनायकं रघुश्रेष्ठं वन्दे व्याख्यालसत्करम्।

वसिष्टवामदेवादि ऋषिभिः परिवारितम्॥ १०-२॥

कृष्णद्वैपायनं व्यासं गुरुं सत्यवतीसुतम्।

समाधिस्थं मुनिं शान्तं प्रसंनादित्य तेजसम्॥ १०-३॥

गंगातीरे महापुण्ये समासीनं तपोनिधिम्।

शौनकः परिपप्रच्छ साष्टाङ्गप्रणिपत्य च॥ १०-४॥

श्रीशौनक उवाच

अयि प्रसादसमुखकुरुष्वमयिमानसम्।

त्वत् प्रसादान् महामन्त्रा विहिता वहवो मया॥ १०-५॥

करुणारसपूर्णाभ्यां लोचनाभ्यां विलोकये।

११४अ) सच्चिदानन्दमात्मानं ज्ञातवान् ब्रह्मशाश्वतम्॥ १०-६॥

इन्द्रानीं श्रोतुमिच्छामि मन्त्रं साङ्गं सहार्चनम्।

रामात्मनावतीर्णस्य विष्णोरमिततेजसः॥ १०-७॥

व्रुहि मे भुगवन् सर्वं श्रोतुं योगोत्म्यहं यदि।

असौभाग्येन लोको यं दारिद्र्येण च पीडितः॥ १०-८॥

येन सौभाग्यमतुलं महदैश्वर्यसंभवम्।

शास्त्रज्ञानं कवित्वं च सर्वज्ञत्वं लभेन्नरः॥ १०-९॥

श्रीव्यास उवाच

साधुवृष्टं त्वया ब्रह्मन् कथये सकलं तव।

ब्रह्मणा कथितं पूर्वं वसिष्टाय महात्मने॥ १०-१०॥

वसिष्ठोपि स्वपौत्राय मत्पित्रे दत्तवान् मनुम्।

प्रसंनहृदयं शुद्धः पिता मे करुणानिधिः॥ १०-११॥

कुरुक्ष्त्रे महापुण्ये पर्वणि दत्तवान्॥

मया च साधितो मन्त्रो जपहोमार्चनादिभिः।

दुतः पूर्वोमया नोक्तो मन्त्रराजस्तु कस्यचित्॥ १०-१२॥

एवं परं पराप्रोक्तं भक्त्या मन्त्रं श्रृणुष्व मे।

अयोग्यायनदातव्यो मन्त्रराजस्त्वया मुने॥ १०-१३॥

यत्नेन गोपयत्वं च रहस्यं श्रीप्रसिद्धिदम्।

अलसं मलिनं क्लिष्टं दंभलोभसमन्वितम्॥ १०-१४॥

दरिद्रं रोगिणं क्रुद्धं रागिनं भोगलालसम्।

असुयामत्सरग्रस्तं शठं परुषवादिनम्॥ १०-१५॥

अन्यायोपार्जितधनं परदाररतं सदा।

विदुषां वैरिणं नित्यमज्ञं पंडितमानिनम्॥ १०-१६॥

भ्रष्टव्रतं कवृत्तिं पिशुनं दुष्टमानसम्।

वह्वाशनं क्रुरचेष्टमग्रगण्यं दुरात्मनम्॥ १०-१७॥

एतैर्दोषैर्विहीनतं शिष्यत्वेन प्रकल्पयेत्।

गृहणीयाद्यदि तद् दोषं प्रायोगुरुमपि स्पृशेत्॥ १०-१८॥

अमात्यदोषो राजानं जाया दोषापतिं यथा।

तथा शिष्य कृतो दोषो गुरुं प्राप्नोति निश्चितम्॥ १०-१९॥

तस्माच्छिष्यं गुरुर्नित्यं परीक्ष्य तु परिग्रहेत्।

कायेन मनसा वाचा गुरुशुश्रुषणेरतम्॥ १०-२०॥

अस्तेयवृत्तिमास्तिक्यं सदा मोक्षकृतोद्यमम्।

ब्रह्मचर्यरतं नित्यं सत्यव्रतमकल्मष॥ १०-२१॥

प्रसंनहृदयं शुद्धमशठं विलाशयम्।

परोपकारनिरभं परार्थे विगतस्पृहम्॥ १०-२२॥

सुचित्तवित्तदेहैश्च परितोषकरं गुरोः।

इद्दग्विधाय शिष्याय मन्त्रं दद्यात् तु नान्यथा॥ १०-२३॥

यदन्यथा वदेत् तस्मिन् देवता शापदा भवेत्।

११४ब्) माधव यस्य या भक्तिः तथा कार्यानिजे गुरौ॥ १०-२४॥

मन्त्रोद्धारमाह॥

मान्तान्तं विन्दुसंयुक्तं नारायणविभूषितम्।

तेजमेतत् समुद्धृत्य विंदुहीनं पुनश्च तत्॥ १०-२५॥

मान्तान्तं मां तोयकारः तस्यां तं रेफं विंदुरनुस्वारस्तद्युक्तं
नारायणोऽकारस्तद्युक्तं ते नरां एकाक्षरवीजं विंदुहीनं पुनश्च तद्
इतिरां इति वीजस्य विंदुं दुरी कुर्यात्॥

तथा च॥

रा इति भवति तथा च रां रा इति भवति॥

भान्तं चाकारसंयुक्तं मान्तां तारतिमुद्धरेत्।

भान्तं चाकारसंयुक्तमिति भान्तं मकारम्॥ १०-२६॥

आकारसंयुक्तं ते नमा इति भवति मान्तान्तति मुद्धरेदिति।

मान्तो यकारस्तस्यानतिं नम इति दद्यात्।

तथा च॥

ॐ रां रामाय नमः॥

इति मन्त्रः॥

एतत् षडक्षरं मन्त्रं सर्वैश्वर्य प्रदायकम्।

सर्वसौभाग्यजननं सर्वलोकवशंकरम्॥ १०-२७॥

विद्या सिद्धिप्रदं नृणां महदाज्ञाकरं मुने।

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं च्छन्द उच्यते॥ १०-२८॥

रामाख्यं वैष्णवं धाम देवता परिकीर्त्तिता।

जानीयात् प्रथमं वर्णं वीजं शक्तिं नतिस्तथा॥ १०-२९॥

वह्निवीजद्वितये न हृदयं परिकीर्त्तितम्।

चतुर्थे न तथैवस्या च्छिरोमन्त्रमितीरितम्॥ १०-३०॥

रसस्वरेणसंयुक्तं शिवा मन्त्रं विदुर्बुधाः।

रविस्वरेणसंयुक्तं तदेव कवचं विदुः॥ १०-३१॥

चतुर्दशयुतं नेत्रमस्तु मन्त्रं विसर्गयुक्।

प्रोक्ता नीत्यं गमन्त्राणि पर्वयोरंगुलीषु च॥ १०-३२॥

तलयोश्च प्रविन्यस्य हृदयादिषु विन्यसेत्।

अथवा मूलमन्त्रस्य वर्णैर्व्यस्तैः षडंगकम्॥ १०-३३॥

कुर्यात् तथाक्षरन्यासं मूलमन्त्रस्य मन्त्रवित्।

ब्रह्मरंध्रे भ्रुवोमध्ये हृदिवाहौ च गुह्यके॥ १०-३४॥

पादयोश्च प्रविन्यस्य भावयेद् भावनां मुने।

आधारे भावयेद् भक्तिं विदानंदे स्वरूपिणीम्॥ १०-३५॥

उद्यदादित्यसंकाशं आधारं तत् प्रभा मयम्।

आधारभावनामेवं संभाव्यमुनिसत्तम॥ १०-३६॥

ततः समुत्थिते तेजः शिखारूपां च चिन्मयीम्।

विद्युत्कोटिप्रतीकाशं चंद्रकोटिसुशीतलम्॥ १०-३७॥

सुषुमणामुखन्मील्यत्रोपयेदुपदेशतः।

११५अ) ब्रह्माध्वना नयेदूर्ध्वे द्वादशान्तेन्दुमण्डलम्॥ १०-३८॥

प्रायय्यविधिना वुद्या सा च येत् तत् सुधामृतम्।

ततः परिगलच्छुद्धसुधाधाराभिरावृतम्॥ १०-३९॥

निजदेहं जगत्सर्वं एकीभूतं विचिन्तयेत्।

निष्प्रपंचं निराकारं निरवद्यं निरंजनम्॥ १०-४०॥

शून्यशून्यो परमं सदसद्भाववर्जितम्।

अखण्डानन्दमात्मानं भावयेन् मुनिसत्तम॥ १०-४१॥

देवतागुरुमत्राणां भावयेदैक्यमात्मनः।

एवं संचिन्तयन्मन्त्री मन्त्रं प्रतिदिनं जपेत्॥ १०-४२॥

नैहिकानखिलोद्भोगान् भुक्त्वाचान्ते पदं व्रजेत्।

उपसंहृत्य तत् तेजो यद् वा हृयपंकजे॥ १०-४३॥

नामं ज्योतिर्मयं ध्यायेत् सर्वलोकैकसाक्षिणम्।

जगदुद्भूतिसंभुति परिभूति करं हरिम्॥ १०-४४॥

देवासुरमुनीन्द्रैश्च योगिवृन्दैश्च सेवितम्।

ध्यानं यथा॥

ॐ चतुर्भुजं शंखचक्रगदापंकजधारिणम्॥ १०-४५॥

किरीटहारकेयुररत्नकुण्डलसेवितम्।

एवं ध्यात्वा जपेन् मन्त्रं षद्वहस्त्रं दिने दिने॥ १०-४६॥

वाचः श्रियः पतिर्भूत्वा कविर्भूवतिवत्सरात्।

गत्वा कल्पतरोर्मुले सौवर्णं मण्डपं मुने॥ १०-४७॥

तन्मध्ये पुष्पकाख्यं च विमानं दिव्यमुत्तमम्।

मध्ये सिंहासनं तस्य नानारविभुषितम्॥ १०-४८॥

तन्मध्येष्टदलपद्ममुद्यदादित्य संनिभम्।

श्रीरामानेन तन्मध्ये समासीनं महामुने॥ १०-४९॥

सम्यक् ज्ञानमयोर्मुद्रां दधानं दक्षिणे करे।

जेतः प्रकाशनं वामं जानुं मुर्धनिचापरम्॥ १०-५०॥

जानकीवल्लभं देव मिंद्वनीलसमप्रभम्।

उद्यानिनिरतं देवं द्विभुजं रघुनंदनम्॥ १०-५१॥

वसिष्टवामदेवादि मुनिभिः परिवारितम्।

वामभागे समासीनं सीताकांचनसंनिभाम्॥ १०-५२॥

भजतां कामदां नित्यं रक्तोत्पलकरांवुजाम्।

लक्ष्मणं पश्चिमे भागे धृतच्छत्रं सुरामरम्॥ १०-५३॥

पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ।

एवं ध्यात्वा जपेन्मन्त्रं ज्ञानलक्ष्याश्च भाजनम्॥ १०-५४॥

शास्त्रज्ञानं कवित्वं च षण्मासाज्जायते मुने।

जपतां मन्त्रिणामेवं जपयोगेन धीमताम्॥ १०-५५॥

पुरश्चरण कृत्ये न विनापि फलदोमनुः।

एवं मन्त्रं समासाध्य राघवं पुरुषोत्तमम्॥ १०-५६॥

११५ब्) तत्रोक्ते वैष्णवे पीठे कुर्यादाराधनं वहिः।

तदुक्तं गौतमीये॥

पूजा च पंचधा प्रोक्ता तासां भेदा श्रृणुष्वमे॥ १०-५७॥

अभिगमनमुपादानं योगः स्वाध्याय एव च।

इत्या पंचप्रकारार्चा क्रमेण कथयामिते॥ १०-५८॥

तत्राभिगमनं नाम देवता स्थानमार्जनम्।

उपलेपननिर्माल्य दुरीकरणमेव च॥ १०-५९॥

उपादानं नामगंधपुष्पादि चयनं तथा।

योगोनाम स्वदेवस्य आत्मत्ये नैव भावना॥ १०-६०॥

स्वाध्यायो नाममन्त्रात्मा संध्यान पूजकोजपः।

सुक्तः स्तोत्रादिपाठश्च हरेः संकीनं तथा॥ १०-६१॥

तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्त्तितः।

इत्यानामस्वदेवस्य पूजनं च यथार्थतः॥ १०-६२॥

इति पंचप्रकाराश्च कथितास्तवसुव्रते।

सार्ष्टि सायुज्य सामीप्य सालोक्य च क्रमादिति॥ १०-६३॥

अथोच्यते महायन्त्रो रघुनन्दनविग्रहम्।

सौभाग्यदं वश्यकरं रिपुनाशकरं परम्॥ १०-६४॥

आयुरारोग्यदं पुंसां ग्रहज्वरनिवारणम्।

यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेति च॥ १०-६५॥

पुराभगवता प्रोक्तं तन्त्रे सम्मोहनाह्वये।

देहात्मनो यथा भेदो मन्त्रदैवतयोस्तथा॥ १०-६६॥

तस्मात् पीठे महामन्त्रं लिखित्वा तत्र पूजयेत्।

विनायन्त्रेण चेत् पूजा देवतान प्रसीदति॥ १०-६७॥

ततो वक्ष्यामि यन्त्रस्य रूपं स्वगुरुदर्शितम्।

षट्कोणं पूर्वमालिख्य तदग्रे वृत्तमालिखेत्॥ १०-६८॥

वहिरष्टदलं पद्ममधः पार्थिवमण्डलम्।

एवं मण्डलमालिख्य शोभनं व्यक्तमुज्ज्वलम्॥ १०-६९॥

अस्मिन्यन्त्र महामन्त्रो लिखित्वा तत्र पूजयेत्।

षट्कोणान्तर्लिखेद् वीजं साध्याख्या कर्मगर्भितम्॥ १०-७०॥

मन्मथे नैव वीजेन तद्वीजं वेष्टयेद् वहि।

अविशिष्टैर्मनोवर्णै मन्मथं तच्च वेष्टयेत्॥ १०-७१॥

दशाक्षरेण मन्त्रेण तत् सर्वं वेष्टयेत् पुनः।

अग्न्यादिकोणषट्केषु षडंगानि च विन्यसेत्॥ १०-७२॥

ॐ ह्रीँ श्रीँ इति लिखेन् पश्चात् षट्कोणस्य कपोलयोः।

कोणाग्रेषु च ई-वीजं केसरेषु स्वरात् क्रमात्॥ १०-७३॥

ततो माला मनोवर्णैः पूर्वाद्यष्टदलेषु च।

तेषु सप्तसुमन्त्रज्ञो विन्यसेत् तर्कसंख्यया॥ १०-७४॥

अवशिष्टान् पंचवर्णान् विलिखेदष्टमे दले।

११६अ) वृत्ताकारेण तत् सर्वं वेष्टयेत् कादिक्षान्तगैः॥ १०-७५॥

वीजद्वयं लिखेत् पश्चाद् भूगृहे दिग्विदिक्ष्वपि।

नारसिंहं महावीजं वाराहं च मुने क्रमात्॥ १०-७६॥

अस्मिन् यन्त्रे समावाप्य पूजये इघुनंदनम्।

प्रसंनवदनं शान्तमैहिकामुष्मिकप्रदम्॥ १०-७७॥

प्रपंचमं विलोमेन समुद्धृत्य चरान्तकम्।

शान्तिविंदुसमायुक्तं कामवीजमुदाहृतम्॥ १०-७८॥

प्रणवं पूर्वमुच्चार्य जानकीति पदं ततः।

पुनः सवल्लभायेति स्वाहान्तं मन्त्रमुद्धरेत्॥ १०-७९॥

दशाक्षरोयं मन्त्रः स्यात् सर्वसिद्धिप्रदायकः।

ॐ नमो पदमाभाष्य ततो भगवते पदम्॥ १०-८०॥

रघुनंदनायेति पदमाभाष्य मन्त्रवित्तमः।

रक्षोघ्नविषदायेति चतुर्थपदमुद्धरेत्॥ १०-८१॥

मधुरप्रसंनवदना * यामिततेजसे।

वलायेति पदं पश्चाद् रामायेति वदेत् तथा॥ १०-८२॥

विष्णवे पदमाभाष्य नमो तं मन्त्रमुद्धरेत्।

मालामन्त्रमनो प्रोक्तः सप्तचत्वारिंशांक्षरैः॥ १०-८३॥

क्षकाररेफजैकारो विंदुभिभूषितो मुने।

नारसिंहो महामन्त्रो जपतां कल्पभुरुह॥ १०-८४॥

पंचमस्वरसंयुक्तो हकारो विंदुभूषितः।

षष्टस्वरसमायुक्तो हकारोविंदुभूषितः॥ १०-८५॥

वाराहं वीजमित्युक्तं लक्ष्मीधनधराप्रदम्।

भुगृहं चतुरश्रं स्याद् अष्टवज्रविभूषितम्॥ १०-८६॥

एतद्यन्त्रं समालिख्य सौवर्णे राजते पटे।

भुर्ज्जे वा सम्यगालिख्य गुलकी कृत्य धारयेत्॥ १०-८७॥

अपुत्रो लभते पुत्रं निर्धनोधनमाप्नुयात्।

किमत्र वहुनोक्तेन सर्वसिद्धिप्रदं नृणाम्॥ १०-८८॥

यन्त्रमेतन् महापुण्यं धारणात् पातकापहम्।

अस्मिन् यन्त्र समावाह्य राममाराधयेत् क्रमात्॥ १०-८९॥

मंडुकादि पृथिव्यातं कर्णिकायां यजेत् क्रमात्।

अग्न्यादि पीठपादेषु धर्मादींश्चतुरो यजेत्॥ १०-९०॥

पूर्वादि दिक्षुतात् सर्वानश्च पूर्वान् क्रमाद् यजेत्।

कर्णिकायां तथानन्तं पद्मं संपूजयेत् ततः॥ १०-९१॥

तारवर्णप्रभिन्नाढ्य अर्काग्नीन्दुत्रिमण्डलम्।

गुणत्रयं च सत्वादि ततश्चात्मचतुष्टयम्॥ १०-९२॥

आत्मातंरात्मापरमात् संज्ञानात् मात्मना च ते।

११६ब्) विमलोत्कर्षिणी ज्ञाना क्रियायोगा च पंचमी॥ १०-९३॥

प्रह्वी सत्या तथेशाना नुग्रहानवमी परा।

पूर्वाद्यष्टसुपत्रेषु कर्णिकाया न्यसेत् क्रमात्॥ १०-९४॥

चतुर्थ्यानमसायुक्तैः स्वैः स्वैरेव च नामभिः।

कर्णिकायां यजेत् पश्चात् पीठमन्त्रेणमन्त्रवित्॥ १०-९५॥

प्रणवं पूर्वमुच्चार्य नमः शब्दं ततो वदेत्।

भगवते पदमाभाष्य विष्णवे इति पदं वदेत्॥ १०-९६॥

सर्वभूतात्मने चेति वासुदेवाय इत्यपि।

ततः सर्वात्मसंयोग योगपीठात्मने नमः॥ १०-९७॥

इति मन्त्रेण चेन्मध्ये कुर्यात् पुष्पांजलिं पुनः।

एवं संपूज्यते पीठे देवमावाह्य पूजयेत्॥ १०-९८॥

अर्घादि दीपधूपान्तं उपचारं विधाय च।

ततोनुज्ञाप्य देवेशं परिवारांश्च पूजयेत्॥ १०-९९॥

पूर्वषट्कोणमध्येषु हृदयादीनि षट्क्रमात्।

वामभागे समासीनां सीतां तन् मनुनायजेत्॥ १०-१००॥

श्रीवीजं पूर्वमुच्चार्य सीता यै पदमुद्धरेत्।

वह्नि जायान्वितो मन्त्रो भजतां कल्पभूरुहः॥ १०-१०१॥

जनकोस्य ऋषिः प्रोक्त गायत्री च्छंद उच्यते।

सीताख्या या जगद्धात्री देवता श्रीजगन्मयी॥ १०-१०२॥

आङ्गे देवस्य पुरतो वामदक्षिणतः शरान्।

ततश्चाष्टदले पद्मे हनुमन्तं च वाचकम्॥ १०-१०३॥

देवस्याग्रे समासीनं पंडितं धृतपुस्तकम्।

सुग्रीवमग्निं दिक् पत्रे मरुतं दक्षिणे दले॥ १०-१०४॥

विभीषणं च नैऋत्ये लक्ष्मणं वारुणे दले।

अगदं वायुदिक्पत्रे शत्रुघ्नं चोत्तरे दले॥ १०-१०५॥

ईशाने जांववन्तं च द्वितीया वरणे यजेत्।

प्रणवादिनमोन्तै स्तानर्चयेत् स्व स्वनामभिः॥ १०-१०६॥

सृष्टिर्जयन्तविजयः सुराष्ट्रोराष्ट्रवर्धनः।

अकोपोधर्मपालश्च सुमन्त्रश्चाष्टमो मतः॥ १०-१०७॥

इत्यष्टौ मन्त्रिणः पूज्यस्तृतीयावरणे यजेत्।

दशदिक्षुदिशां पालाननन्तान्तान्यजेत् क्रमात्॥ १०-१०८॥

इन्द्रादि अनन्तान्दश॥

वसिष्टवामदेवादि मुनिभिश्च महात्मभिः।

नलनीलादिभिश्चान्यै दिव्यैर्वा नरविग्रहैः॥ १०-१०९॥

परीवारैः समासीनं स्व स्वनामप्रकाशकम्।

संस्भूयमानं देवेशं ऋषिभिर्नारदादिभिः॥ १०-११०॥

एवं सपरिवारान्तमाराध्य रघुनंदनम्।

११७अ) गंधपुष्पादिभिर्दिव्यैर्धूपैर्दीपैश्च साक्षतैः॥ १०-१११॥

संपूज्य भक्त्या विधिवन् नैवेद्यं परिकल्पयेत्।

राजोपचारान्खिलान् दर्शयित्वा महामुनिः॥ १०-११२॥

स्तुत्वा यथावत् प्रणमेद्भक्तियुक्तश्च साधकः।

ततः समुद्धरेद् देवं परिवारैः समं हृदि॥ १०-११३॥

आत्मदैवतयोरैक्यं संभाव्यमुनिसत्तम।

अभ्यर्च्य गंधपुष्पाद्यैस्ततः पूजां समापयेत्॥ १०-११४॥

एवं प्रतिदिनं कुवन् कृत कृत्यो भवेद्ध्रुवम्।

आत्मानं सततं रामं संभाव्य विचरेत् सुधीः॥ १०-११५॥

अतः परं प्रवक्ष्यामि पौरश्चरणिकं विधिम्।

भिक्षाशिवाहविष्यो श्री शाकयावकभोजनः॥ १०-११६॥

पश्चिमाभिमुखे देवे भृशशून्ये शिवालये।

नद्याः समुद्रगामिन्यास्तीरे गोष्ठेगवांमुने॥ १०-११७॥

अश्वत्थविल्वयोर्मुले सिन्धुतीरे जलाशये।

पर्वताग्रेथवा मन्त्री स्थाने चाष्टतमे जपेत्॥ १०-११८॥

तर्कलक्षं जपेन् मन्त्रं तर्पयेच्च दशांशतः।

तर्कलक्षं षट्लक्षम्॥

विल्वैः फलैः प्रसुनैश्च पत्रैस्त्रिमधुसंयुतैः॥ १०-११९॥

कुर्याद् दशांशतो होमं ततः सिद्धो भविष्यति।

एवं मन्त्रादिभिः सिद्धे मनौकर्माणि साधयेत्॥ १०-१२०॥

जाती प्रसुनैर्जुहुयाच्चंदनांभः समन्वितैः।

राजवश्यायकमलैर्धान्यैर्धान्यादिन्दिरावाप्तये नरः॥

इन्दिरालक्ष्मीः॥

दुर्वा होमेन दीर्घायुर्भवेन् मन्त्रीनिरामयः॥ १०-१२१॥

रक्तोत्पलहुतान्मन्त्री धनमाप्नोति वांच्छितम्।

मेधा कामेन होतव्यं पलाशकुसुमैर्नरैः॥ १०-१२२॥

तज्जप्तमंभः प्रपिवेत् कविर्भवति वत्सरात्।

तन्मन्त्र्यमन्नं भुंजीतमहदारोग्यमाप्नुयात्॥ १०-१२३॥

मधुत्रितयके नैव जुहुयात् पायसेन वा।

कुर्वीरसदृशो दृक्ष्या विद्ययाधिजनायते॥ १०-१२४॥

यस्त्वेवं भजते भक्त्या जपहोमार्चनादिभिः।

सान्तया सहितं देवं राघवं लक्ष्मणान्वितम्।

सभुक्त्या सकलान् भोगानन्ते तत् पदमाप्नुयात्॥ १०-१२५॥

अलंविवादनममानुषोयं रामात्मनाराक्षसराजहन्ता।

भुजंगशय्यां परिमुच्यसाक्षान् नारायणो भूतलमाजगाम्॥ १०-१२६॥

इति श्रीरामषडक्षरकल्पः॥

अथ यन्त्रोद्धारः॥

११७ब्) चतुरश्रवेष्टितस्याष्टदलकमलकर्णिकामध्ये षड्कोणम्।

तन्मध्ये रा इति वीजम्॥

मध्ये ममामुकं कुरु श्रीयमिति॥

साध्यं लिखित्वा ससाध्यं वीजं क्लीमिति।

मन्मथवीजेन वेष्टयित्वा षट्कोणेषु॥

राँ रीँ रुँ रैँ रौँ रः॥

इति षडङ्गानि लिखित्वा॥

ह्रीँ इति कोणकपोलयाः॥

हुँ इति वाराहवीजं कोणाग्रेषु केसरेषु अकारोदिषोडशस्वरान् द्वंद्वशो
लिखेत्॥

ततः॥

ॐ नमो भगवते रघुनंदनाय रक्षोघ्न विषदाय मधुरप्रसं नवदना
या अमिततेजसे वलाय रामाय विष्णवे नमः॥

इति सप्तचत्वारिंशद्वर्णानां वर्णषट्कमेकैकस्मिन् दलेष्टमपत्त्रे
पंचवर्णकं लिखित्वा पद्माद्वहिः॥

ॐ जानकीवल्लभाय स्वाहेति दशाक्षरैर्वेष्टयित्वकादिक्षान्तैर्वेष्टयेत्॥

चतुरश्रस्यातः प्रागादिदिक्षुक्षौमिति नरसिंहवीजमाग्नीयादिकोणेषु हुं इति ॥

वराहवीजं भूगृहस्याष्टदिक्षु ईं वज्राष्टकं च लिखेत्॥

इति श्रीरघुनाथस्य धारणयन्त्रमेतत्।

तथा च शारदातिलके॥

अनन्तोध्यासनः सेन्दुर्वीजं रामाय हृन्मनुः।

षडक्षरो यमादिष्टो भजतां कामदोमशिः॥ १०-१२७॥

अस्यार्थः॥

अनन्तः अकारः अग्निः रेफः तथा चाकारयुक्तो रेफः इन्दुयुक्तः इन्दुरनुस्वारः तद्युक्तः रा इति भवति तथा चरावीजमुद्धृत्य रां रामाय

नमः॥

इत्युद्धरेत्॥

तथा च॥

रां रामाय नाम इति षडक्षरं मत्रो भवति॥

अस्य षडक्षरमन्त्रस्य ब्रह्मा ऋषिर्गायत्रीच्छंदः श्रीरामचन्द्रो देवता धनाद्यभीष्टसिद्धौ विनियोगः॥

रां हृदयाय नमः॥

रीँ शिरसे स्वाहा॥

रूँ शिखायै वौखट्।

रैँ कवचाय हूँ।

रौँ नेत्राभ्यां वौषट्।

रः अस्त्राय फट्।

इति षडंगन्यासः॥

कराङ्गन्यासानन्तरं मन्त्रवर्णन्यासः॥

ब्रह्मरंध्रे राम्।

भ्रुमध्ये रा॥ हृदि मा॥ नभौ य॥ लिंगे न॥ पादयोः मः॥

विमलोत्कर्षिणी ज्ञाना क्रियायोगा प्रस्वी सत्या॥

ईशाना अनुग्रहा एताः पीतशक्तयः॥

११८अ) ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय
सर्वात्मसंयोगपद्मपीठात्मने नमः॥

इति पीठमन्त्रः॥

ॐ कालां भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं

मुद्रां ज्ञानमयीं द्धानमपरं हस्तावुजं जानुनि।

सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं

पश्यन्ती मुकुटाङ्गदादिविविधा कल्पोज्ज्वलाङ्गं भजे॥ १०-१२८॥

इति ध्यानम्॥

आवरणपूजायां पार्श्वे॥

श्रीं सीतायै स्वाहा।

इति मत्रेण सीताम्॥

अग्रे वामदक्षिणपार्श्वे योः शार्ङ्ग रांश्च तद् वहिः
केसरेष्टाग्नेयादिकोणेषु हृदयशिरः शिखाकवचानि।

अग्रेनेत्रं दिक्षु अस्त्रं देवस्याग्रदलमारभ्य प्रादक्षिण्येन दलेषु।

हनुमत् सुग्रीवभरतविभीषणलक्ष्मणाङ्गदशत्रुघ्नं जांववतः॥

अग्रादिदलाग्रेषु सृष्टिजयन्तविजयसुराष्ट्रराष्ट्रवर्धन
अकोपधर्मपालसुमन्त्रान्। तद्बहिर्लोकपालान्॥

तद्बहिस्तद् अस्त्राणि च पूजयेत्॥

अत्र हनुमदादि ध्यानम्॥

ॐ वाचयन्तं हनुमन्तं अग्रतो धृत पुस्तकम्।

यजेद् भरतशत्रुघ्नौ पार्श्वं योर्द्धृत चामरौ॥ १०-१२९॥

धृतात पत्रं हस्ताभ्यां लक्ष्मणं पश्चिमे यजेत्।

वर्णलक्षं जपेन् मन्त्रं दशांशं कमलैः शुभैः॥ १०-१३०॥

जुहुयाद् अर्चिते वह्नौ ब्रह्मणानपि भोजयेत्।

इति श्रीरामचन्द्र पूजापद्धतिः समाप्तः॥

श्रीरामाय नमः॥

श्रीपार्वत्युवाच

ॐ भगवन् सर्वदेवेश देव देव नमोस्तु ते॥ १०-१३१॥

सर्वं मे कथितं देव राममन्त्रविशेषतः।

त्रैलोक्यमोहनं नाम कवचं पूर्वसूचितम्॥ १०-१३२॥

कथयस्व महादेव यद्गुह्यं तव वल्लभः।

ईश्वर उवाच

श्रृणु वक्ष्यामि देवेशि कवचं परमाद्भुतम्॥ १०-१३३॥

अस्यं तगोपनं गुह्यं ब्रह्ममन्त्रोद्यविग्रहम्।

ॐ अस्य श्रीरामकवचस्य ब्रह्मा ऋषिः गायत्री च्छंदः श्रीरामचन्द्रो देवता मम चतुर्वर्गसाधने जपे विनियोगः॥

ॐ प्रणवो मे शिरः पातु तारकब्रह्मरूपकः॥ १०-१३४॥

अनन्तो ग्या?सनः सेन्दुर्नामामेकाक्षरो व तु।

ॐ रां रामाय नम इति षडर्णो भुक्तिमुक्तिदः।

११८ब) भालं पायान्नेत्रयुग्मं रामोव्यक्षरसंज्ञकः॥ १०-१३५॥

क्लीँ पायाच्छ्रोत्रयुग्मं च एकाक्षरश्च मोहनः।

क्लीँ रामाय नम इति मुखं मे परिरक्ष तु॥ १०-१३६॥

ॐ रां रामचन्द्राय स्वाहा अष्टार्णो मे भुजद्वयम्।

श्रीँ रामाय नम इति स्कंधौ या तु खरान्तकः॥ १०-१३७॥

श्रीँ रामचन्द्राय रक्षोघ्नाय नम इति द्वादशाक्षरः।

हृदयं मे सदा पातु रघुवंशसमुद्भवः।

ह्रीँ रामचन्द्राय नम इति पातु ऊरुयुगं ममः।

श्रीरामभद्राय स्वाहा नाभिमष्टाक्षरौ व तु॥ १०-१३८॥

ह्लीँ रामभद्राय सीतापतये च द्विठान्तकः।

सक्तिनी सततं पातु राक्षसेन्द्रविदारकः॥ १०-१३९॥

प्रणवो मे रामभद्राय हृदन्तोष्टाक्षरो मनुः।

जानुनो मे सदा पातु रक्षः कुलविनाशकः॥ १०-१४०॥

प्रणवो रामभद्राय द्विठान्तोष्ठाक्षरो मनुः।

जानुनो मे सदा पातु रक्षः कुलविनाशकः॥ १०-१४१॥

प्रणवो रामभद्राय द्विठातोष्टाक्षरो मनुः।

पादयुग्मं सदा पातु व नरेन्द्रश्रियाः प्रदः॥ १०-१४२॥

ह्रीँ सीतापतये नम इति प्राच्या मां सर्वदा व तु।

हुँ जानकीवल्लभायेति पातु याम्यां सदा प्रभुः॥ १०-१४३॥

क्लीँ जानकीनाथायेति प्रतीच्यां मां सदा व तु।

श्रीँ रघुनाथाय नम इति कौवेर्यादिशिरक्ष तु॥ १०-१४४॥

ॐ नमो भगवते ब्रुयाच्चतुर्थ्यौ रघुनन्दनम्।

रक्षोघ्नं विषदायान्तं मधुरादिसमीरयेत्॥ १०-१४५॥

प्रसंनवदनायेति पश्चाद् अमिततेजसे।

वलायपश्चाद् रामाय विष्णवे तदनन्तरम्॥ १०-१४६॥

प्रणवादिनमोन्तोयं मालामन्त्र उदीरितः।

राजस्थाने सदा पातु रघुवंशसमुद्भवः॥ १०-१४७॥

इति ते कथितं देवि सर्वमन्त्रोघविग्रहम्।

त्रैलोक्यमंगलं नाम कवचं ब्रह्मरूपकम्॥ १०-१४८॥

प्रातःकाले पठेद्यस्तु सोभीष्टं फलमाप्नुयात्।

पूजाकाले पठेद्यस्तु कवचं साधकोत्तमः॥ १०-१४९॥

कीर्त्तिश्रीकान्तिमेधायुर्वृंहितो भवति ध्रुवम्।

राममन्त्रमयं ब्रह्म कवचं सन्मुखोदितम्॥ १०-१५०॥

गुरुमभ्यर्च्य विधिवत् कवचं हि पठेत् ततः।

द्विः सकृद् वा यथा न्यायं सोपि पुण्यवतां वरः॥ १०-१५१॥

देवमभ्यर्च्य विधिवत् पुरश्चर्या समाचरेत्।

अष्टोत्तरशतं जप्त्वा दशांशहवनादिकम्॥ १०-१५२॥

ततस्तु सिद्धकवचः सर्वकार्यातिसाधयेत्।

११९अ) मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यां विधानतः॥ १०-१५३॥

गद्यपद्यमयी वाणी वक्त्रे यस्य प्रवर्त्तते।

वक्त्रे तस्य वसेद् वाणी कमला निश्चला गृहे॥ १०-१५४॥

पुष्पांजल्याष्टके दत्त्वा मूलमैव पठेत् सकृत्।

अपि वर्षसहस्त्राणां पूजायाः फलमाप्नुयात्॥ १०-१५५॥

विलिख्य भूर्जपत्त्रे तु स्वर्णस्थं धारयेद्यदि।

कंठे वा दक्षिणे वाहौ सकुर्याद् दासवज्जगत्॥ १०-१५६॥

त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत्।

तद्गात्रं प्राप्यशस्त्राणि ब्रह्मास्त्रादीनि यानि च॥ १०-१५७॥

माल्यानि कुसुमान्ये व सुखदानि भवन्ति हि।

स्पर्द्धा मुद्धुयभवने लक्ष्मीर्वाणी मुखे वसेत्॥ १०-१५८॥

इदं कवचमज्ञात्वा यो जपेद्राममन्त्रकम्।

सप्तलक्षजप्तोपि नमन्त्रः सिद्धिदायकः॥ १०-१५९॥

सशस्त्रघातमाप्नोति सो चिरान् मृत्युमाप्नुयात्।

इति श्रीब्रह्मयामलतन्त्रे उमामहेश्वरसंवादे श्रीरामस्य [श्रीमस्य]
त्रैलोक्यमोहनं नामकवचं समाप्तम्॥

श्रीसुत उवाच

ॐ एकदा सुखदासीनो पार्वती परमेश्वरौ॥ १०-१६०॥

अन्योन्या श्लिष्टहृद्बाहु लोकरक्षणतत्परौ।

इन्द्रादिलोकपालैश्च सेवितं तं परात्परम्॥ १०-१६१॥

पार्वतीपरिपप्रच्छ तदा धर्मान्नुत्तमान्।

श्रीपार्वत्युवाच

भो नाथ जगतां नाथ सर्वलोकमहेश्वर॥ १०-१६२॥

त्वत् प्रसादान् मयाज्ञात धर्मशास्त्रमनुत्तमम्।

प्रायश्चित्तं तु पापानां श्रुतं सर्वमशेषतः॥ १०-१६३॥

ब्रह्महत्यादिपापानां निष्कृतिं वक्तुमर्हसि।

श्रीमहादेव उवाच

शृणु देवि प्रवक्ष्यामि गुह्याद्गुतमं महत्॥ १०-१६४॥

सनत्कुमारविघ्नेशं संवादं पापनाशनम्।

उपविष्टं गणाध्यक्षमेकान्ते प्रणिपत्यसः॥ १०-१६५॥

सनत्कुमारः पप्रच्छ सर्वधर्मविनिर्णयम्।

सनत्कुमार उवाच

भगवन् सर्वधर्मज्ञ सर्वविघ्नविनाशन॥ १०-१६६॥

निष्कृतिं ब्रह्महत्यानां बक्तुमर्हसि मे प्रभो।

त्वां विनामुष्यधर्मस्य वक्ता नास्ति जगत्त्रये॥ १०-१६७॥

तस्माद् गणपते मह्यं प्रसादं कुरु निर्भरम्।

श्रीविनायक उवाच

साधुपृष्ठं त्वया ब्रह्मन् सर्वलोकोपकारकम्॥ १०-१६८॥

११९ब्) मयाचिरं कृतं कर्म स्मारितं भवता नघ।

पुराहं गजरूपेण जातः पर्वतसंनिभः॥ १०-१६९॥

मन्तो वृक्षात् समुत्पाद्य मुनिहिंसां समारभम्।

तदा मया मुनिगणा हिंसिता वहवो वलात्॥ १०-१७०॥

हाहाकारो महानासीद् ब्राह्मणानां समन्ततः।

तदा हत्या सहस्रेण वेष्टितः परितोस्म्यहम्॥ १०-१७१॥

निस्संज्ञं मृतकल्पं मां वीक्ष्यदेवः पितामम।

आराध्य जगतामीशं रामं सर्वहृदि स्थितम्॥ १०-१७२॥

प्रत्यक्षमकरोद् देवं मद्धितं रघुनंदनम्।

तदा प्रोवाच भगवा श्रीरामः पितरं मम॥ १०-१७३॥

ब्रह्मविष्णुमहेशान पूजितांघ्रिसरोरुहः।

श्रीभगवानुवाच

प्रसंनोस्मि महादेव किं प्रार्थयसि मे प्रभो॥ १०-१७४॥

दास्यामि यदभीष्टं तत् त्रिषुलोकेषु दुर्लभम्।

श्रीमहादेव उवाच

ब्रह्महत्यासमाविष्टं मम पुत्रमिमं प्रभो॥ १०-१७५॥

निष्पापं कुरु देवेश यद्यस्तिमयिते दया।

तथेत् पुहृत्वा? तदा तेन दयया वीक्षितोस्म्यहम्॥ १०-१७६॥

तत्क्षणाल्लब्धचैतन्यो निर्मलज्ञानवृंहितः।

वहुभिर्गद्यपद्यैश्च स्तुत्वा तं प्रणतोस्म्यहम्॥ १०-१७७॥

ततः प्रोवाच मां रामः सत्यसंकल्प ईश्वरः।

श्रीरम उवाच

ब्रह्महत्या सहस्रस्य प्रायश्चित्तं वदामि ते॥ १०-१७८॥

मुच्यते सर्वपापेभ्यो जपन्नामसहस्त्रकम्।

इति गुह्यं ददौ रामो निजं नामसहस्त्रकम्॥ १०-१७९॥

धर्मार्थकाममोक्षादि सर्ववांच्छितसाधनम्।

ततस्तद्ग्रहणादेव निष्पापोस्मि तदैव हि॥ १०-१८०॥

तदा दि सर्वदेवानां पूज्योस्मि मुनिसत्तम्।

त्वमप्येतदधीयानो राघवस्य महात्मनः॥ १०-१८१॥

नाम्नां सहस्त्रं लोकेषु प्राख्यापयमहामते।

सनत्कुमार उवाच

धन्योस्म्यनुगृहीतोस्मि कृतार्थोस्मि गणाधिप॥ १०-१८२॥

त्वत् प्रसादाज्जपिष्यामि रामनामसहस्त्रकम्।

श्रीमहादेव उवाच

इति विज्ञाप्य देवेशं परिक्रम्यप्रणम्य च॥ १०-१८३॥

तदादि सततं जप्त्वा स्तोत्रमेतद् वरानने।

अध्यगात् परमां सिद्धिं मम पुत्रो विनायकः॥ १०-१८४॥

गणानामाधिपत्यं च पुण्यपापविवर्जितः।

१२०अ) श्रीपार्वत्यु वाच

श्रोतुमिच्छामि देवेश तदहं सर्वकामदम्॥ १०-१८५॥

नाम्नां सहस्रं रामस्य ब्रूहि पद्यस्ति मेदया।

श्रीमहादेव उवाच

अथ वक्ष्यामि भो देवि रामनामसहस्रकम्।

श्रृणु चैकमनाः स्तोत्रं गुह्याद्गुह्यतरं महत्॥ १०-१८६॥

अस्य श्रीरामसहस्रनाममालामन्त्रस्य श्रीमहादेव-ऋषिः
अनुष्टुपछंदः श्रीरामः परमात्मा देवता श्रीरामप्रीत्यर्थे
चतुर्विधपुरुषार्थ प्राप्त्यर्थं सकलकामना सिध्यर्थे
श्रीरामसहस्रनामस्तवराजपाठे विनियोगः॥

अथ ध्यानं

ध्यायेद् ब्रह्मस्वरूपं परममृतमयं सेव्यमानं सुरेन्द्रैः

सीता सौमित्रिजुष्टं वनवसनधरं फुल्लनीलोत्पलाभम्।

विश्वेशं विश्वमुर्त्तिं भवभयहरणं सूर्यकोटिप्रकाशं

काकुस्थं कोसलेशं मलतृणदहनं काडकोदंडपाणिम्॥ १०-१८७॥

ॐ राजीवलोचनः श्रीमान् श्रीरामोरघुपुंगवः।

रामभद्रः सदाचारो राजेन्द्रो जानकीपतिः॥ १०-१८८॥

अग्रगण्यो वरेण्यश्च वरदः परमेश्वरः।

जनार्दनोजितामित्रः परार्थैकप्रयोजनः॥ १०-१८९॥

विश्वामित्रप्रियोदान्तः शत्रुजिच्छतुतापनः।

सर्वज्ञः सर्वदेवादिः शरण्यो वालिमर्दनः॥ १०-१९०॥

ज्ञानभोव्योपरिच्छेद्यो वाग्मीसत्यव्रतः शुचिः।

ज्ञानगम्यो दृढप्रज्ञः खरध्वंसी प्रतापवान्॥ १०-१९१॥

द्युतिमानात्मवान्वीरो जितक्रोधोरिमर्दनः।

विश्वरूपो विशालाक्षः प्रभुः परिवृढोदृढः॥ १०-१९२॥

ईशः खड्गधरः श्रीमान् कौसल्ये योनसुयकः।

विपुलांसोमहोरस्कः परमेष्ठी परायणः॥ १०-१९३॥

सत्यव्रतः सत्यसंधो गुरुः परमधार्मिकः।

लोकज्ञो लोकवंद्यश्च लोकात्मा लोककृत् प्रभुः॥ १०-१९४॥

अनादिर्भगवान् सेव्यो जितमायोरघूद्वहः।

रामो दयाकरो दक्षः सर्वज्ञः सर्वपावनः॥ १०-१९५॥

ब्रह्मण्योनीतिमान् गोप्ता सर्वदेव प्रियो हरिः।

सुंदरः पीतवासाश्च सुत्रकारः पुरातनः॥ १०-१९६॥

सौम्यो महर्षिः कोदंडी सर्वगः सर्वकोविदुः।

कविः सुग्रीववरदः सर्वपुण्याधिकप्रदः॥ १०-१९७॥

भव्योजितारिषड्वर्गो महोदारोघनाशनः।

१२०ब्) सुकीर्त्तिरादिपुरुषः कान्तः पुण्यकृतागमः॥ १०-१९८॥

अकल्मषश्चतुर्वाहुः सर्वावसोदुरासदः।

स्मितभाषीनिवृत्तात्मा स्मृतिमान्वीर्यवान् प्रभुः॥ १०-१९९॥

धीरोदान्तो घनश्यामः सर्वायुधविशारदः।

अध्यात्मयोगनिलयः स्वमानीलक्ष्मणाग्रजः॥ १०-२००॥

सर्वतीर्थमयः शुरः सर्वयज्ञफलप्रदः।

यज्ञस्वरूपी यज्ञेशो जरामरणवर्जितः॥ १०-२०१॥

वर्णाश्रमगुरुर्वर्णी शत्त्रुजित्पुरुषोत्तमः।

शिवलिंगप्रतिष्ठाता प्ररमात्मा परात्परः॥ १०-२०२॥

प्रमाणभूतो दुर्ज्ञेयः पुर्णः परपुरंजयः।

अनन्तदृष्टिरानंदो धनुर्वेदोधनुर्द्धरः॥ १०-२०३॥

गुणाकरो गुणःश्रेष्टः सच्चिदानंदविग्रहः।

अभिवाद्यो महाकायो विश्वकर्मा विशारदः॥ १०-२०४॥

विनीतात्मा वीतरागस्तपस्वीशोजनेश्वरः।

कल्याणप्रकृतिः सर्वः सर्वेशः सर्वकामदः॥ १०-२०५॥

अक्षरः पुरुषः साक्षी केशवः पुरुषोत्तमः।

लोकाध्यक्षो महाकायो विभीषणवरप्रदः॥ १०-२०६॥

आनंदविग्रहो ज्योतिर्हनुमत् प्रभुरक्षयः।

भ्राज्रिष्णुः सहनोभोक्ता सत्यवादी वहुश्रुतः॥ १०-२०७॥

सुखदः कारणं कर्त्ता भववंधनमोचनः।

देवचूडामणिर्नेता ब्रह्मण्यो ब्रह्मवर्द्धनः॥ १०-२०८॥

संसारतारको रामः सर्वदुःखविमोक्षकृत्।

विद्वत्तमा विश्वहर्त्ता विश्वभर्त्ता च विश्वसृक्॥ १०-२०९॥

नित्यो नियतकल्याणः सीता शोकविनाशनः।

काकुस्थः पुंडरीकाक्षो विश्वामित्रभयापह॥ १०-२१०॥

मारीच मथनो रामो विराधवधपण्डितः।

दुःस्वप्ननाशनो रम्यः किरीटी त्रिदशाधिपः॥ १०-२११॥

महाधनुर्महाकायो भीमो भीमपराक्रमः।

तत्त्वस्वरूपी तत्त्वज्ञस्तत्त्ववादीसुविक्रमः॥ १०-२१२॥

भूतात्मा भूतकृत्स्वामी कालज्ञानी महापटुः।

अतिर्विष्णो गुणग्रामो निष्कलंकः कलकहा॥ १०-२१३॥

स्वभावभद्रः शत्तुघ्नः केशवः स्थाणुरीश्वरः।

भूतादिः शंभुरादित्यः स्थविष्टः श्वाशतोध्रुवः॥ १०-२१४॥

कवची कुण्डलीचक्री खड्गीभक्तजनप्रियः।

अमृत्युर्जन्मरहितः सर्वजित् सर्वगोचरः॥ १०-२१५॥

१२१अ) अनुत्तमोप्रमेयात्मा सर्वादिर्गुणसागरः।

समः समात्मासमगो जटामुकुटमण्डितः॥ १०-२१६॥

अजेयः सर्वभूतात्मा विष्वक्सेनो महातपाः।

लोकाध्यक्षो महावाहुरमृतोवेदवित्तमः॥ १०-२१७॥

सहिष्णुः सद्गतिः शास्ता विश्वयोनिर्महाद्युतिः।

अनिद्र-ऊर्जितः प्रांशुरुपेन्द्रो वामनो वलिः॥ १०-२१८॥

मधुभेदी विधाता च ब्रह्माविष्णुश्च शंकरः।

हंसोमरीचिगोविन्दो रत्नगर्भो महाद्युतिः॥ १०-२१९॥

व्यासोवाचस्पतिः सर्वदृक् पितासुरमर्दनः।

जानकीवल्लभः पूज्यः प्रकटः प्रीतिवर्द्धनः॥ १०-२२०॥

संभवोतीन्द्रियो वेद्यो निर्देश्यो जांववत् प्रभुः।

मदनोमन्मथोज्योतिर्विश्वरूपो निरंजनः॥ १०-२२१॥

नारायणोग्रणीः साधुर्जटायुप्रीतिवर्द्धनः।

नैकरूपो जगन्नाथः सुरकार्यहितः प्रभुः॥ १०-२२२॥

जितक्रोधोजितारातिः प्लवंगाधिपराज्यदः।

वसुदः सुभुजोनेक मायोभाव्यप्रमोदनः॥ १०-२२३॥

चण्डांशुः सिद्धसंकल्पः शरणागतवत्सलः।

अगदोरोगहर्त्ता च मन्त्रवित्मन्त्रभावनः॥ १०-२२४॥

सौमित्रिर्वत्सलोधुर्यो व्याक्ताव्यक्तस्वरूपधृक्।

वसिष्ठोग्रामणीः श्रीमाननुकुलः प्रियंवदः॥ १०-२२५॥

अतुलः सात्त्विकोधीरः शरासनविशारदः।

ज्येष्ठः सर्वगुणोपेतः शक्तिमांस्ताडकान्तकः॥ १०-२२६॥

वैकुण्ठः प्राणिनां प्राणः कमठः कमलाधिपः।

गोवर्धनधरोमत्स्य रूपः कारुण्यसागरः॥ १०-२२७॥

कुंभकर्णप्रभेत्ता च गोपीगोपालसंवृतः।

मायावीस्वापनो व्यापी रैणुकैयवलापहः॥ १०-२२८॥

पिनाकमथानोवंद्यः सन्मत्तोगरुडध्वजः।

लोकत्रयप्रियोलोक भरितोभरताग्रजः॥ १०-२२९॥

श्रीवरः सद्गतिर्लोक साक्षी नारायणो विभुः।

मनोवेगी मनोरूपी पुर्णः पुरुषपुंगवः॥ १०-२३०॥

यदुश्रेष्ठो यदुपतिर्भूतावासः सुविक्रमः।

तेजो धराधरोव्यग्रश्चतुर्मुर्त्तिर्महानिधिः॥ १०-२३१॥

वाणुरमर्द्दनोवंद्यः शान्तो भरतवंदितः।

शब्दाति गोगभीरात्मा कोमलाङ्गः प्रजागरः॥ १०-२३२॥

लोकाध्वगः शेषणायी क्षीराब्धिनिलयोनभः।

आत्मज्योतिरहीनात्मा मुह?सार्विः सहस्रपात्॥ १०-२३३॥

पर्जन्यः कुमुदो भूतो वासः कमललोचनः।

१२१ब) श्रीवत्सवक्षाः श्रीवासो वीरहालक्ष्मणाग्रजः॥ १०-२३४॥

लोकाभिरामो लोकारिमर्दनः सेवकप्रियः।

सनातनतेमोमेघ श्यामलोक्षं सान्तकः॥ १०-२३५॥

दिव्यायुधधरः श्रीमानप्रमेयो जितेन्द्रियः।

भूदेव वंद्यो जनकप्रिय कृत् प्रपितामहः॥ १०-२३६॥

उत्तमः सात्त्विकः सत्यः सत्यसंधस्त्रिविक्रमः।

सुव्रतः सुलभः सुक्ष्मः अघोषः सुखदः सुधीः॥ १०-२३७॥

दामोदरोच्युतः शार्ङ्गी वामनोमथुराधिपः।

देवकीनंदनः शौरीः शार्ङ्गीकैटभमर्दनः॥ १०-२३८॥

सप्ततालप्रभेत्ता च मित्त्रवंशप्रवर्द्धनः।

कालस्वरूपी कालात्मा कालः कल्याणदः कलिः॥ १०-२३९॥

संवत्सर-ऋतुः पक्षो हायनोदिवसोसुगः।

स्तव्यो विविक्तो निर्लेपः स्तवोव्यापी निराकुलः॥ १०-२४०॥

अनादिनिधनः सर्वलोकपूज्यो निरामयः।

रसोरसज्ञः सरसो लोकसागरसात्मकः॥ १०-२४१॥

सर्वदुःखाति गोवंद्यो राशिः परमगोचरः।

शेषो-विशेषो विगतकल्मषो रघुपुंगवः॥ १०-२४२॥

वर्णश्रेष्ठो वर्णभावो वर्णोवर्णगुणेश्वरः।

सर्वसाक्षी गुणश्रेष्ठो देवासुरवरप्रदः॥ १०-२४३॥

देवादिदेवो देवर्षिर्देवासुरनमस्कृतः।

सर्वदेवमयश्च क्रीशार्ङ्गपाणिरनुत्तमः॥ १०-२४४॥

मनोवुद्धिरहंकारः प्रकृतिः पुरुषोत्तमः।

न्याय्योन्यायीनयी श्रीमान् नयोनंगधरोध्रुवः॥ १०-२४५॥

लक्ष्मीर्विशंभरोभर्त्ता देवेन्द्रो वालिमर्दनः।

वाणारिर्मर्दनो यज्वानुत्तमोमुनिसत्तमः॥ १०-२४६॥

देवाग्रणीः शिवध्यानतत्परः परमः परः।

सामगेयः प्रियः शुरः पुण्यकीर्त्तिः सुलोचनः॥ १०-२४७॥

पुण्यः पुण्याधिकः पूर्वः पूर्णः पुरयितारविः।

जटिलः कल्मषध्वान्तप्रभंजनविभावसुः॥ १०-२४८॥

अव्यक्तलक्षणो व्यक्तो दशास्यद्विपकेसरी।

कलानिधिः कलारूपः कमलानंदवर्द्धनः॥ १०-२४९॥

जपोजयारिः संपूर्णः श्यामलोभवभंजनः।

अलंकरिष्णुरचलोरोचिष्णुर्विक्रमोन्नतः॥ १०-२५०॥

आशुः शब्दपतिः शब्दगोचरो रंजनोलघुः।

निःशब्दः पुरुषोमायी स्थूलः सूक्ष्मोविलक्षणः॥ १०-२५१॥

आत्मयोनिरयोनिश्च सप्तजिह्वः सहस्त्रपात्।

अमृतांशो महागर्भो निवृत्तविषयस्पृहः॥ १०-२५२॥

१२२अ) त्रिकालज्ञो मुनिः साक्षी विहाय सगतिः कृतिः।

सनातनतमः सुग्वीपेशलोजयातांवरः॥ १०-२५३॥

शक्तिमान् शक्तितृन्नाथो गदाधरोरथाङ्गभृत्।

निरीहोनिर्विकल्पश्च विद्रूपोतीतसाध्वसः॥ १०-२५४॥

शताननः सहस्राक्षः शतमूर्तिर्घनप्रभः।

हृत्पुण्डरीकशयनः कथिनोद्रव एव च॥ १०-२५५॥

सूर्यो ग्रहपतिः श्रीमान् समर्थोनर्थनाशनः।

अधर्मशत्रुरक्षप्यः पुरुहुतः पुरुष्टुतः॥ १०-२५६॥

ब्रह्मगर्भो वृहद्गर्भो धर्मधेनुर्द्धरागमः।

हिरण्यगर्भो ज्योतिष्मान् सुललाटः सुविक्रमः॥ १०-२५७॥

शिवपूजारतिः श्रीमान् भवानी प्रिय कृद्वशी।

नरो नारायणो रामः कपर्दीनीललोहितः॥ १०-२५८॥

रुद्रः पशुपतिः स्थाणुर्विशामित्त्रो द्विजेश्वरः।

मातामहोमातरिश्वाविरिंचो विष्टरश्रवाः॥ १०-२५९॥

अक्षोभ्यः सर्वभूतानां चण्डः सत्यपराक्रमः।

वालखिल्यो महाकल्पः कल्पवृक्षः कलाधिपः॥ १०-२६०॥

निदाघस्तपनोमेघः शक्रः परवलापहः।

कवंधमथनोदिव्यः कंवुग्रीवः शिवप्रियः॥ १०-२६१॥

सुखानिलः सुनिष्पन्नः सुरभिः शिशिरात्मकः।

असंस्पृष्ठोतिथिः शूरः प्रमाथीपापनाशकः॥ १०-२६२॥

वसुश्रवाः कव्यवाहः प्रतप्ता विश्वभोजनः।

रोमो नीलोत्पलश्यामो ज्ञानस्कंधो महाद्युतिः॥ १०-२६३॥

पवित्रपादः पापारिर्मणिपुरो नभोगतिः।

उत्तारणो दुष्कृतिहादुर्धर्षो दुस्सहो भयः॥ १०-२६४॥

अमृतांशोमृतवपुर्धर्मी धर्मकृपाकरः।

भगो विवस्वानादिभ्यो योगाचार्यो वृहस्पतिः॥ १०-२६५॥

उदारकीर्त्तिरुद्योगी वाङ्मयः सदसन्मयः।

नक्षत्रमालीनाकेशः स्वाधिष्ठानः षडाश्रयः॥ १०-२६६॥

चतुवर्गी फलं वर्गी शक्तित्रयफलं निधिः।

निधानगर्भोनिर्व्याजो निरीशो व्याजमर्दनः॥ १०-२६७॥

श्रीवल्लभः शिवारंभः शान्तो भद्रसमंजसः।

भूशयो भूतकृद् भूति भूषणो भूतवाहनः॥ १०-२६८॥

अकायो भूतकायस्थः कालज्ञानी महापटुः।

परान् वृत्ति तरलो * विविक्तः श्रुतिसागरः॥ १०-२६९॥

स्वभावभद्रो मध्यस्थः संसारभयनाशनः।

वेद्वेद्यो वियद्गोप्ता सप्तावरमुनीश्वरः॥ १०-२७०॥

१२२ब) सुरेन्द्रः करणं कर्मकरः कस्त्रोद्युधोक्षजः।

ध्येयोग्रधुर्यो धात्रीशः संकल्पः शर्वरीपतिः॥ १०-२७१॥

परमार्थगुरुर्वृष्टिः शुचिराश्रितवत्सलः।

विष्णुर्जिष्णुर्विभुर्यज्ञो यज्ञेशो यज्ञपालकः॥ १०-२७२॥

प्रर्भुविष्णुर्ग्रसिष्णुश्च लोलोकात्मालोकभावनः।

केशवः क्लेशहाकायः कतिः कारणकारणम्॥ १०-२७३॥

काव्यः कर्त्ता कलाशेषो वासुदेवः पुरुष्टुतः।

आदिकर्त्ता वराहश्च माधवो मधुसुदनः॥ १०-२७४॥

नारायणो नरोहंसो विष्वक्सेनो जनार्दनः।

विश्वकर्त्तामहायज्ञो ज्योतिष्मान्पुरुषोत्तमः॥ १०-२७५॥

वैकुण्ठः पुण्डरीकाक्षः कृष्णः सूर्यसुरार्चितः।

नरसिंहो महाभीमश्चक्रदंष्ट्रो नखायुधः॥ १०-२७६॥

आदिदेवो जगत्कर्त्ता योगीशो गरुडध्वजः।

गोविंदो गोपतिर्गोप्ता रूपतिर्भुवनेश्वरः॥ १०-२७७॥

पद्मनाभो हृषीकेशो धातादामोदः प्रभुः।

त्रिविक्रमस्त्रिलोकेशो ब्रह्मेशः प्रीतिवर्धनः॥ १०-२७८॥

वामनोदुष्टदमनो गोपेन्द्रोगोपवल्लभः।

भक्तिप्रियोच्युतः सत्यः सत्यकीर्त्तिर्धृतिः स्मृतिः॥ १०-२७९॥

कारुण्यं करुणा व्यासः पापहा शान्तिवर्धनः।

सन्यासीशास्त्रतत्त्वज्ञो मंदरोगिरिकेतनः॥ १०-२८०॥

वदरी निलयः शान्तस्तपस्वी विच्युतः प्रभुः।

भूतावासो गुहावासः श्रीनिवासः श्रियाः पतिः॥ १०-२८१॥

तपोवासो मुदावासः सत्यवासः सनातनः।

पुरुषः पुष्करः पुण्यः पुष्कराक्षो महेश्वरः॥ १०-२८२॥

पूर्णमूर्तिः पुराणज्ञः पुण्यदः पुण्यवर्द्धनः।

शंखीचक्रागदीशार्ङ्गी लाङ्गलीमुसलीहली॥ १०-२८३॥

किरीटिकुण्डलीहारी मेखरीकवचीध्वजी।

योद्धाजेता महावीर्यः शत्रुघ्नः शत्रुतापनः॥ १०-२८४॥

शास्ता स्वस्तिकरः शास्त्रं शन्तनः शंकरः सुतः।

सारथिसात्त्विकः स्वामी सामवेदप्रियः समः॥ १०-२८५॥

सवलः साहसः शक्रः संपूर्णाङ्गः समृद्धिमान्।

स्वर्गदः कामदः श्रीदः कान्तिदः कान्तिदायकः॥ १०-२८६॥

मोक्षदः पुंडरीकाक्षः क्षीराब्धिकृतकेतनः।

सर्वान् सा सर्वलोकेशः प्रियकृत्यापनाशनः॥ १०-२८७॥

वैकुंठः पुंडरीकाक्षः सर्वदेवनमस्कृतः।

सर्वव्यापी जगन्नाथः सर्वलोकमहेश्वरः॥ १०-२८८॥

१२३अ) सर्गस्थित्यन्तकृद् देवः सर्वदेवां सुखावहः।

अक्षयः शाश्वतोनन्तः क्षयवृद्धिविवर्जितः॥ १०-२८९॥

निर्लेपो निर्गुणः सुक्ष्मो निर्विकारो निरंजनः।

सर्वोपाधिविर्मुक्तः सत्तामात्रव्यवस्थितः॥ १०-२९०॥

अविकारीविभुर्नित्यः परमात्मा सनातनः।

अवलो निर्मलो व्यापी नित्यतृप्तो निराश्रयः॥ १०-२९१॥

श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषण।

आजानुवाहुः सुमुखः सिंहस्कंधो महाभुजः॥ १०-२९२॥

सत्त्ववान् गुणसंपन्नो दीप्यमानः स्वतेजसा।

कालात्मा भगवान् कालः कालचक्रप्रवर्त्तकः॥ १०-२९३॥

नारायणपरं ज्योतिः परमात्मा सनातनः।

विश्वभुग्विश्वभोक्ता च विश्वगोप्ता च शाश्वतः॥ १०-२९४॥

विश्वेश्वरो विश्वमूर्त्तिर्विश्वात्मा विश्वभावनः।

सर्वभूतसुहृच्छान्तः सर्वभूतानिकंपनः॥ १०-२९५॥

सर्वेश्वरेश्वरः सर्वः सर्वस्थाश्रितवत्सलः।

सर्वगः सर्वभूतेशः सर्वभूताशय स्थितः॥ १०-२९६॥

आभ्यन्तरस्य तमसे च्छेत्तान्नारायणः परः।

अनादिनिधनः स्त्रष्टा प्रजापतिपतिर्हरिः॥ १०-२९७॥

नरसिंहो हृषिकेशः सर्वात्मा सर्वसृग्वणी।

जगत्स्तस्थुपभुर्नेता सनोतनः * * *॥ १०-२९८॥ ?

कान्ता धाता विधाता च सर्वेषां पतिरीश्वरः।

सहस्रमूर्धा विश्वात्मा विष्णुर्विश्वदृगव्ययः॥ १०-२९९॥

पुराणः पुरुषः स्रष्टाः सहस्राक्षः सहस्रपात्।

तत्त्वं नारायणो विष्णुर्वासुदेवः सनातनः॥ १०-३००॥

परमात्मा परं ज्योतिः परंब्रह्मपरात्परः।

अच्युतः पुरुषः कृष्णः शाश्वतः शिव-ईश्वरः॥ १०-३०१॥

नित्यः सर्वगतः स्थाणु रुद्रः साक्षी प्रजापतिः।

हिरण्यगर्भः सविता लोककृल्लोकभुग्विभुः॥ १०-३०२॥

अकारवाच्यो भगवान् श्रीभूर्लीलापतिः प्रभुः।

सर्वलोकेश्वरः श्रीशान्सर्वज्ञः सर्वतोमुखः॥ १०-३०३॥

स्वामीसुशीलः सुलभः सर्वज्ञः सर्वशक्तिमान्।

नित्यसंपूर्णकामश्च नैसर्गिकसुहृत्सुखी॥ १०-३०४॥

कपा पी युषजलधिः शरणं सर्वदेहिनाम्।

श्रीमान्नारायणः स्वामी जगतां प्रभुरीश्वरः॥ १०-३०५॥

श्रीशः शरण्यो भूतानां संश्रिताभीष्टदायकः।

अनन्तः श्रीपतीरामो गुणभृन्निर्गुणो महान्॥ १०-३०६॥

१२३ब्) हरेराम हरेराम रामराम हरे हरे।

एतदेव सदा ब्रुयाद् वाणी मे मधुसुदन (१०००)॥ १०-३०७॥

एवमादीनि नामानि संख्यातानि पराणि च।

ऐकैकं नामरामस्य सर्वपापप्रणाशनम्॥ १०-३०८॥

सहस्रनामफलदं सर्वैश्वर्यप्रदायकम्।

सर्वसिद्धिप्रदं नृणां भुक्तिमुक्तिफलप्रदम्॥ १०-३०९॥

मन्त्रात्मकमिदं सर्वमाख्यातं सर्वमङ्गलम्।

यः पठेच्छृणुयाद्वापि स तु ब्रह्मपदं लभेत्॥ १०-३१०॥

तावदेवधस्तेषां महापातकदंतिनाम्।

यावन् नश्रुयते रामनामपंचाननध्वनि॥ १०-३११॥

ब्रह्मघ्नश्च सुरांयश्च स्तेयश्च शुरुतल्पकः।

शरनागतघातीव मित्रविश्वस्तघातकः॥ १०-३१२॥

मातृहा पितृहा चैव भ्रूणहा वीरहा तथा।

जप्त्वा शुध्यन्ति ते सर्वे रामनामसहस्त्रकम्॥ १०-३१३॥

कोटि कोटि सहस्त्राणि ज्युपपापानि यान्यपि।

तत्क्षणं तानि नश्यन्ति जप्त्वा नामसहस्त्रकम्॥ १०-३१४॥

संवत्सरक्रमाज्जप्त्वा प्रत्यहं रामसंनिधौ।

निष्कलंकः सुखी भूत्वा ततो मोक्षमवाप्नुयात्॥ १०-३१५॥

इति श्रीलिङ्गपुराणे उमामहेश्वरसंवादे श्रीरामनामसहस्त्रं
संपूर्णसमाप्तम्॥

अथ रामस्तवराजः॥

श्रीजानकीवल्लभाय नमः॥

ॐ अस्य श्रीरामचन्द्रस्तवराजस्तोत्रस्य सनत्कुमार ऋषिः अनुष्टुपच्छंदः श्रीरामो देवता सीतावीजं हनुमान् शक्तिः श्रीरामप्रीत्यर्थे जपे विनियोगः॥

सुत उवाच

सर्वशास्त्रार्थतत्त्वज्ञ व्यासं सत्यवती सुतम्।

धर्मपुत्रप्रहृष्टात्मा प्रत्युवाच मुनीश्वरम् (१)॥ १०-३१६॥

युधिष्ठिर उवाच

भगवद्योगिनां श्रेष्ठ सर्वशास्त्रविशारद।

किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम् (२)॥ १०-३१७॥

श्रोतुमिच्छामि तत् सर्वं ब्रुहि मे मुनिसत्तम।

व्यास उवाच

धर्मराजमहाभाग श्रृणु वक्ष्यामि तत्त्वतः (३)॥ १०-३१८॥

यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम्।

तदेकपरमं तत्त्वं कैवल्यपदकारणम् (४)॥ १०-३१९॥

श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्।

ब्रह्महत्यादिपापघ्नं इति वेदविदो विदुः (५)॥ १०-३२०॥

१२४अ) श्रीरामनामेति जनाये जपति च सर्वदा।

ते वा भुक्तिश्च मुक्तिश्च भविष्यति न संशयः (६)॥ १०-३२१॥

स्तवराजं पुराप्रोक्तं नारदेन च धीमता।

तत्सर्वं सप्रवक्ष्यामि हरिध्यान पुरः सरम् (७)॥ १०-३२२॥

तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम्।

दारिद्रदुःखशमनं सर्वसंपत्करं शिवम् (८)॥ १०-३२३॥

विज्ञानफलदं दिव्यं मोहौकफलसाधनम्।

नमस्कृत्वा प्रवक्ष्यामि रामं कृष्णं जगन्मयम् (९)॥ १०-३२४॥

अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे।

स्मरेत् कल्पतरोर्मुले रत्नसिंहासनं शुभम् (१०)॥ १०-३२५॥

तन्मध्ये मृदलं पद्मं नानारत्नैश्च वेष्टितम्।

स्मरेन् मध्ये दाशरथिं सहस्रादित्य तेजसम् (११)॥ १०-३२६॥

पितुरंकगतं रामं द्रंद्रनीलमणिप्रभम्।

कोमलाङ्गं विशालाक्षं विद्युद्वर्णां वरावृतम् (१२)॥ १०-३२७॥

भानुकोटिप्रतीकाशं किरीटेन विराजितम्।

रत्नग्रैवेयकेयुर रत्नकुण्डलमण्डितम् (१३)॥ १०-३२८॥

रत्नकंकणमंजीर कटिसूत्रैरलंकृतम्।

श्रीवत्सकोस्तुभोरस्कं मुक्ताहारोपशोभितम् (१४)॥ १०-३२९॥

दिव्यरत्नसमायुक्तं मुद्रिकाभिरलंकृतम्।

राघवं द्विभुजं वालं राममीषत्स्मिताननें (१५)॥ १०-३३०॥

तुलसीकुंदमंदार पुष्पमालैरलंकृतम्।

कर्पूरागुरुकस्तूरी दिव्यगंधानुलेपनम् (१६)॥ १०-३३१॥

योगशास्त्रेष्वभिरतं योगीशं योगदायकम्।

सदाभरतसौमित्रि शत्रुघ्नैरूपशोभितम् (१७)॥ १०-३३२॥

विद्याधरसुराधीशैः सिद्धगं[ध]र्वकिन्नरैः।

योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम् (१८)॥ १०-३३३॥

विश्वामित्रवसिष्ठादि मुनिभिः परिसेवितम्।

सनकादिमुनिश्रेष्ठैर्योगिवृंदैश्च सेवितम् (१९)॥ १०-३३४॥

रामं रलुवरं वीरं धनुर्वेदविशारदम्।

मंगलायतनं देवं रामं राजीवलोचनम् (२०)॥ १०-३३५॥

सर्वशास्त्रार्थतत्त्वज्ञमानंदकरसुन्दरम्।

कौसल्यानंदनं रामं धनुर्वाणधरं हरिम् (२१)॥ १०-३३६॥

एवं संचितयेद्विष्णुं यज्योतिरमलं विभुम्।

प्रहृष्टमानसो भुत्वा मुनिवर्यः सनारदः (२२)॥ १०-३३७॥

सर्वलोकहितार्थाय तुष्टा व रघुनंदनम्।

कृतांजलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम् (२३)॥ १०-३३८॥

यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम्।

यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम् (२४)॥ १०-३३९॥

१२४ब) विज्ञानदेतुं विमलायताक्षं प्रक्षानरूपं सुमुखैकहेतुम्।

श्रीरामचंद्रं हरिमादिदेवं परात्परं राममहं भजामि (२५)॥ १०-
३४०॥

कविं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमोशितारम्।

अणोरणीयां समनन्तवीर्यं प्राणेश्वरं राममसौदेदर्श (२६)॥ १०-३४१॥

नारद उवाच

नारायणं जगन्नथमभिरामं जगत्पतिम्।

कविं पुराणं वागीशं रामं दशरथात्मजम् (२७)॥ १०-३४२॥

राजराजं रघुवरं कौसल्यानन्दवर्धनम्।

भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम् (२८)॥ १०-३४३॥

सत्यं सत्यप्रियश्रेष्ठं जानकीवल्लभं विभुम्।

सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम् (२९)॥ १०-३४४॥

आदित्यं रविमीशानं घृणिसूर्यमनामयम्।

आनंदभूषिणं सौम्य राघवं करुणामयम् (३०)॥ १०-३४५॥

जामग्नितपोमूर्त्तिं रामं परश्वधारिणम्।

वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षवाहनम् (३१)॥ १०-३४६॥

श्रीशार्ङ्गधारिणं रामं चिन्मयानंदविग्रहम्।

हलद्दग्विष्णुमीशानं वलरामं कृपानिधिम् (३२)॥ १०-३४७॥

श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्।

मत्स्यकुर्मवराहादि रूपधारिणमव्ययम् (३३)॥ १०-३४८॥

वासुदेवं जगद्योनि अनादिनिधनं हरिम्।

गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम् (३४)॥ १०-३४९॥

गोपालं गोपरिवारं गोपकन्या समावृतम्।

विद्युत्पुंजप्रतीकाशं रामं कृष्णं जगन्मयम् (३५)॥ १०-३५०॥

गोगोपिकासमाकीर्णं वेणुवादन तत्परम्।

कामरूपं कलावन्तं कामनीकामयं विभुम् (३६)॥ १०-३५१॥

मन्मथं मथुरानाथं माधवं मकरध्वजम्।

श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम् (३७)॥ १०-३५२॥

भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम्।

सर्वदुःखहरं वीरं दुष्टदानववैरिणम् (३८)॥ १०-३५३॥

श्रीनृसिंहं महावाहुं महान्तं दीप्ततेजसम्।

चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम् (३९)॥ १०-३५४॥

आदित्यं मण्डलगतं निश्चितार्थकरूपिणम्।

भक्तप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम् (४०)॥ १०-३५५॥

कौसलेयं कलामूर्त्तिं काकुस्थं कमलाप्रियम्।

संहासने समासीनं नित्यव्रतमकल्मषम् (४१)॥ १०-३५६॥

१२५अ) विश्वामित्रप्रियं दान्तं स्वदारानियतव्रतम्।

यज्ञेशं यज्ञपुरुषं यज्ञपालन तत्परम् (४२)॥ १०-३५७॥

सत्यसंधं जितक्रोधं शरणागतवत्सलम्।

सर्वक्लेशप्रहरणं विभीषणवरप्रदम् (४३)॥ १०-३५८॥

दशग्रीवं हरं रुद्रं केशवं केशिमर्दनम्।

वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम् (४४)॥ १०-३५९॥

नरवानरदेवैश्च सेवितं हनुमत् प्रियम्।

शुद्धं सूक्ष्मं परं शान्तं तारकं ब्रह्मरूपिणम् (४५)॥ १०-३६०॥

सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम्।

सर्वकारणकर्त्तारं निदानं प्रकृतेः परम् (४६)॥ १०-३६१॥

निरामयनिराभासं निरवादं निरंजनम्।

नित्यानन्दं निराकारं अद्वैतन्तमतः परम् (४७)॥ १०-३६२॥

परात्परात्परं तत्त्वं सत्यांनंदचिदात्मकम्।

मनसा शिरसा नित्यं प्रणमामिरघुत्तमम् (४८)॥ १०-३६३॥

भवोद्भवं वेदविदो वरिष्टमादित्यचंद्रानिलसुप्रभावम्।

सर्वात्मकं सर्वगतं स्वरूपं नमामि रामं तमसः परस्तात (४९)॥ १०-
३६४॥

निरंजनं निःप्रतिमं निरीहं राश्रयं निष्कलमप्रपंचम्।

नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं राममहं भजामि (५०)॥ १०-
३६५॥

भवाधिपोतं भरताग्रजातं भक्तप्रियं भानुकलप्रदीपम्।

भूतत्रिनाथं भुवनाधिपत्यं भजामिरामं भवरोगवैद्यम् (५१)॥ १०-
३६६॥

सर्वाधिपत्यं समरंगधीरं सत्यं चिदानंदमयं स्वरूपम्।

सत्यं शिवं शान्तिमयं शरण्यं सनातनं राममहं भजामि (५२)॥
१०-३६७॥

कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम्।

कुमारवेद्यं करुणामयन्तं कल्पद्रुमं राममहं भजामि (५३)॥ १०-
३६८॥

त्रिलोकनाथं सरसीरुहाक्तं दयानिधिं द्वंद्वविनाशहन्तुम्।

महावलं वेदनिधिं सुरेशं सनातनं राममहं भजामि (५४ )॥ १०-३६९
॥

वेदान्तवेद्यं विधिमीशितारं अनादिमदं पातमचिन्त्यमाद्यम्।

अगोचरं निर्मलर्मकरुपं नमामि रामं तमसः पुरस्तात् (५५)॥ १०-३७०॥

अशेष वेदात्मकमादिसंज्ञं अजं हरिं विष्णुमनन्तमूर्त्तिं।

अपारसंवित् सुखमेकरूपं नमामि रामं तमसः परस्तात् (५६)॥ १०-३७१॥

१२५ब्) अशेषवेदात्मकमादिसंज्ञं अजं हरिं विष्णुमनन्तमूर्त्तिं।

अपारसंवित् सुहमेकरूपं परात्परं राममहं भजामि (५७)॥ १०-३७२॥

तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम्।

राजाधिराजं रतिमण्डलस्थं विश्वेश्वरं राममहं भजामि (५८)॥ १०-
३७३॥

लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम्।

अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः पुरस्तात् (५९)॥ १०-३७४॥

योगीन्द्रसंज्ञैः शतसेव्यमानं नारायणं निर्मलमादि देवम्।

नतोस्मि नित्यं जगदेकनाथं आदित्यवर्णं नमसः परात् (६०)॥ १०-३७५॥

विभूतिदं विश्वसृजं विराजं गजेन्द्रमीशं रघुवंशनाथम्।

अचिन्त्यमव्यक्तमनन्तमूर्त्तिं ज्योतिर्मयं राममहं भजामि (६१)॥ १०-३७६॥

अशेषसंसारविकारहीनं आदिस्तु संपूर्णमुखाभिरामम्।

समस्तसाक्षी तमसः परस्तान् नारायणं विष्णुमहं भजामि (६२)॥ १०-३७७
॥

मुनिन्द्रगुह्यं परिपूर्णमेकं कलानिधिं कल्मषनाशहेतुम्।

परात्परं यत् परमं पवित्रं नमामिरामं महतो महान्तम् (६३)॥ १०-
३७८॥

ब्रह्माविष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा।

आदित्यविग्रहाश्चैव त्वमेव रघुनन्दन (६४)॥ १०-३७९॥

तपसा ऋषयः सिद्धा साध्यश्च मरुतस्तथा।

विप्रा वेदास्तथा यज्ञः पुराणं धर्मसंहिता (६५)॥ १०-३८०॥

वर्णाश्रमास्तथा धर्मा वर्णधर्मा तथैव च।

यज्ञराक्षसगंधर्व दिक्पालादिगजादिभिः (६६)॥ १०-३८१॥

सनकादि मुनिश्रेष्टा त्वमेवरघुपुंगवः।

वसवोष्टौ त्रयः काला रुद्रा एकादशा स्मृता (६७)॥ १०-३८२॥

तारका दशदिक् चैव त्वमेव रघुनन्दन।

सप्तद्वीपाः समुद्राश्च नागानद्यस्तथा द्रुमाः (६८)॥ १०-३८३॥

स्थावरं जंगमश्चैव त्वमेव रघुनायक।

देवतीर्यङ्मनुष्याणां दानवानां तथैव च (६९)॥ १०-३८४॥

मातापिता तथा भ्राता त्वमेव रघुवल्लभ।

सर्वेषां त्वं परं ब्रह्म त्वन् मयं सर्व एव हि (७०)॥ १०-३८५॥

त्वमक्षरं परं ज्योतिः त्वमेव रघुनन्दन।

शान्तसर्वगतं सूक्ष्मं परं ब्रह्मसनातनम् (७१)॥ १०-३८६॥

राजीवलोचनं रामं प्रणमामि जगत्पतिम्।

१२६अ) ततः प्रसंनः श्रीरामो प्रोवाच मुनिपुंगव (७२)॥ १०-३८७॥

तुष्टास्मि मुनिशार्दूलवृणां ष्वेवरमुत्तमम्।

नारद् उवाच

यदि तुष्टोसि सर्वज्ञ श्रीरामकरुणानिधे (७३)॥ १०-३८८॥

त्वक् मूर्त्तिदर्शने नैव कृतार्थोहं ममेप्सितम्।

धन्याहं कृत्यकृत्योहं पुन्योहं पुरुषोत्तम (७४)॥ १०-३८९॥

अद्य मे सफलं जन्म जीवितं सफलं च मे।

अद्यमेव फलं ज्ञानं अद्यमेव फलं तपः (७५)॥ १०-३९०॥

अद्यमेव फलं सर्वं त्वन्नाम स्मरणं तथा।

त्वत् पादांभोरुहद्वंद्व सद्भक्तिं देहि राघव (७६)॥ १०-३९१॥

ततः परमसंप्रीतो रामः प्राहसनारदम्।

मुनिवर्यमहाभाग मुने त्विष्टं ददामि ते।

यत् त्वया चेप्सितं सर्वं मनसा तद् भविष्यति (७७)॥ १०-३९२॥

नारद उवाच

वरं नया चेरघुनाथ युष्मत् पादाब्जभक्तिः सततं ममास्तु।

इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामयम् एव या च (७८)॥ १०-३९३

॥

इत्ये च मीडितो रामो प्रादात् तस्मै वरान्तरम्।

अद्वैत मम त्वं ज्ञानं त्वन्नामस्मरणं तथा (७९)॥ १०-३९४॥

अन्तर्ध्यान जगन्नाथ पुरतस्तस्यराघव।

इति श्रीरघुनाथस्य स्तवराजमनुत्तमम्॥ १०-३९५॥

सर्वसौभाग्यसंपत्तिदायकं मुक्तिदं शुभम् (८०)॥

कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्॥ १०-३९६॥

गुह्याद्गुह्यतमं दिव्यं तव स्नेहात् प्रकीर्त्तितम् (८१)॥

यः पठेच्छृणुयाद्वापि त्रिसंध्यं श्रद्धयान्वितम्॥ १०-३९७॥

ब्रह्महत्यादिपापानि तत् समानि वहुनि च (८२)॥

स्वर्णस्ते यी सुरापानी गुरुतल्पयुतानि च॥ १०-३९८॥

गोवधाद्युपपापानि अनृतात् संभवानि च (८३)॥

सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः॥ १०-३९९॥

मानसं वाचिकं पापं कर्मणा समुपार्जितम् (८४)॥

श्रीरामस्मरणे नैव तत्क्षणान् नश्यति ध्रुवम्॥ १०-४००॥

इदं सत्यमिदं सत्यं सत्यमेतद् इहोच्यते (८५)।

रामं सत्यं परं ब्रह्म रामात्किंचिन्नविद्यते।

तस्माद् रामस्य भूपोयं सत्यं सत्यमिदं जगत् (८६)॥ १०-४०१॥

श्रीरामचन्द्ररघुपुंगव राजवर्य राजेन्द्ररामरघुनायक राघवेश।

राजाधिराजरघुनंदन रामभद्रदासोहमद्य भवतः शरणागतोस्मि
(८७)॥ १०-४०२॥

रामं रत्नकिरीटकुंडलयुतं केयुरहारान्वितं
सीतालंकृतवामभागं अमलं सिंहासनस्थं विभुम्।

१२६ब) सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा
विश्वामित्रपराशरादि मुनिभिः संस्तूयमानं विभुम् (८८)॥ १०-४०३॥

सकलगुणनिधानं योगिभिः स्तूयमानं भुजविजितविमानं
रक्षसेन्द्रादिमानम्।

सहितवृषभ्यानं सीतयो सांभमानं स्मृत हृदयभानुं
ब्रह्मरामाभिधामम् (८९)॥ १०-४०४॥

रघुवरतवमूर्त्तिमामकमानसाजं नरकगतिं हरन्ते नामधेयं मुखे
मे।

अनिशमतुलभक्त्या मस्तके त्वत् पदाब्जं भवजलनिधिमग्नं

रक्षममार्त्तवन्धे (९०)॥ १०-४०५॥

रामरत्नमहं वन्दे चित्रकूटपतिं हरिम्।

कौसल्याशुक्तिसंभाजं जानकीकंठभूषणम् (९१)॥ १०-४०६॥

इति श्रीसनत्कुमारसंहितायां नारदोक्तं श्रीरामस्तवराजस्तोत्रं समाप्तम्॥

समाप्तमिदं श्रीरामपंचाङ्गम्॥

श्रीगोपालाय नमः

अथ श्रीगोपालमन्त्रः॥

गोपीजनान्ते प्रवदेद् वल्लभायाग्निसुन्दरीम्।

अयं दशाक्षरो मन्त्रो दृष्टा दृष्ट फलप्रदः॥ १०-४०७॥

गोपीजनान्ते प्रवदेद् इति गोपीजनपदमुद्धृत्य वल्लभाय स्वाहेति वदेत्।

तथा च॥

गोपीजनवल्लभाय स्वाहा॥

इति दशाक्षरो मन्त्रः।

अग्निसुंदरी स्वाहा॥

अथ पूजापद्धतिः॥

प्रातः शिरसि शुक्लेब्जे द्विनेत्रं द्विभुजं गुरुं वराभयकरं शान्तं
स्मरेत् तन् नामपूर्वकम्॥

अज्ञानतिमिरान्धस्य ति। शिरसि सहस्रदलकमले परमात्मा सूर्यरूपो हृदये
जीवात्मा वह्नि रूपा मूलाधारे कुण्डलिनी चंद्ररूपा तत् तेजस्त्रयं

एकीभूतं विचिन्त्यते न तेजसा श्रीकृष्णस्य सच्चिदानन्दरूपं शरीरं आर्विभूतं इति हृदि विचिन्त्य तत्र देहे यः कोटि पराद्धानां ब्रह्माण्डानां व्यापकः परमेश्वरश्च श्रीकृष्णः सोधि तिष्ठत इति भावयित्वा॥

कोटि कोटि परार्धानां ब्रह्माण्डो नमधीश्वरः।

प्रसीद परमानन्द त्वां नमस्यामि माधव॥ १०-४०८॥

१२७अ) इति वाचा मनसा काये न नत्वा श्रीकृष्णं प्रणम्य मुलाधारचक्रं पृथिवीस्थानं रक्तवर्णं रशवसवर्णचतुष्कयुक्तचतुर्दलं कुण्डलिनी सुर्यतुल्यप्रचण्डा चन्द्रतुल्यशीतला विद्युत्तुल्यनिभा तिष्ठति मुलाधारेभ्यो परिमूलाधाराद्यंगुलादूर्ध्वं मेद्राद्यंगुलाद् अध-
एकाङ्गुलपरितितं स्वाधिष्ठानचक्रं वह्निस्थानं वभमयरलवर्णषष्ठ्कयुक्तं षड्दलं स्वाधिष्ठानस्योपरिनाभौ मनिपुरकचक्रे रत्नाद्यं जलस्थानम्॥

ड ढ ण त थ द ध न प फ दशवर्णयुक्तदशदलं

मणिपूरकस्योपरिहृदये।

अनाहतचक्रं वायुस्थानं सुषुप्तिस्थानं च क ख ग घ ङ च छ ज झ
ञ ट ठ द्वाद * वर्णयुक्त द्वादशदलं अनाहतपद्मस्योपरिगले
विशुद्धचक्रं स्वप्नस्थानमाकाशस्थानं च।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः षोडशस्वरयुक्त षोडशदलम्।

विशुद्धचक्रस्योपरिभ्रुमध्ये आज्ञाचक्रं जाग्रत्स्थानं आकाशस्थानं
च।

हक्षः युक्तदलद्वयमिति चिन्तयेत्॥

ततो मूलाधारस्वाधिष्ठानमणिपुरकानाहतविशुद्धा ज्ञानामकानि
षड्चक्राणिभित्वा कुण्डलिनी सहस्त्रदलकमलस्थ चंद्रमण्डलं प्रापप्य
चंद्रमण्डलामृतम् पीतवती पुनराज्ञा
विशुद्धानाहतमणिपुरकस्वाधिष्ठानानि भित्वा कुण्डलिनी मुलाधारे
गतेति भावयेत्।

तत उत्थाये मलमुत्रादि त्यागं कृत्वा हस्तपादादिकं शोधयित्वा

दन्तधावनं कृत्वाचम्यविधिवज्जलाशये उद्धृतोदकेन वा स्नानं कुर्यात्॥

अंकुशमुद्रयादित्यमण्डलात्॥

ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति।

काविरे नर्मदे सिंधोर्जलेस्मिन् सन्निधिं कुरु॥ १०-४०९॥

इति मन्त्रेणतीर्थमावाह्य जले मूलमन्त्रमष्टधा जपेत्।

तस्मिञ्जले हरिं च चिन्तयेत्।

ततः कुं।भमुद्रया स्वशिरसि वारत्रयं जलं दद्यात्।

ततो गात्रं मार्जयित्वाचमनं कृत्वा देवान् ऋषीन् पित्रुंस्तर्पयेत्॥

ततो धेनुमुद्रयामृतीकृत्य रविमण्डला च्छ्रीकृष्णे हा गच्छ
गच्छेत्यावाह्य मूलमुच्चार्य श्रीकृष्णं तर्पयामिति सन्तर्प्प गायत्रीं

जप्त्वा सूर्यायार्घं दद्यात्॥

१२७ब्) ततो जलादुत्थाय धौते वाससी परिधायाचम्य प्रक्षालितपाणिपादः पवित्रमुद्रायुक्त दक्षिणहस्तानामिकामध्यपर्वतश्वेतोर्ध्वतिलक आचम्य दक्षिणहस्ते जलं गृहीत्वा नम इति मन्त्रेण वामहस्ते जलं निधाय वामहस्ताङ्गुलिसंधिगतैर्जलविन्दुभिः स्वाहेति मन्त्रेण स्वशिरः प्रोक्षयेत्॥

ततो स्त्राय फट् इति॥

वामहस्ताद् दक्षिणहस्तेन जलं गृहीत्वाधः प्रक्षिपेत्।

एवं वारचतुष्टयं कुर्यात्।

पुनर्दक्षिणहस्ते नम इति मन्त्रेण जलं गृहीत्वा वामनासिकयाघ्राय किंचिज्जलं नासिकान्तर्गतं दक्षिणप्राणेननि स्मृतं इति विचिन्त्याधः प्रक्षिपेत॥

ॐ गोपीजनवल्लभाय विद्महे वासुदेवाय धीमहि तन्नः कृष्णः प्रचोदयात् (३)॥

इति श्रीकृष्णगायत्रीं जप्त्वानेनमन्त्रेणादित्यमण्डलस्थाय
श्रीकृष्णायायार्घो नमः॥

इति श्रीकृष्णाय जलैरर्घं दद्यात्॥

इति मन्त्रसंध्या॥

तथा पूजामण्डपद्वारे उपविश्य द्वारदेवताभ्यो नमः।

इति गंधादिना द्वारदेवताः संपूज्य गृहाभ्यन्तरं प्रविश्य

ॐ ब्रह्मणे नमः॥

ॐ वास्तु पुरुषाय नमः इति पूजयेत्॥

तदग्रे कुशासनं तदुपरि व्याघ्रचर्ममृगचर्मा वा तदुपरि वस्त्रं
पातयित्वा प्रोक्ष्य कृतांजलिः।

मेरुपृष्ठ-ऋषिः सुतलं च्छन्दः कूर्मो देवता आसनोपवेशने विनियोगः॥

इति पठित्वा॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।

त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥ १०-४१०॥

इति पृथिवीमन्त्रेण पृथिवीं ऊजयेत्॥

तत आधारशक्तिकमलासनाय नम इत्यासनं सपूज्य।

तदुपरि स्वस्तिकासनादि आसनं वद्धा उपविशेत्।

स्थापयेद् दक्षिणे भागे पूजा द्रव्यानि चात्मनः।

सुवासिनां वुसंपूर्णं सव्ये कुंभं सुशोभनम्॥ १०-४११॥

प्रक्षालतालकरयोः पृष्ठे पात्रं निधापयेत्।

दीपस्य ज्वलितस्यापि सन्निधानं प्रकल्पयेत्॥ १०-४१२॥

देवस्य मस्तकं कुर्यात् कुसुमोपहितं सदा।

पूजाकाले देवतायातो परिभ्रामयेत् करम्॥ १०-४१३॥

वामकपोले गुरुभ्यो नमः।

दक्षिणकपोले गणेशाय नमः।

मध्ये श्रीकृष्णदेवतायै नमः॥

इति प्रणम्य॥

असुरान्तकचक्राय स्वाहा।

अस्त्राय फट्।

इति उच्चार्य हस्तौ करतलपृष्टयोः संशोध्य ऊर्ध्वोर्ध्वक्रमेण तालत्रयं दत्त्वा नाराचमुद्रया स्फोटिकाभिर्दशदिग्वन्धनं च कृत्वा त्रैलोक्यं रक्ष रक्ष हूं फट् स्वाहा॥

इति मन्त्रेणजलेनात्मानं वेष्टयित्वा चतुर्दिक्ष्वग्निप्राकारं चिन्तयेत्।

ततो भूतशुद्धिं कुर्यात्॥ यथा॥

स्वाङ्के उत्तानहस्तौ कृत्वा सोहमिति मन्त्रेण प्रदीपकलिकाकारं हृदिस्थं जीवात्मानं मूलाधारस्थं कुण्डलिन्या सहशिरस्थ सहस्त्रदलकमलस्थ परमात्मनिलीनं विचिन्त्य॥

पादतोजानुपर्यन्तं चतुरश्रं स चक्रकम्।

लंयुतं पीतवर्णं च भुवः स्थानं विचिन्तयेत्॥ १०-४१४॥

जान्वोरानाभिचन्द्रार्धनिभं पद्मेन लाञ्छितम्।

शुक्लवर्णं सवीजेन युतं ध्यायेदपांस्थलम्॥ १०-४१५॥

नाभितः कण्ठपर्यन्तं सत्रिकोणं सरक्तकम्।

सस्वस्तिकं स्ववीजेनयुक्तं वह्नेस्तु मण्डलम्॥ १०-४१६॥

कण्ठाद्भ्रूमध्यपर्यन्तं कृष्णं वायोस्तु मण्डलम्।

षट्कोणं विन्दुभिः षड्भियुक्तं वीजेन चिन्तयेत्॥ १०-४१७॥

भ्रूमध्याद्ब्रह्मरन्ध्रान्तं वर्तुलं ध्वजलांच्छितम्।

धूम्रवर्णं स्ववीजेन युक्तं ध्यायेन् नभस्थलम्॥ १०-४१८॥

पृथिव्या लं वीजं जलस्य वं वीजं अग्नेः रं वीजं वायोर्यं वीजं
आकाशस्य हं वीजम्॥

एवं ध्यात्वा ततस्तानि भूतानि प्रविलापयेत्।

पृथ्वीमप्सु च तौ वह्नौ वह्निं वायौ समीरणम्॥ १०-४१९॥

प्रविलाप्य तथाकाशे आकाशं प्रकृतौ ततः।

अपरब्रह्मरूपां तां मायाशक्तिपरात्मनि॥ १०-४२०॥

इति समस्तदेहादि प्रपंचं परमात्मनि।

प्रविलाप्य पुरुषाकार भागनादि भवसंचितम्॥ १०-४२१॥

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम्।

सुरापान हृदायुक्तं गुरुतल्पकटिद्वयम्॥ १०-४२२॥

तत् संसर्गिपदद्वंद्वं अंगप्रत्यंगपातकम्।

उपपातकरोमाणं रक्तश्मश्रुविलोचनम्॥ १०-४२३॥

खड्गचर्मधरं कृष्णं वामकुक्षौ विचिन्तयेत्।

तत् इडावक्रं वामेनसिधुम्रवर्णं यमिति वायुवीजं षोडशवारं जपन्
वामनासापुटेन वायुना देहमापूर्यमिति चतुःषष्टिवारं जपन् कुर्वन्
देहं संशोष्य पुनर्यमिति द्वात्रिंशद्वारं जपन् दक्षिनासापुटे न
वायुं रेचयेत्।

१२८ब्) ततोरुणेन वायुसंवद्धे नरमिति वह्निवीजं षोडशवार जप्तेन
दक्षनासापुटेन वायुनादेहमापूर्य चतुष्षष्ठिवार जप्तेन कुंभकं
कुर्वन् तद्भस्मीभूतमिति विचिन्त्य रमिति द्वात्रिंशद्वारं जपन् वामनासया
भस्मना सहवायुं रेचयेत्।

ततः ठमिति चंद्रवीजं शुभ्रं प्रकृत्यात्मकं वामनासापुटेन
पुरुषात्मकं ललाटचन्द्र षोडशवारं जपन्नयेत्॥

ततो वमिति चतुःषष्ठिवारं जपन् ललाटचंद्रादादिक्षां तां
अक्षरमयीं अमृतवृष्टिं निपात्य तया देवोपासनयोग्यं सकलं वपुः
कुर्वन् लमिति द्वात्रिंशद्वारं जपन् दक्षिणनासया वायुं रेचयेत्।

पुनरुत्यादयेद् देहं पवित्रं परमात्मनः॥ १०-४२४॥

शब्दब्रह्मात्मिका माया मातृका प्रकृतिः परा।

अजायनजगन्मातु राका तु राकाशं नभेसोनिलः॥ १०-४२५॥

समीरणाद् अभूद्वह्निर्वह्नेरापस्ततो मही।

स्वीयमेत्योपिभूतेभ्यस्तेजोरूपं कलेवरम्॥ १०-४२६॥

देवताराधने योग्यमुत्पन्नमिति भावयेत्।

अस्मिन् देहे परात्मायं सर्वज्ञः सर्वशक्तिमान्॥ १०-४२७॥

समस्तदेवता रूपः सर्वमन्त्रमयः शुभः।

आत्मरूपेण देहे स्वजीवभावेन तिष्ठति॥ १०-४२८॥

इत्यवभावना मुख्या भूतशुद्धिरिहोदिता।

ततो हृदिहस्तं दत्वा॥

आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ स इति मम प्राणा इह प्राणा एवम् (१२)॥

मम जीव इह स्थितः॥

एवं १२ मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणाः
इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥

इति वीजं भ्यसेत्॥

ततः शिरोवदनदृक् श्रवणघोणगण्डौष्ठदन्तद्वयेषु सशिरोमुखेषु च इति
क्रमाद् विन्यसेत्॥

हलश्च करपादसंधिषु उदगग्रकेषु वामपार्श्वे
द्वयपृष्ठनाभ्युदरकेषुयाद्या नवहृदयकक्ष ककुत्करमूलदो
पदयुगोदरवक्रगतान् वुधः॥

हृदय पूर्वमनेन यथान्वहं न्यसतु कलेवर सिद्धये॥

ॐ ब्रह्मर्षिः गायत्री च्छन्दः मातृकासरस्वती देवताहलो वीजानि स्वरः
शक्तयः मातृका न्यासे विनियोगः।

१२९अ) ततः पंचाशल्लिपिभिरित्यादिनावाग्देवतां ध्यात्वा नमस्कुर्यात्।

ततः॥ अं नमो ब्रह्मरंध्रे।

इँत्यादि मातृका न्यासं समाप्य केशवकीर्त्यादि न्यासं कुर्यात्।

यथा।

उद्यत् प्रद्योतनशतरुचिं तप्तहेमावदातं पार्श्वद्वंद्वे जलधिसुतया
विश्वधात्र्या च जुष्टम्।

नानारत्नोल्लसितविविधा कल्पमा प्रीतवस्त्रं विष्णुं वन्दे
दरकमलकौमोदक्रीचक्रपाणिम्।

अंकेश वायकीर्त्यै नमः।

आं नारायणाय कान्त्यै नमः।

इं माधवाय तुष्ट्यै नमः।

ईं गोविन्दाय पुष्ट्यै नमः।

ॐ विष्णवे वृत्त्यै नमः।

ॐ मधुसूदनाय शान्त्यै नमः।

ऋँ त्रिविक्रमाय क्रियायै नमः।

ॠँ वामनाय दयायै नमः।

ऌँ श्रीधराय मेधायै नमः।

ॡँ हृषीकेशाय हर्षाय नमः।

एँ पद्मनाभ्याय श्रद्धायै नमः।

ऐँ दामोदरायज्ञायै नमः।

औँ वासुदेवाय लक्ष्म्यै नमः।

औँ संकर्षणाय सरस्वत्यै नमः।

अँ प्रद्युम्नाय प्रीत्यै नमः।

अः अनिरुद्धाय रत्यै नमः।

कं चक्रिणे जयायै नमः।

खं गदिने दुर्गायै नमः।

गं शार्ङ्गिणे प्रभायै नमः।

घं खड्गिने सत्यायै नमः।

ङं शंखिने चण्डायै नमः।

चं हलिने वाण्यै नमः।

छं मुसुलिने विलासिन्यै नमः।

जं शूलिने विजयायै नमः।

झं पाशिने विरजायै नमः।

ञं अंकुशिने विश्वायै नमः।

टं मुकुन्दाय विनोदायै नमः।

ठं नन्दजाय सुनन्दायै नमः।

डं नन्दिने स्मृत्यै नमः।

ढं नारायणाय ऋद्ध्यै नमः।

णं नरकजिते समृद्ध्यै नमः।

तं हराय शुद्ध्यै नमः।

थं कृष्णाय वुद्ध्यै नमः।

दं सत्याय भुक्त्यै नमः।

धं सात्त्वताय सत्यै नमः।

नं साराय क्षमायै नमः।

पं शूराय रमायै नमः।

फं जनार्दनाय उमायै नमः।

बं भूधराय क्लेदिन्यै नमः।

भं विश्वमुर्त्तये क्लिन्नायै नमः।

मं वैकुण्ठाय वसुदायै नमः।

यं त्वगात्मने पुरुषोत्तमाय वसुधायै नमः।

१२९ब्) रं सृगात्मने वलिने परायै नमः।

लं मांसात्मने वलानुजाय परायणायै नमः।

वं वेदात्मने वलायसूक्ष्मायै नमः।

शं अस्थ्यात्मने वृषघ्नाय संध्यायै नमः।

षं मज्ज्ञात्मने वृषाय प्रज्ञायै नमः।

सं शुक्रात्मने हंसाय प्रभायै नमः।

हं प्राणात्मने वराहाय निशायै नमः।

लं शक्त्यात्मने विमला या मोघायै नमः।

क्षं क्रोधात्मने नरसिंहाय विद्युतायै नमः।

इति मातृका स्थानेषु न्यसेत्।

श्रीकामश्चेत्॥

श्री-अंकेशवायकीर्त्यै नम इत्यादि न्यसेत्।

अथ तत्त्व न्यासः।

मं नमः पराय जीवतत्त्वात्मने।

पं नमः पराय नमस्तत्त्वात्मने।

इति त्रयं हृदये।

नं नमः पराय शब्दतत्त्वात्मने नमः।

इति शिरसि।

धं नमः पराय स्पर्शतत्त्वात्मने इति मुखे॥

दं नमः परायरूपतत्त्वात्मने नमः।

इति हृदये॥

थं नमः पराय रसतत्त्वात्मने नमः लिंगे।

तं नमः पराय गंधतत्त्वात्मने पादयोः।

णं नमः पराय श्रोत्रतत्त्वात्मने श्रोत्रयोः।

ढं नमः पराय त्वक् तत्त्वात्मने नमः।

इति त्वचि सर्वाङ्गे॥

डं नमः पराय दृक् तत्त्वात्मने नमः चक्षुषोः।

ठं नमः पराय जिह्वातत्त्वात्मनो जिह्वायां।

टं नमः पराय नासातत्त्वात्मने नासायाम्।

ञं नमः पराय वाक्तत्त्वात्मने नमः वाचि मुखे।

ऋं नमः पराय पाणितत्त्वात्मने पाण्यो।

जं नमः पराय पादतत्त्वात्मने नमः पादयोः।

छं नमः पराय पायुतत्त्वात्मने नमः गुदे।

चं नमः पराय उपस्थतत्त्वात्मने उपस्थे॥

ङं नमः पराय आकाशतत्त्वात्मने शिरसि।

घं नमः पराय वायुतत्त्वात्मने मुखे।

गं नमः परायस्तेजस्तत्त्वात्मने हृदि।

खं नमः पराय जलतत्त्वात्मने नमः वरणयोः।

गं नमः पराय हृत्पुण्डरीकतत्त्वात्मने नमः हृदये।

हं नमः पराय द्वादशकलाव्याप्तसूर्यमण्डलतत्त्वात्मने नमः।

सं नमः पराय षोडशकलाव्याप्त चन्द्रमण्डलतत्त्वात्मने नमः।

वं नमः पराय दशकलाव्याप्तवह्निमण्डलतत्त्वात्मने नमः।

१३०अ) त्रयमुपर्युपरिक्रमेण न्यसेत्।

षं नमः पराय परमेष्ठितत्त्वात्मने वासुदेवाय नमः शिरसि।

यं नमः पराय पुस्त्वतत्त्वात्मने नारायणाय नमः।

अस्यो लं नमः पराय विश्वतत्त्वात्मने प्रद्युम्नाय नमः हृदि।

रं नमः पराय निवृत्तितत्त्वात्मने अनिरुद्धाय नमः लिंगे।

लं नमः पराय सर्वतत्वात्मने नारायण्याय नमः चरणयोः।

क्षौं नमः पराय कांपतत्त्वात्मने नृसिंहाय नमः सर्वगात्रेषु।

इति तत्त्व न्यासः॥

इति केतेधिकृतो भवति ध्रुवं सकलवैष्णवमन्त्र जपादिषु॥

ततः षोडशवारं कामवीजं जप्त्वा दक्षिणनासापुटेन वायुं रेचयेत्।

द्वात्रिशद्वारं कामवीजं जप्त्वा वामनासापुटेन वायुं पुरयेत्।

चतुःषष्ठिवारं कामवीजं जप्त्वा नासापुटद्वयं धृत्वा कुंभकं *
र्यात्।

इत्यकः प्राणायामः।

एवं प्राणायमत्रयं कुर्यात्।

अथ पीठ न्यासः॥

स्व हृदि॥ आधारशक्त्यै नमः॥

प्रकृत्यै नमः॥ कमठाय नमः॥

शेषाय नमः॥ क्षमायै नमः॥

क्षीरसिंधवे नमः॥ श्वेतद्वीपाय नमः॥

रत्नोज्ज्वलसहित महामण्डपाय नमः॥

पुर्वस्याम्॥ मन्दाराय नमः॥ दक्षिणे॥

सन्तानकाय नमः॥ पश्चिमे॥

परिजाताय नमः॥ उत्तरे॥

कल्पवृक्षाय नमः॥ मध्ये॥

हरिचन्दनाय नमः॥ दक्षांसे॥

धर्माय नमः॥ वामांसे॥

ज्ञानाय नमः॥ दक्षोरुमूले॥

वैराग्याय नमः॥ वामोरुमूले॥

ऐश्वर्याय नमः॥ मुखे॥

अधर्माय नमः॥ कट्याम्॥

अज्ञानाय नमः॥ दक्षपार्श्वे॥

अवैराग्याय नमः॥ वामपार्श्वे॥

अनैश्वर्याय नमः॥

पुनर्हृदिशेषाय नमः॥

अब्जाय नमः॥

अं सूर्यमण्डलाय दशकलात्मने नमः।

ऊं सोममण्डलाय षोडशकलात्मने नमः।

मं वह्निमण्डलाय दशकलात्मने नमः।

उपर्युपरिक्रमेण।

सं सत्वाय नमः।

रं रजसे नमः।

तं तमसे नमः।

आं आत्मने नमः।

अं अन्तरात्मने नमः।

पं परमात्मने नमः।

ह्रीँ ज्ञानात्मने नमः।

आं विमलायै नमः।

ईं उत्कर्षिण्यै नमः॥

ऊं ज्ञानायै नमः।

एँ क्रियायै। ऐँ योगायै।

१३०ब) औँ प्रत्यै नमः।

औँ सत्यायै।

अं ईशानायै नमः।

हृत् पद्मस्याष्टदले पूजयित्वा कर्णिकायाम्।

अः अनुग्रहायै नमः।

तत् कर्णिकोपरि॥

ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय

सर्वात्मसंयोगयोगपद्मपीठात्मने नमः।

इति न्यसेत्।

ततः कृतांजलिः पठेत्।

अस्य मन्त्रस्य नारद ऋषिः विराट् च्छंदः कृष्णं प्रकृति दुर्गाधिष्ठा
तृदेवता क्लीँ वीजं स्वाहा शक्तिः पुरुषार्थचतुष्टये विनियोगः॥

प्रकृतिर्मूलकारणमित्यर्थः॥

ततो वरदाय ऋषये नमः। सिरसि॥

विराटच्छंदसे नमः। इति मुखे।

सकललोकमङ्गलाय श्रीकृष्णाय देवतायै नमः॥

इति हृदिन्यसेत्॥

अंजलिं वद्धा दुर्गायै अधिष्ठा तृदेवतायै नमः।

इति पठेत्॥

ततः षडङ्गानि॥

आचक्राय स्वाहा॥

हृदयाय नमः।

इत्यङ्गुष्ठयोः।

सुचक्राय शिखायै वौषट्।

इति शिखायाम्॥

त्रैलोक्यरक्षणचक्राय स्वाहा।

कवचाय हूम्।

इति सर्वाङ्गे।

असुरान्तकचक्राय स्वाहा।

अस्त्राय फट्।

इति करतलपृष्ठयोः।

तस्य ऊर्ध्वोर्ध्वं तालत्रयं दत्वा च्छोटिकाभिर्दशदिग्वन्धनं कुर्यात्।

अथ दशाङ्गानि॥

गं नमो हृदि।

पीं नमो मूर्द्धि॥

जं नमः शिखायाम्।

नं नमः सर्वगात्रे॥

वं नमः करयोः॥

लं नमः दक्षपार्श्वे।

भां नमः वामपार्श्वे॥

यं नमः कट्याम्॥

स्वां नमः पृष्ठे॥

हां नमः मूर्द्धि॥

ततः प्रणवपुटितं मुलमन्त्रं हस्तयोरन्तर्वाह्ये पार्श्वे व्यापकं न्यस्त्वा सर्वोत्कृष्टपरमज्योतिर्मयः कृष्णस्तस्य सकलीकरणार्थं करन्यास उच्यते॥

अथ सृष्टे॥

ॐ इति दक्षिणकरस्याङ्गुष्ठप्रथमपर्वणि॥

गं द्वितीय पर्वणि॥

ॐ नमस्तृतीय पर्वणि॥

एवम्॥

ॐ पीं ॐ नमः इति तर्ज्जन्याः पर्वत्रये।।

ॐ भाँ ॐ नम इति मध्यमायाः पर्वत्रये॥

ॐ नँ ॐ नम इत्यनामिकायाः पर्वत्रये।

ॐ वँ ॐ नमः कनिष्ठिकायाः पर्वत्रये॥

ॐ ऌँ ॐ नमः इति कनिष्ठिकायाः पर्वत्रये।

ॐ ऌँ ॐ नमः इति कनिष्ठिकायाः पर्वत्रये॥

१३१अ) ॐ भाँ ॐ नम इति अनामिकायाः॥

ॐ नं ॐ नम इति मध्यमायाः।

ॐ स्वां ॐ नमः तर्जन्याः पर्वत्रये॥

ॐ हां ॐ नमः अंगुष्ठपर्वत्रये॥

इति सृष्टेः॥

अथ स्थितः॥

ॐ गँ ॐ नमः इति तर्जन्याः दक्षाङ्गुष्ठे॥

ॐ पीँ ॐ नमः दक्षांगुष्ठेन दक्षतर्जन्याम्॥

ॐ जं ॐ नमस्ते न मध्यमायाम्॥

ॐ नं ॐ नम इति तेन दक्षिनामिकायाम्।

ॐ वं ॐ नमः इति तेन कनिष्ठायाम्।

ॐ लं ॐ नम इति ते वामहस्ततर्जन्य वामाङ्गुष्ठे।

ॐ भां ॐ नम इति वामहस्ताङ्गुष्ठेन तर्जन्याम्।

ॐ यं ॐ नम इति मध्यमायाम्।

ॐ स्वां ॐ नम तेनामिकायाम्।

ॐ हां ॐ नम इति तेन कनिष्ठायाम्।

इति स्थितेः॥

अथ संहारन्यासः॥

ॐ गं ॐ नम इति वामाङ्गुष्ठे।

ॐ पीं ॐ नम इति वामाङ्गुष्ठेन वामतर्जन्याम्॥

ॐ जं ॐ नम इति तेन मध्यमायाम्॥

ॐ नं ॐ नम इति तेनामिकायाम्॥

ॐ वं ॐ नमः इति कनिष्ठायाम्।

ॐ लं ॐ नमः दक्षांगुष्ठेन दक्षकनिष्ठायाम्॥

ॐ भां ॐ नम इति तेनामिकायाम्।

ॐ यं ॐ नम इति तेन मध्यमायाम्॥

ॐ स्वां ॐ नम इति तेन तर्जन्याम्।

ॐ हां ॐ नम इति दक्षतर्जन्या दक्षाङ्गुष्ठे।

इति संहारन्यासः॥

पुनः सृष्टिस्थिती कर्त्तव्ये॥

ॐ गं ॐ नम इति दक्षतर्जन्या दक्षाङ्गुष्ठे॥

ॐ पीं ॐ नम इति दक्षाङ्गुष्ठेन दक्षतर्जन्याम्।

ॐ जं ॐ नम इति तेन मध्यमायाम्।

ॐ नं ॐ नम इति ते नामिकायाम्॥

ॐ वं ॐ नम इति तेन कनिष्ठायाम्॥

ॐ लं ॐ नम इति तेन वामाङ्गुष्ठेन वामकनिष्ठायाम्॥

ॐ भां ॐ नम इति ते नाम्कायाम्॥

ॐ यं ॐ नम इति तेन मध्यमायाम्॥

ॐ स्वां ॐ नम इति तेन तर्जनी॥

ॐ हां ॐ नम इति तर्जन्या दक्षाङ्गुष्ठे।

इति सृष्टेः॥

एवं स्थित्रपि कार्या॥

अयं न्यासः पंचधा कर्त्तव्यः॥

पुनरंगुलेषु स्थितिक्रमाद् दशाङ्ग न्यासः कर्त्तव्यः॥

ॐ गो नमो दक्षकरस्याङ्गुष्ठाय॥

पीं नमो दक्षतर्जन्ये।

जं नमो मध्यमायै॥

नं नमो नामिकायै॥

वं नमः कनिष्ठायै॥

लं नमो वामाङ्गुष्ठायै॥

भां नमस्तर्जन्यै।

१३१ब) यं नमो मध्यमायै।

स्वां नमो नामिकायै।

हां नमः कनिष्ठायै।

ततः आचक्राय स्वाहा॥

अंगुष्ठाभ्यां नमः विचक्राय स्वाहा॥

तर्जनीभ्याम्॥

सुचक्राय मध्यमाभ्याम्।

त्रैलोक्यरक्षणचक्राय स्वाहा।

अनामिकाभ्याम्॥

असुरान्तकचक्राय स्वाहा।

कनिष्ठाभ्यां नम इत्यंगपंचकमपि अगुष्ठादिषु न्यसेत्।

प्रमितैर्मनु वाथ मातृकार्णैरविभिन्नस्यं सविन्दुभिः पुनरेव॥

अनुसंहृति सृष्टिमार्गभेदाद् दशतत्त्वानि च मन्त्रवर्णभाजि॥

मुलमन्त्रमुच्चार्य अं हास्वा यभाल्लव नजपोगो इत्यादिक्रमेण पंचाशद्
वर्णान् मातृकास्थानेषु न्यसेत्।

अथ मन्त्रतत्त्व न्यासः॥

गो नमः पराय पृथिवीतत्त्वात्मने नमः पादयोः।

ॐ पीं नमः पराय सलिलतत्त्वात्मने नमः॥ उपस्थे॥

जं नमः पराय पावकतत्त्वात्मने नमः हृदये।

नं नमः पराय अनिलतत्त्वात्मने नम इति मुखे।

वं नमः पराय आकाशतत्त्वात्मने न इति शिरसि॥

ळं नमः पराय अहंकारतत्त्वात्मने नमः।

भां नमः पराय महत्त्तत्वात्मने नमः॥

इति द्वयं हृदये॥

यं नमः पराय प्रकृतितत्त्वात्मने नमः।

स्वां नमः पराय पुर्।उषतत्त्वात्मने नमः।

यं नमः हां नमः पराय परतत्वात्मने नमः।

इति त्रयं सर्वशरीरे॥

इति संहारः॥

अथ सृष्टिः॥

हां नमः पराय तत्त्वात्मने॥

स्वां नमः पराय पुरुषतत्त्वात्मने नमः।

यं नमः परायप्रकृतितत्त्वात्मने नमः।

सर्वशरीरे॥

भां नमः पराय महत्तत्त्वात्मने नमः॥

लं नमः पराय अहंकारतत्त्वात्मने नमः।

इति द्वयं हृदये॥

वं नमः पर्याय आकाशतत्त्वात्मने नम इति शिरसि॥

नं नमः पराय अनिलतत्त्वात्मने नम इति मुखे॥

जं नमः पराय पावकतत्त्वात्मने नमः हृदये॥

पीं नमः पराय सलिलतत्त्वात्मने नमः उपस्थे॥

गो नमः पराय पृथिवीतत्त्वात्मने नमः पादयोः॥

इति सृष्टिः॥

प्रणवपुटितमूलमन्त्रं केशमारभ्य पादपर्यन्तं व्यत्पयहस्ताभ्य
पादपर्यन्तं व्यत्पयहस्ताभ्यां व्यापकं वारत्रयं न्यसेत्॥

१३२अ) अथ सृष्टिस्थिति संहारक्रमेण वर्णन्यासः॥

तत्र सृष्टिर्यथा॥

गों नम इति मध्यमया शिरसि॥

पिं नम इति मध्यमातर्जनीभ्यां चक्षुद्वये॥

जं नम इत्यंगुष्ठवर्जिताभिः कर्णद्वये॥

नं नमः इत्यंगुष्ठानामिकाभ्यां नासापुटद्वये॥

वं नम इति सर्वाङ्गुलीभिर्मुखे॥

ह्लं नम इति अंगुष्ठतर्जनीभ्यां हृदि॥

भां नम इत्यंगुष्ठमध्यमाभ्यां नाभौ॥

यं नम इत्यंगुष्ठवर्जिताभिर्लिंगे॥

स्वां नम इत्यंगुष्ठवर्जिताभिर्जानुद्वये॥

हां नमः इति सर्वाङ्गुलीभिः पादद्वये॥

गो नम इति मध्यमाया शिरसि॥

पीं नम इति तर्जनीमध्यमाभ्यां चक्षुर्द्वये॥

जं नम अंगुष्ठवर्जिताभिः कर्णद्वये॥

नं नमः अंगुष्ठानामिकाभ्यां [-नामिभ्यां] नासापुटद्वये॥

वं नमः सर्वाङ्गुलीभिर्मुखे॥

इति स्थितिः॥

अथ संहारः॥

ह्रां नमः सर्वाङ्गुलीभिः पादद्वये॥

स्वां नमः अंगुष्ठवर्जिताभिर्जानुद्वये॥

यं नमः अंगुष्ठवर्जिताभिर्लिंगे॥

भां नमः अंगुष्ठमध्यमाभ्यां नाभौ॥

ह्लं नमः अंगुष्ठतर्जनीभ्यां हृदये॥

वं नमः सर्वाङ्गुलीभिर्मुखे॥

नं नमः अंगुष्ठानामिकाभ्यां नासापुटद्वये॥

जं नमः अंगुष्ठवर्जिताभिः कर्णद्वये॥

पीं नमः तर्जनीमध्यमाभ्यां चक्षुर्द्वये॥

गो नमः मध्यमया शिरसि॥

पुनः सृष्टिस्थिती कर्त्तव्ये॥

अथ विभूतिपंजरन्यासः॥

गो आधारे॥

पीलिंगोजनाभौ॥

न हृदि॥

व गले॥

ल्ल मुखे॥

भा दक्षांसे॥

य वामांसे॥

स्वा दक्षोरौ॥

हा वामोरौ (१)॥

गों कधरायाम्॥

पी नाभौ॥

ज कुक्षौ॥

न हृदि॥

च दक्षहस्तने॥

ल्ल वामस्तने॥

भा दक्षपार्श्वे॥

य वामपार्श्वे॥

स्वा दक्षनितंवे॥

हा वामनितंवे (२)॥

गो शिरसि॥

पी मुखे॥

ज दक्षनेत्रे॥

न वामनेत्रे॥

व दक्षकर्णे॥

ल्ल वामकर्णे॥

भा दक्षनासि॥

य वामनासि॥

स्वा दक्षकपोले॥

वा वामकपोले (३)॥

गो दक्षभुजे॥

पी कुर्परे॥

ज मणिवंधे॥

न अंगुलिमुले॥

१३२ब) व अंगुल्यग्रे॥

ल्ल वामवाहुमूले॥

हा कुर्परे॥

य मणिवंधे॥

स्वा अंगुलिमूले॥

हा अंगुल्यग्रे (४)॥

गो दक्षोरुमूले॥

पी जानुनि॥

ज गुल्फे॥

न अंगुलिमूले॥

हा अंगुल्यग्रे॥

मस्तकोपरि (५)॥

गो पूर्वे॥

पी अग्निकोणे॥

ज दक्षिणे॥

न नैऋतकोणे॥

व पश्चिमे॥

ळ वायुकोणे॥

भा उत्तरे॥

य ईशानकोणे॥

स्वा ईशानपूर्वयोर्मध्ये॥

हा नैऋतपश्चिमयोर्मध्ये (६)॥

गो मूर्ध्निसकले॥

पी दक्षभुजे॥

ज वामभुजे॥

न दक्षोरौ॥

व वामोरौ॥

ळ्ळ शिरसि॥

भा दक्षचक्षुषि॥

य वामचक्षुषि॥

स्वा मुखे॥

हा कंठे (७)॥

गो दक्षचक्षुषि॥

ज हृदये॥

न उदरे॥

व मूलाधारे॥

ळ लिंगे॥

भा दक्षजानुनि॥

य वामजानुनि॥

स्वा दक्षपादाग्रे॥

हा वामपादाग्रे (८)॥

गो दक्षकर्णे॥

पी वामकर्णे॥

ज दक्षगण्डे॥

न वामगण्डे॥

व दक्षिणांसे॥

ल्ल वामांसे॥

भा दक्षस्तने॥

य वामस्तने॥

स्वा दक्षपार्श्वे॥

हा वामपार्श्वे (९)॥

गो दक्षिणोरुमुलोर्ध्वदेशे स्फिचि॥

ज दक्षोरौ॥

न वामोरौ॥

व दक्षजानुनि॥

ल्ल वामजानुनि॥

भा दक्षजंघायाम्॥

य वामजंघायाम्॥

स्वा दक्षपादे॥

हा वामपादे (१०)॥

इति कथितं विभूतिपंजरं सकलसुखार्थधर्ममोक्षदम्।

वरतरुणीमनोनुरंजनं हरिचरणांबुजं भक्तिवर्धनम्॥

स्फुर्त्तयेथास्य मन्त्रकीर्त्यते मुर्त्तिपंजरम्।

आर्त्तिग्रहविषारिघ्नं कीर्त्ति श्रीकान्तिपुष्टिदम्॥

ॐ अंकेशवाय * धात्रे नम इति भाले।

नं आं नाराय अर्यमणे नम इत्युदरे।

मो इं माधवाय मित्राय नमो हृदये।

भं ई गोविंदाय वरुणाय नमः।

गलकुपे॥

गण्डं विष्णवे अंशवे नमः।

दक्षपार्श्वे।

वं ॐ मधुसुदनाय भगाय नमः॥

दक्षभुजमूले॥

तं एं त्रिविक्रमाय विवस्वते नमः।

दक्षगले।

वां ऐं वामनाय इन्द्राय नमः॥

वामपार्श्वे॥

सुं ओं श्रीधराय पूर्ण नम इति वामभुजमूले॥

दं औं हृषीकेशाय पर्जन्याय नमः।

इति वामगले॥

वां अं पद्मनाभ्यायत्वष्ट्रे नम इति पृष्ठे।

यं अः दामोदराय विष्णवे नमः॥

१३३अ) ककुदि॥

ॐ नमो भगवते वासुदेवाय नमो मुद्भिर्ध्रः इति मुर्त्तिपंजल न्यासः।

आ चक्राय स्वाहा।

हृदयाय नम इत्यादिक्रमणपुनः पंचाङ्गलिं न्यसेत्।

अंगुष्ठा ऋजवो हस्तशाखा भवन् मुद्रा हृदये शीर्षके (?) च॥

अधोङ्गुष्ठमुष्टिः शिखायां करद्वंद्वाङ्गुलयोर्ब्रह्मणिस्युः।

नारा च मुष्ट्योर्ध्वगवाहुयुग्मकाङ्गुष्ठतर्जन्युदितोध्वनिस्तु।

विष्वग्विषक्तः कथितास्तु मुद्रा चेद् धक्षिणे मध्यमे संज्ञिकेत्र।

ततः ऋष्यादि न्यासं कुर्यात्॥

श्रीनारद ऋषये नम इत्यादि॥

ततः करकच्छपिकां वद्धा पुष्पं गृहीत्वा श्रीकृष्णं ध्यायेत्।

सुत्रामरत्नदलिता जनमेघपुंज प्रत्यग्रनीलजलजन्मसमानभासम्॥

सुस्निग्धनीलघनकुंचितकेशं जालराजन्मनोज्ञशितिकण्ठशिखण्डचुडम्

(१)॥ १०-४२९॥

रोलंवलालितसरद्रुमसुनकल्पितो तुं समुत्कचनवोत्पलकर्णपूरम्।

लोलालकस्फुरितभालतलप्रदीप्तगण्डस्थली मकरमुन्नतचारुनासम् (२)॥ १०-

४३०॥

सिंदूरसुंदरतराधर सिंदुकुंदमंदारमंदहसितद्युतिदीपितांसम्॥

वन्यप्रवालकुसुमप्रचया व क्लिप्तग्रैघयकोज्ज्वलमनोहरकंवुकंठम् (३)

॥ १०-४३१॥

मत्तभ्रमद् भ्रमरजुष्टसुरत्यमाण सन्तानकप्रसरदामपरिष्कृतांसम्।

हारावलीभगणराजितपीवरोरुव्योमस्थली लसितकौस्तुभभानुमन्तम् (४)॥ १०-४३२॥

श्रीवत्सलक्षणसुलक्षितमुन्नतां समादीर्घपीनपरिवृत्तसुजातवाहुम्।

आवन्धुरोदरमुदारगभीरनाभिं भृङ्गाङ्गनानिकरमङ्गलरोमराजिम्
(५)॥ १०-४३३॥

नानामणिप्रघटिताङ्गदकंकणोर्मिग्रैवेयसारसननुपुररत्नवद्धम्।

दिव्याङ्गरागपरिपिंजरिताङ्गयष्टिमा पीतवस्त्रपरवीतनितंववविम्वम् (६)॥
१०-४३४॥

चारूरुजानुमनुवृत्तमनोजं घंकान्तोन्नतप्रपदनिन्दितकुर्मकान्तिम् (६)॥

माणिक्यदर्पणलसन्नखराजिराजद्रत्नाङ्गुलि च्छदनसुंदरपादपद्मम् (६)
॥ १०-४३५॥

१३३ब) मत्स्याङ्कुशादिदरकेतु यवाब्जवज्र संलक्षितारुणकराङ्घ्रितलाभि-
रामम्।

लावण्यसारसमुदायविनिर्जिताङ्गसौन्दर्यनिर्जितमनोभवदेहकान्तिम् (७)॥ १०-
४३६॥

आस्यारविन्दपरिपूरितवेणुरंध्र लोलत्कराङ्गुलिसमीरितदिव्यरागम्।

शश्वद्द्रवी हृतविहृष्टसमस्तजन्तु सन्तानसन्तति मनन्तसुधींवुराशिम् (८)
॥ १०-४३७॥

मूलाधारे कुण्डलिनी सोमरूपा हृदयकमलमध्ये जीवो वह्निरूपः।

शिरसि परमात्मा सूर्यरूपः तैस्तेजोभिः कृष्णविग्रहो जात इति ध्यायेत्।

अथवा॥ ॐ फुल्लेन्दीवरकान्तमिन्दुवदनं वर्हावतं सप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीतांवरं सुन्दरम्॥

गोपीनां नयनोत्पलार्चिततनुं गोगोपसंघावृतम् गोविन्दं
कलवेणुवादनपरं दिव्याङ्गभूषं भजे॥

इति वा ध्यायेत्॥

ततः कृष्णोहमिति ध्यात्वा मानसैरर्घादिभिस्तं पूजयेत्।

ततोर्घपात्रं स्थापयेत्॥

यथा॥

जलेन मण्डलं निर्मायतदुपरि त्रिपदिकामारोप्य असुरान्तकचक्राय स्वाहा॥

अस्त्राय फट् इति शङ्खं प्रक्षाल्य त्रिपदिकायां स्थापयेत्।

तत्र शङ्खे आ चक्राय स्वाहा॥

हृदयाय नमः॥

इति गंधपुष्पाक्षतान्विक्षिपेत्॥

ततो विमलमातृकां पठन् शुद्धजलेन शङ्खं पूरयेत्।

मं वह्निमण्डलाय दशकलात्मने नम इति त्रिपदिकाम्॥

अं सूर्यमण्डलाय द्वादशकलात्मने नमः॥

इति शङ्खम्॥

ॐ सोममण्डलाय षोडशकलात्मने नम इति जलं पूजयेत्।

ततो गङ्गे च यमुने चैव गोदावरिसरस्वति।

नर्मदे सिन्धुकावेरि जलेस्मिं सन्निधिं कुरु॥

इति सवितृमण्डलात् तस्मिं जले अंकुशमुद्रया तीर्थमावाहयेत्॥

तस्मिन् जले स्वीहृदयांवुजा च्छ्रीकृष्णमप्यावाहयेत्।

शंखजले वामे गंगा।

मध्ये सरस्वतीं दक्षिणे यमुनां ध्यायेत्।

तस्य जलस्योपरि सुचक्राय शिखायै वौषट्।

इति गालिनीं मुद्रा प्रदर्शयेत्॥

१३४अ) वौषडिति तज्जलं वीक्षेत्।

त्रिलोकरक्षणचक्राय स्वाहा कवचाय हुम् इति तर्जनीभ्यां मवगुण्ठयेत्।

तज्जलं श्रीकृष्णम्वरूपं भावयेत्।

ततः आचक्राय स्वाहा हृदयाय नमः॥

विचक्राय स्वाहा शिरसे शिखा वौषट्॥

त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुम्।

तस्मिं जले विन्यस्या सुरान्तकचक्राय स्वाहा॥

अस्त्राय फट्॥

इति तालत्रयं दत्वा च्छोटिकाभिर्दशभिर्दिग्वंधनं कुर्यात्।

तज्जलं स्पृशन् मुलमन्त्रमष्टधा जपेत्॥

ततो धेनुमुद्रयामृतीकुर्यात्॥

किंचिज्जलं पात्रान्तरे कृत्वा प्रोक्षणीपात्रे स्थापयेत्॥

तस्मात् किंचिज्जलं गृहीत्वा मूलमन्त्रमुच्चार्य त्रिवारमात्मानं पूजोपकरणं चात्यक्षेत्॥

ततो मुर्ध्नि गुरुन् मूलाधारे गणपतिं च पूजयेत्॥

ततो मूलाधारे कुण्डलिनी तेजोरूपा हृदये जीवस्तेजोरूपः भ्रुमध्ये परमात्मा तेजोरूपस्तत् तेजस्त्रयं कामवीजं जप्त्वा मूलाधारादि ब्रह्मरंध्रान्तमेकीभूतं आनन्दघनं तडिल्लताभं चिन्तयेत्॥

तत् तेजसा स्वीय हृदयकमले आचक्राय स्वाहा हृदयाय॥

वि चक्राय शिरसे॥

सुचक्राय शिखायै वौषट्॥

त्रैलोक्यरक्षणचक्राय स्वाहा॥

कवचाय हुम्॥

ज्वालाचक्राय स्वाहा नेत्राभ्यां वौषट्॥

असुरान्तकचक्राय स्वाहा अस्त्राय फट्॥

इति षडङ्गमन्त्रैः सर्वाङ्गसंपन्नं श्रीकृष्णविग्रहमाविर्भूतं विचिन्त्य स्वशरीर श्रीकृष्णविग्रहयोरैक्यं विचिन्त्य तस्मिन् श्रीकृष्णविग्रहाभिन्ने स्वशरीरे विभूतिपंजरादि षडङ्गन्यासपर्यन्तं कृत्वा पीठन्यासक्रमेण पूजयित्वा॥

आसनस्वागतार्घ्यं पाद्याचमनीयमधुपर्कं पुनराचमनीय स्नानीय
वस्त्रालंकरणैर्दशोपचारैः श्रीकृष्णविग्रहा भिन्नशरीरं पूजयेत्॥

पुनरपि विभूति पंजलन्यास स्थानमारभ्य षडङ्गन्यास स्थानपर्यन्त
तयोर्न्यासस्थानपर्यन्तं तयो न्यासमन्त्रैः स्वशरीरे पूजयेत्॥

पुनरपि स्ववेदने वेणुं हृदये वनमालां स्तनस्योर्ध्वे
श्रीवत्संकौस्तुभं च पूजयेत्॥

अत्रा शक्तश्चेद् विभूति पंजरन्यासमन्त्रेण च पूजां कुर्यात्॥

१३४ब) किन्तु पीठन्यासादि क्रमेणासनादि अलंकाराणां तेन पूजयेत्।

अत्राप्य शक्तश्चेत् षडंजलिभिः पूजयेत्॥

ततो मूलमन्त्रं पठित्वा चन्दनपंकेन सर्वाङ्गं लेपयेत्॥

ततो नामिकाया दीपशिखारान् द्वादशदीर्घतिलकान् द्वादशस्थानेषु कुर्यात्
॥

ॐ अंकेशवायधात्रे नम इति ललाटे।

नं आं नारायणार्यमणे उत्तरे॥

मों इं माधवाय मित्त्राय हृदये॥

भं ईं गोविन्दाय वरुणाय॥ गलकुपे॥

गण्डं विष्णवे अंशवे॥ दक्षपार्श्वे॥

वं ऊं मधुसुदनाय भगाय॥ दक्षभुजमूले॥

तं एं त्रिविक्रमाय विवस्वते॥ दक्षगले॥

वां ऐं वामनाय इन्द्राय॥ वामपार्श्वे॥

सुं ओं श्रीधराय पूर्णे वामभुजमूले॥

दं औं हृषीकेशाय पर्जन्यायम्॥ वामगले॥

वां अं पद्मनाभाय त्वष्ट्रे॥ पृष्ठे॥

अं अः दामोदराय विष्णवे नमः ककुदि॥

ॐ नमो भगवते वासुदेवाय नम इति मूर्द्धि॥

तत शुक्लतुलसी तुलैः शुक्लचन्दनमिश्रैरंजलिमापूर्य मूले मन्त्रमुच्चार्य श्रीकृष्णाय एषतुलसीदलांजलिर्नमः॥

इति दक्षिणचरणसमीपे दद्यात्॥

रक्ततुलसीदलैः रक्तचन्दनमिश्रैः पूर्वपरिपाट्या तुलसीदलांजलिर्नम इति वामपादे दद्यात्॥

ततः श्वेतचन्दनमिश्रित श्वेतचन्दनपुष्पैरंजलिमापूर्य पूर्ववच्छ्वेतचन्दनपंकिल श्वेतकरवीरपुष्पांजलिर्नम इति वक्षसिदद्यात्॥

ततः श्वेतरक्तपद्माभ्यां सितरक्तचन्दनलिप्ताभ्यां मंजलिमापूर्य मुलमन्त्रमुच्चार्य श्रीकृष्णायै व श्वेतरक्तपद्मांजलिर्नम इति मुर्द्धि दद्यात्।

एवं नानाविधैः पुष्पैश्चन्दनद्वयलिप्तैरजलिमापूर्य श्रीकृष्णायै षपुष्पांजलिर्नम इति सर्वाङ्गे न्यसेत्।

एवं धूपदीपौ च दद्यात्॥

ततो मनसा ब्रह्मरन्ध्रस्थ चन्द्रमण्डलनिर्गलितैरमृतैः श्रीकृष्णं तर्पयेत्॥

ततो गंधपुष्पाद्यैः संपूज्य स कर्पूरं तांवुलं दद्यात्॥

ततो नृत्तगीतवाद्यैः श्रीकृष्णं सतोष्य जलमादाय व्रह्मार्पणमन्त्रेण हस्ते आत्मनं पूजाकर्म च समर्पयेत्॥

१३५अ) ततः प्राणायामं कृत्वा॥

ॐ कामदेवाय विद्महे पुष्पवा?णाय धीमहि तन्नो न *? प्रचोदयात्॥

इति कामगायत्रीं जप्त्वा जपं सार्प्यस्तु प्रसन्नं मन्त्रार्थं स्वरूपं श्रीकृष्णभाव यन् मूलमन्त्रं दशधा जपेत्॥

पुनः प्राणायामं कृत्वा * * * ति * * ?त्यादिना भगवतो दक्षिणहस्ते जपं समर्पयेत्॥

पुनर्पि प्राणायामं कृत्वा॥

ॐकारपुटितं कामवीजमष्टोत्तरशतं जप्त्वा योगं युंजीत।

योगो यथा॥

मूलाधारे त्रिकोणे चतुर्दलपद्मे व श ष स चतुष्टयाधिष्ठिते क्लीं वीजं वंधुकपुष्पसदृशं सत्त्वरजस्तमोगुणाक्रान्तविन्दुकं तदूर्ध्वे ऐं इति कु * कुण्डलिनीं प्रसुप्तभुजगाकारां सार्ध त्रिवलयेन स्थितां हुंकारेण मनोदण्डाहतां कृत्वा मुलाधारस्वाधिष्ठानमणिपुरकानाहत-विशुद्धाख्य षड्चक्रभेदेन क्रमेण शिरस्थ सह * दलकमलं नीत्वा तत्रस्थ चन्द्रमण्डलविगलदमृतधारया रक्तवर्णया मण्डमय्यान्तां कुण्डलिनीं सतर्प जप्यमानमन्त्रस्य ध्येयरूपमात्मानं चिरं ध्यात्वा पद्मः कुण्डलिनीमाज्ञा विशुद्धानाहतमणिपुरकस्वाधिष्ठानमूलाधारभेदक्रमेण मूलाधारस्थं तत् स्थानं नयेत्॥

इति योगः॥

गुरुतल्पनिषेवणं च पानं द्विजहत्या वृजिनं सुवर्णचौर्यम्॥

अमनोपशमं प्रयान्ति सर्वं सहृदप्या चरिते नवंधनन॥

इति योगं युत्था? पुनः प्राणायामं कृत्वा भगवतो दक्षिणहस्ते गुह्याति गुह्येत्यादिना कामवीजजपं समर्पयेत्।

ततो वहिः पीठे पूजयेत्।

सालिग्रामे मनोयन्त्रे मण्डले प्रतिमादिषु।

इत्थं पूजा हरेः कार्या न तु केवलभूतले॥ १०-४३८॥

अथ यन्त्रोद्धारः॥

प्रथमं षट्कोणं तदुपरि अष्टदलपद्मं तद्बहिश्चतुरश्रभं।

गृहं चतुर्द्वारोपेतं अष्टदिक्षु अष्टशूलविभूषितं निर्माय

षट्कोणकर्णिकायां मध्ये कामवीजं ममाभीष्टसिद्धिं कुरुष्वेति

लिखित्वा दशाक्षरैर्वेष्टयेत्॥

१३५ब्) आग्नेयादिचतुष्कोणेषु॥

श्रीवीजं पूर्वादि चतुर्दिक्षु मायावीजं च लिखेत्॥

कर्णिकायां वहिः षट्कोणेषु क्लीँ कृष्णाय नम इति षडक्षराणि लिखेत्॥

कामगायत्र्यास्त्रीणि अक्षराणि कृत्वा प्रतिकेसरद्वये मध्ये लिखेत्।

कामदेवमालामन्त्रस्य षडक्षराणि षक्षराणि कृत्वा प्रतिदलेषु लिखेत्॥

भूविंवाह्य पूर्वाद्यष्टदिक्षु श्रीवीजं मायावीजं च युग्मं युग्मं

कृत्वा लिखेत्॥

कामगायत्री च॥

कामदेवाय विद्महे इत्यादि कामदेवस्य मालामन्त्रो यथा॥

क्लीं नमः कामदेवाय सर्वजनप्रियाय सर्वजनसम्मोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा॥

तस्मिं यन्त्रे पूजयेत्॥

आधारशक्त्यै नमः प्रकृत्यै॥

कुर्माय॥

शेषाय॥

क्षमायै॥

सिंधवे॥

श्वेतदीपाय॥

रत्नज्वलितमण्डपाय नमः॥

पूर्वस्यां मंदाराय नमः॥

दक्षिणे सन्तानकाय नमः॥

पश्चिमे पारिजाताय नमः॥

उत्तरे कल्पवृक्षाय नमः॥

मध्ये हरिचन्दनाय नमः॥

रत्नसिंहासनाय नमः॥

सिंहासनस्याग्नेयकोणे।

धर्माय वृषरूपाय रक्तवर्णाय पीठपादाय नमः नैरृतकोणे॥

ज्ञानाय सिंहाकाराय श्यामवर्णाय पूर्ववत्॥

वायुकोणे॥

वैराग्याय नराकाराय पंचरत्नाय पीतवर्णाय इति पूर्ववत्॥

ईशानकोणे ऐश्वर्याय गजाकाराय इन्द्रनीलवर्णाय पीठपादाय नमः॥

सिंहासनस्य पूर्वभागे॥

अर्धर्माय पीठगात्राय नमः॥

दक्षिणे भागे॥

अज्ञानाय पूर्ववत्॥

पश्चिमभागे॥

अवैराग्याय इति च॥

उत्तरभागे॥

अनैश्वर्याय पीठगात्राय नमः॥

पुनर्मध्ये॥

शेषाय नमः॥

अब्जाय नमः॥

अं सूर्यमण्डलाय द्वादशकलात्मने नमः॥

ऊं सोममण्डलाय षोडशकलात्मने नमः॥

१३६अ) मं वह्निमण्डलाय दशकलात्मने नमः।

सं सत्वाय नमः॥

रं रजसे नमः।

तं तमसे नमः।

श्वेतं सत्वं रक्तं रजः श्यामं तमः॥

आं आत्मने नमः।

अं अन्तरात्मने नमः॥

पं परमात्मने नमः॥

ह्रीं ज्ञानात्मने नमः॥

ततः पद्मस्य पूर्वदले॥

आं विमलायै नमः। अग्नेय दले॥

ईं उत्कर्षिण्यै नमः॥

दक्षिणदले॥

ॠं ज्ञानायै नमः॥

नैर्ऋतदले॥

ऐं क्रियायै नमः॥

पश्चिमदले॥

ऐं योगायै नमः॥

वायुव्यदले॥

ॐ प्रस्व्यै नमः॥

उत्तरदले॥

औं सत्यायै नमः॥

ईशानदले॥

अं ईशानायै नमः॥

मध्ये॥

अः अनुग्रहायै नमः॥

ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्म
स्ंयोगयोगपद्मपीठात्मने नमः॥

ततः मध्ये श्रीकृष्णाय नमः॥

इति प्रतिमायां पुष्पांजलिं दत्वा॥

ऐशान्यां शिवम्॥

आग्नेयां गणेशम्॥

नैरृत्यां सूर्यम्॥

वायव्यां दुर्गां पूजयेत्।

ऐशान्यां यथा॥

ॐ ध्यायन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं

रत्नाकल्पोज्वलाङ्गं परशुमृतवराभीति हस्तं प्रसनम्॥

पद्मासीनं समन्तात्स्तु तममरगणैर्व्याघ्रकृत्तिं वसानं

विश्वाद्यं विश्ववीजं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम्॥ १०-४३९॥

इति ध्यात्वा वाह्य पूजयेत्॥

आग्नेयाम्॥

सिंदूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं

दन्तं पाशांकुशेष्टोन् पुरुकरविलद्वीजपुराभिरामम्॥

वालेन्दुद्योति मौलिंकरि पतिवदनं दानपुन्द्रगण्डें

भोन्द्रावद्धघोषं भजतगणपतिं रक्तवस्त्राङ्गरागम्॥ १०-४४०॥

इति पूर्ववत्।

नैऋत्याम्॥

रक्तांवुजासनमशेषगुणैकसिंधुं

भानुं समस्तजगतामधिपं भजामि।

पद्मद्वयाभयवरं दधतं कराब्जैर्

माणिक्यमौलिमुकुटं रुचिरं त्रिनेत्रम्॥ १०-४४१॥

वायव्याम्॥

ॐ ह्रीँ श्रीँ दुर्गायै नमः॥

अस्या ध्यानम्॥

सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैः

शंखं चक्रधनुः शरांश्च दधती नेत्रैः त्रिभिः शोभिता।

१३६ब्) आमुक्ताङ्गदहारकं कणरणत्कांचीक्कणन्नुपुरा

दुर्गादुर्गतिहारिणी भव तु वो रत्नोल्लसत्कुण्डला॥ १०-४४२॥

इति महिषमर्दिनीं ध्यात्वा वाज्य पूजयेत्॥

ततः करकच्छपिकाया पुष्पांजलिं गृहीत्वा ज्योतिर्मयं श्रीकृष्णं

सुहृदयांभोजे ध्यात्वा मूलं मन्त्रमुच्चार्य सुषुमणा वर्त्मना स्वहृदयां भोजाद् वहन्नासापुटद्वारा मातृकावर्णनात्मक कुसुमांजलौ चैतन्यात्मकः श्रीकृष्णः समागतः इति विचिन्त्य श्रीकृष्ण इहागच्छ २ इत्यावाहयेत्।

तत् इह तिष्ठ २ संनिधे हि २ इह संनिरुद्धो भव २ आचन्द्राय स्वाहा हृदयाय नमः।

विचक्राय शिरसे॥

सुचक्राय शिखायै वौषट्॥

त्रैलोक्यरक्षणचक्राय कवचाय हुम्॥

ज्वालाचक्राय नेत्राब्यां वौषट्।

असुरान्तकचक्राय स्वाहा॥

अस्त्राय फट्॥

इति ऊर्ध्वोर्ध्वं तालत्रयं दत्वा च्छोटिकाभिर्दशभिर्दिग्स्वंधनं कुर्यात्।

हुं इति तर्जनीभ्यामवगुठा वं इति धेनुमुद्रयामृतीकृत्य परमी कुर्यात्।

सर्वत्र स्वमुद्रां दर्शयेत्॥

ततो देवा वेणु वनमाला श्रीवत्सकौस्तुभविल्वमुद्राः प्रदर्शये॥

आसनं स्वागतं चार्घ्यपाद्यमाचमनीयकम्।

मधुपर्काचमनस्नानवसनाभरणानि च॥ १०-४४३॥

गंधपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा।

क्रमेण कल्पयेद् धिमान् उपचारांस्तु षोडश॥ १०-४४४॥

तत्र विशेषमाह॥

गंधपुष्पाक्षत यवकुशाग्रं तिलसर्षपैः॥

दुर्वाभिः समेतं जलमादाय श्रीकृष्णाय षोर्घ्यः स्वधा॥

इति देवस्य मुर्ध्नि दद्यात्॥

श्यामाकदूर्वा पद्मापराजिता युक्तं जलमादाय मूलमुच्चार्य
श्रीकृष्णायेदं पाद्यं नम इति पादांवुजे दद्यात्।

जातीलवंगकक्कोलयुक्तं जलमादाय पुर्ववच्छ्रीकृष्णायेदमाचमनीयं
नम इति मुखांवुजे दद्यात्।

आज्यं दधिमधुकांस्यपात्रे संस्थाप्य कांस्य पात्रान्तरेणाच्छाद्य
मधुपर्को नम इति मुखांवुजे।

केवलजलेनेदमाचमनीयं नमः॥

१३७अ) सुगंधिजलेन स्नानीयम्॥

ततो गात्रमार्जनवस्त्रम्॥

ततः परिधेय वस्त्रयुग्मम्॥

यज्ञोपवीतं हाराद्या भरणानि॥

कस्तुरीकुंकुमगोरोचनानुलेपनम्॥

चंद्नागुरुद्त्रीवेरष्टकुंकुमसेव्यका॥

जटामांसीमुरमिति विष्णोर्गंधाष्टकं विदुः॥

ह्रीं वरः वलाकुष्टं कुठः सव्यकं वीरणमूलं मुरामांसी॥

नानाजातीय पुष्पाणि गुग्गुल्यगुरुड शीरशर्करा मधुचन्दनघृतनिर्मितं
धूपं दद्यात्॥

कर्पूरगर्भिण्यावृत्त्या घृतप्रदीपं दद्यात्॥

स्वादूपदंशं विमलं पायसं सफशर्करम्॥

कदलीफलसंयुक्त साज्युज्यं निवेदयेत्।

उपदंशश्चर्वणीयद्रव्यं अलकेक्षुखण्डादिपायसं पयोविकारः॥

दधिनवनीतं घृतं शर्करां च सशाकारं दुग्धं च दद्यात्।

तत्र नैवेद्यदान विधिः॥

हिरण्यं राजतं कांस्यं ताम्रं मृणायमेव वा।

पालाशं श्रीहरेः पात्रं नैवेद्यं कल्पयेद् वुधः॥ १०-४४५॥

नैवेद्यं पुरतः समानीयास्त्राय फट्॥

इति चक्रमुद्रया संरक्ष्य यमिति जलेन संप्रोक्ष्य नैवेद्यस्य दोषान् शोषयेत्
॥

रमिति वह्निवीजेन हस्तेन स्पृष्ट्वा दोषान् संदह्य वास्तेन विधाय वमिति अमृतवीजेन जप्तेनामृतरसाभिपूर्णं विचिन्त्य मूलमन्त्रेणामृतस्वरूपं चिन्तयित्वा स्पृष्ट्वा मूलमन्त्रमष्टधा जप्त्वा धेनुमुद्रयामृतपूर्णं विभाव्यगंधपुष्पाभ्यां नैवेद्याय नम इत्यभ्यर्च्य॥

श्रीकृष्णाय नमः।

गंधपुष्पाभ्याम्भ्यर्च्य श्रीकृष्णमुखनिर्गतं तेजो नैवेद्ये लग्नमिति भाव्यमूलमूचार्य श्रीकृष्णाये दं नैवेद्यं नमः॥

इति नैवेद्ये जलं दद्यात्॥

तन्नैवेद्यं हस्ताभ्यां गृहीत्वा निवेदयामि भगवते जुषाणेदं हवेर्हरेः।

इत्युक्त्वार्घयेत्॥

वामहस्तेन विकचोत्पलसंनिभां ग्रासमुद्रां प्रदर्शयेत्॥

अमृतोपस्तरणमसि स्वाहेति देवमुखे जलं दत्वा दक्षिणहस्तस्याङ्गुष्ठे न कनिष्ठानामिकां च स्पृशन् प्राणाय स्वाहा॥

एव अंगुष्ठे न तर्जनीमध्यमां च स्पृशन्।

१३७ब्) अपानाय।

एवं अंगुष्ठेन मध्यमानामिकां च स्पृशन् समानाय॥

एवं अंगुष्ठेन तर्जनीं मध्यमानामिकां च स्पृशन्॥

उदानाय स्वाहा॥

एवं सर्वाङ्गुलीभिर्व्यानाय स्वाहा॥

इति वदेत्॥

इति प्राणादीनां पंचमुद्राः प्रोक्तः॥

ठं वों नमः पराय परमात्मने निरुद्धाय नैवेद्यं कल्पयामि नम इति

मन्त्रं पठन्

अंगुष्ठाभ्यामनामिकाद्वय स्पर्शनरूपा नैवेद्य मुद्रां प्रदर्शयेत्॥

अमृतापिधानमसि स्वाहा इति देवमुखे जलं दत्वा पुनराचमनीयं दत्वा सकर्पुरं तांवुलं दद्यात्।

साध्यसाधनयोर्मध्ये देवस्य पूर्वमिष्यते।

देवस्य पूर्वे॥

दामाय नमः॥

दक्षिणे॥

सुदामाय नमः॥

पश्चिमे॥

वसुदामाय नमः।

उत्तरे॥

किंकिन्यै नमः॥

देवस्याग्निकोणे॥

आचक्राय हृदयाय स्वाहा हृदयाय नमः॥

नैऋतकोणे॥

विचक्राय॥

शिरसि॥

वायुकोणे॥

सुचक्राय शिखायै॥

ईशाने॥

त्रैलोक्यरक्षणचक्राय कवचाय हुम्।

पूर्वादिचतुर्दिक्षु असुरान्तकचक्राय अस्त्राय फट्।

इति पंचाङ्गानि पूजयेत्।

देवस्य पूर्वदले रुक्मिण्यै नमः॥

आग्नेयदले॥

सत्यभामायै॥

दक्षिणदले॥

नाग्निजित्यै।

नैर्ऋतदले।

सुनन्दायै पश्चिमदले।

मित्रविन्दायै॥

वायव्यदले।

लक्ष्मणायै॥

उत्तरदले॥

जांववत्यै॥

ईशानदले।

सुशीलायै नमः॥

इति प्रणवाद्येन पूजयेत्॥

तत्र पूर्वादिदलाग्रेषु॥

ॐ वसुदेवाय नमः।

ॐ देवक्यै नमः।

ॐ नन्दाय नमः।

ॐ यशोदायै नमः॥

ॐ वलभद्राय नमः।

ॐ सुभद्रायै नमः।

ॐ गोपभ्यो नमः।

ॐ गोपीभ्यो नमः।

ततो दलाद्बहिः पूर्वादिक्रमेण पूजयेत्।

पूर्वे।

मन्दाराय नमः।

इति चतुर्दिक्षु पूर्वोक्तम्।

मध्ये हरिचन्दनाय नमः।

ततः चतुरश्रे देवस्य।

पूर्वे।

ॐ इन्द्राय नमः।

अग्निकोणे॥

ॐ अग्नये नमः।

दक्षिणे।

ॐ यमाय।

नैरृते॥

ॐ नैर्ऋताय।

पश्चिमे॥

ॐ वरुणाय॥

वायुकोणे॥

१३८अ) ॐ वायवे नमः॥

उत्तरे॥

ॐ कुवेराय नमः।

ईशाने।

ॐ ईशानाय नमः।

इन्द्रेशानयोर्मध्ये॥

ॐ ब्रह्मणे नमः॥

नैॠत्यवरुणयोर्मध्ये।

ॐ अनन्ताय नमः॥

पुनः पूर्वादिक्रमेण तत् समीपे पूजयेत्॥

ॐ वज्राय नमः।

ॐ शक्त्यै।

ॐ दण्डाय॥

ॐ कृपणाय॥

ॐ पाशाय॥

ॐ अंकुशाय॥

ॐ गदाय॥

ॐ त्रिशूलाय॥

ॐ पद्माय॥

ॐ चक्राय॥

ॐ शंखाय॥

मध्ये श्रीकृष्णाय नमः [नः]।

ॐ वासुदेवाय॥

ॐ नारायणाय॥

ॐ देवकीनन्दनाय॥

ॐ यदुश्रेष्ठाय नमः॥

ॐ वार्ष्णेयाय नमः॥

ॐ असुरभारहारिणे नमः॥

ॐ धर्मसंस्थापकाय नमः।

इति संपूज्य पुनरपि श्रीकृष्णमर्घ्यादिभिः पूजयेत्॥

तत्र धूपे विशेषः।

घण्टाय नमः।

इति पुष्पेणघण्टां संपूज्य वामहस्तेन घण्टां वादयन्।

दक्षिणहस्तेन धूपं गृहीत्वा चिन्तयेत्॥

एवं दक्षिणहस्तेन दीपं गृहीत्वा देवस्य चक्षुरादिपादपर्यन्तं दर्शयेत्
॥

ततो मूलमूर्च्चार्य श्रीकृष्णं तर्प्पयामीति श्रीकृष्णस्य मुखे जलेन वारत्रयं तर्पयेत्॥

ततः पानार्थं सुगंधिजलं दद्यात्।

ततो मृतापिधानमसि स्वाहा।

इति देवस्य मुखे जलगण्डूषं दत्वा दन्तशोधनार्थं काष्ठं हस्तशोधनार्थं कर्पुरचूर्णं आचमनाथं जलं च निवेदयेत्।

ततोनुलेपनं सकर्प्पुरं तांवुलं पुष्पाणि दद्यात्॥

श्रीकृष्णमुखान्निर्गतं तेजः पुनरपि मुखे प्रविष्टमिति विभावयेत्॥

ततश्चामरेण संवीक्ष्य दर्पणं दर्शयित्वा नृत्तगीतवाद्यैर्देवं सन्तोष्य प्राणायामत्रयं कृत्वा मूलमष्टोत्तरसहस्रं शतं वाजप्त्वा पुनः प्राणायामत्रयं कृत्वा गुह्याति गुह्यगोप्तात्वं गृहाणास्मत्कृतं जपम्।

सिद्धिर्भवतु मे देव त्वत् प्रसादाज्जनार्दन।

इत्यर्घोदकेन देवस्य दक्षिणहस्ते जपं समर्पयेत्।

ततो नवीननीरदश्याममित्यादिनास्तुत्वा प्रदक्षिणी कृत्य

दण्डवदष्टाङ्गप्रणामं कुर्यात्।

उरसाशिरसा दृष्ट्या मनसा वचसस्तथा॥

१३८ब) पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टाङ्ग ईरितः॥

अथ॥

पद्भ्यां कराभ्यां शिरसा पंचाङ्गनतयः स्मृताः।

अष्टाङ्गा उत्तमः प्रोक्ताः पंचाङ्गा मध्यमाः स्मृताः॥ १०-४४६॥

न देवं पृष्टतः कृत्वा प्रणामं क्वचिदाचरेत्।

तत उपविश्य जलगण्डूषं गृहीत्वा॥

ततः पूर्वं प्राणवुद्धिर्देहधर्माधिकारतः।

जाग्रत्स्वप्नसुषुप्त्यवस्था सुमन सा वाचाकर्मणा हस्ताभ्यां पद्ध्यां मुदरेण शिश्ना यत् स्मृतं यदुक्तं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा॥

मां मदीयं च सकलं हरये समर्पये॥

ॐ तत् सदिनि ब्रह्मार्पणमन्त्रेणात्मानं देवस्य चरणांवुजे समर्पयेत्॥

ततः संहारमुद्रया निर्माल्यं गृहीत्वा॥

भवन् पूजितो सिक्षमस्वेत्युक्त्वाघ्रायज्योतिर्मयं श्रीकृष्णं वहन् नासापुटे न स्वहृदये समानीय निर्माल्यं भुमौ त्यजेत्।

ततो निर्माल्यान्तरं गृहीत्वा विष्वक्सेनाय नमः॥

इत्यैशान्यां निक्षिपेत्।

नैवेद्य शेषं गृहीत्वा विष्वक्सेनायेदं उच्छिष्टनैवेद्यं नमः।

इति ईशान्यां क्षिपेत्॥

निर्माल्यं शिरसि धृत्वा चरणोदकं नैवेद्यं च भुक्त्वा पीत्वा श्रीकृष्णस्वरूपं स्वंविभाव्य यथासुखं तिष्ठेत्।

पुरश्चरणविधौ प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः।

अष्टादशाक्षरं चेद् अयुतद्वयमीरितं संख्या॥

अथानुक्रमिका॥

ततः प्रथमतः प्राणायामं मुर्त्तिपंजरन्यासः।

करन्यासः।

अंगन्यासः।

ऋष्यादिन्यासः।

पीठन्यासः।

ध्यानं।

मुद्रादर्शनम्।

अर्घपात्रस्थापनम्॥

मूर्त्तिपंजरक्रमेण द्वादशस्थानेषु द्वादशं तिलकम्।

ततः स्वदेहे षडंजलिदानम्॥

ततः प्राणायामः॥

ततः कामगायत्री जपः॥

मूलमन्त्राष्टोत्तरशतं जपः।

प्रणवपुटितं कामवीजस्याष्टोत्तरशतजपः।

ततः प्राणायामः॥

देवस्य दक्षहस्ते जपसमर्पणं।

मूर्ध्निगुरुम्॥

१३९अ) मूलाधारे गणेशं नमस्कुर्यात्।

ततो योगः इत्यन्तर्यागः समाप्तः॥

ततो वहिः पूजा यथा॥

देवस्योपरि एकपुष्पांजलि दानम्।

ऐशान्यां शिवं आग्नेयां गणेशं नैरृत्यां सूर्यं वायव्यां

दुर्गां पूजयेत्।

ततः पुन ध्यात्वा प्रतिमायां देवमावाहयेत्।

षोडशोपचार पूजा॥

कृष्णाष्टकेन श्रीकृष्णं पूजयेत्॥

देवे पुष्पांजलित्रयदानम्॥

प्राणायामत्रयम्॥

मूलमन्त्रजपः॥

पुनः प्राणायामत्रयं कृत्वा देवस्य दक्षहस्ते जपसमर्पणम्॥

ततः प्रदक्षिणम्॥

दंदप्रणामः॥

स्तवपाठः॥

धूपसमर्पणम्॥

दीपनिर्मच्छनम्॥

आत्मसमर्पणम्॥

संहारमुद्रया हृदये देवानयनम्॥

विष्वक्सेन पूजा निर्मल्यधारणं नैवेद्य भक्षणम्॥

इत्यनुक्रमिका॥

इति श्रीगोपारपूजापद्धतिः समाप्ता॥

अथा गोपालकवचम्॥

पुरस्ता उवाच

भगवन् सर्वधर्मज्ञ कवचं यत् प्रकाशितम्।

त्रैलोक्यमंगलं नाम कृपया कथय प्रभो॥ १०-४४७॥

श्रीसनत्कुमार उवाच

श्रृणुं वक्ष्यामि विपेन्द्र कवचं परमाद्भुतम्।

नारायणे न कथितं कृपया ब्रह्मणे पुरा॥ १०-४४८॥

ब्रह्मणा कथितं मह्यं परं स्नेहाद् वदामिते।

अति गुह्यतरं तत्त्वं ब्रह्ममत्रौघविग्रहम्॥ १०-४४९॥

यद्धृत्वा पठनाद्ब्रह्मा सृष्टिवितनु ते ध्रुवम्।

यद्धृत्वा पठनात् याति महालक्ष्मीर्जगत्त्रयम्॥ १०-४५०॥

पठानाद्धारणा च्छंभुः संहर्त्ता सवतत्ववित्।

त्रैलोक्यजननी दुर्गा महिषादि महासुरान्॥ १०-४५१॥

वरदृप्ताञ्जघां नैव पठनाद्धारणात् ततः।

एवं इन्द्रादयः सर्वे सर्वैश्वर्यमवाप्नुयुः॥ १०-४५२॥

शिष्याय विष्णभक्ताय साधकाय प्रकाशयेत्।

शठाय परशिष्याय दत्वा मृत्युमवाप्नुयात्॥ १०-४५३॥

त्रैलोक्यमङ्गलस्यापि कवच सा प्रजापतिः।

ऋषिः च्छंदश्च गायत्री देवो नारायणः स्वयम्॥ १०-४५४॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्त्तितः।

ॐ प्रणवो मे शिरः पातु नमो नारायणाय च॥ १०-४५५॥

१३९ब्) बालं पायान्नेत्रयुगां अष्टार्स्मौ भुक्तिमुक्तिदः।

क्लीँ पायान्नेत्रयुगलं चैकार्णः सर्वमोहनः॥ १०-४५६॥

क्लीँ कृष्णाय सदा घ्राणं (?) गोविंदाय च जिह्विकाम्।

गोपीजनवल्लभाय पदं स्वाहा ननं मम ... १०-४५७॥

अष्टादशाक्षरोमन्त्रः कण्ठं पातु दशाक्षरः।

गोपीजनवल्लभाय पदं स्वाहा भुजद्वयम्॥ १०-४५८॥

क्लीँ ग्लौँ क्लीँ श्यामलाङ्गाय नमस्कंधौ दशाक्षरः।

क्लीँ कृष्णः क्लीँ करौपायान् क्लीँ कृष्णायाङ्गजोव तु॥ १०-४५९॥

हृदयं श्रीभुवनेशी क्लीँ कृष्णाय स्तनौ मम।

गोपालायाग्निजायायां कुक्षियुग्मं सदाव तु॥ १०-४६०॥

क्लीँ कृष्णाय सदा पातु पार्श्वयुग्मं मनुत्तमः।

कृष्णगोविन्दकौ पातु स्मराद्यौ ङे युतो मनुः॥ १०-४६१॥

अष्टाक्षरः पातु नाभिं कृष्णे विद्वाक्षरोव तु।

पृष्ठं क्लीँ कृष्णकं कालं क्लीँ कृष्णाय द्विठान्तकः॥ १०-४६२॥

सक्तिनी सततं पातु श्रीँ ह्रीँ क्लीँ कृष्णठद्वयम्।

ऊरू सप्ताक्षरः पायात् त्रयोदशाक्षरोव तु॥ १०-४६३॥

श्रीँ ह्रीँ क्लीँ पदतो गोपीजनवल्लभपदं ममः।

भाय स्वाहेति पायुं वै क्लीँ ह्रीँ श्रीँ सदशार्स्मकः॥ १०-४६४॥

जानुनी च सदा पातु ह्रीँ श्रीँ क्लीँ च दशाक्षरः।

त्रयोदशाक्षरः पातु जंघे चक्राद्युदायुधः॥ १०-४६५॥

अष्टादशाक्षरो ह्रीँ श्रीँ पूर्वको विंशवर्णकः।

सर्वाङ्ग मे सदा पातु द्वारकानायकोवली॥ १०-४६६॥

नमो भगवते पश्चाद् वासुदेवाय तत् परम्।

ताराद्यो द्वादशार्णोयं प्राच्यां मां सर्वदाव तु॥ १०-४६७॥

श्री क्लीँ ह्रीँ दशवर्णस्तु क्लीँ ह्रीँ श्रीँ षोडशाक्षरः।

गदाद्युदायुधो विष्णुर्मामग्नेर्दिशिरक्ष तु॥ १०-४६८॥

ह्रीँ श्रीँ दशाक्षरो मन्त्रो दक्षिणे मां सदा व तु।

तारा नमो भगवते रुक्मिणीवल्लभाय च॥ १०-४६९॥

स्वाहेति षोदशार्णोयं नैऋत्यां दिशि रक्षतु।

क्लीँ हृषिके पदं शाय नमो मां वरुणेव तु॥ १०-४७०॥

अष्टादशार्णः कामान्तो वायव्ये मां सदाव तु।

श्रीकामाय सकृष्णाय गोविन्दाय द्विठो मनुः॥ १०-४७१॥

द्वादशार्णात्मको विष्णुरुत्तरे मां सदाव तु।

१४०अ) वाग्भवं कामकृष्णाय ह्रीँ गोविन्दाय ततः परम्॥ १०-४७२॥

श्रीगोपीजनवल्लभाय च स्वाहा चैव सोव तु।

द्वाविंशत्यक्षरो मन्त्रो मामैशान्यां सदाव तु॥ १०-४७३॥

कीलीयस्य फणामध्ये दिव्यनृत्यं करोति तम्।

नमामि देवकीपुत्रं नृत्यराजानमुच्युतम्॥ १०-४७४॥

द्वाविंशत्यक्षरो मन्त्रोप्यतो मां सर्वतो व तु।

कामदेवाय विद्महे पुष्पवाणाय धीमहि तन्नो नंगः प्रचोदयात् षा
मां पातु चोर्ध्वतः॥

इति ते कथितं विप्र ब्रह्ममन्त्रौघविग्रहम्॥ १०-४७५॥

त्रैलोक्यमङ्गलं नाम कवचं ब्रह्मरूपिणम्।

ब्रह्मेश प्रमुखाधिश नारायणमुखाच्छ्रुतः॥ १०-४७६॥

तव स्नेहान् मयाख्यातं प्रवक्तव्यं न कस्यचित्।

गुरुं प्रणम्य विधिवत् कवचं प्रपठेन् ततः॥ १०-४७७॥

सकृद् वा त्रिर्यथाज्ञानं सोपि सर्वतयो मयः।

मन्त्रेषु सकलेष्वेवं दैशिको नात्र संशयः॥ १०-४७८॥

शतमष्टोत्तरं वापि पुरश्चर्यविधिः स्मृतिः।

हवनादीन्दशांशेन हुत्वा तत् साधयंद्ध्रुवम्॥ १०-४७९॥

यादिचेत् सिद्धकवचो विभुरेव भवेत् स्वयम्।

मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यां विधानतः॥ १०-४८०॥

स्पर्धामुद्धूयसततं लक्ष्मर्वाणी वसेत् ततः।

पुष्पांजल्याष्टकं देव मूले नैव पठेत् सकृत्॥ १०-४८१॥

दशवर्षसहस्राणां पूजायाः फलमाप्नुयात्।

भूर्जविलिख्य गुटिकां स्वर्णस्थां धारयेद् यदि॥ १०-४८२॥

कण्ठे वो दक्षिणे वाहौ सोंपि विष्णुर्न संशयः।

अश्वमेधसहस्राणि वाजपेय शतानि च॥ १०-४८३॥

महादानानि यान्ये व प्रादक्षिण्यं भुवस्तथा।

कलांनार्घन्ति तान्येव सकृदुच्चारणात् ततः॥ १०-४८४॥

कवचस्य प्रसादेन जीवन्मुक्तो भवेन् नरः।

त्रैलोक्यं क्षोभयत्येव त्रैलोक्यविजयी भवेत्॥ १०-४८५॥

इदं कवचमज्ञात्वा भजेद् यः पुरुषोत्तमम्।

शतलक्षप्रजप्तोपि न मन्त्राः सिद्धिदायकः॥ १०-४८६॥

इति श्रीसनत्कुमारसंहितायां त्रैलोक्यमङ्गलं नामकवचं समाप्तम्॥

अथ गोपालसहस्रनामम्॥

कैलासशिखरे रम्ये गौरी पृच्छति शङ्करम्।

ब्रह्माण्डाखिलनाथस्त्वं सृष्टिसंहारकारकः (१)॥ १०-४८७॥

त्वमेव पूज्यसे लोकैर्ब्रह्मविष्णुसुरादिभिः।

१४०ब) नित्यं पठसि देवेश कस्य स्तोत्रं महेश्वरम् (२)॥ १०-४८८॥

आश्चर्यमिदमाख्यातं जायते मयि शंकर।

तत् प्राणेश महाप्राज्ञ संशयं च्छिन्धिशंकरः)॥ १०-४८९॥

श्रीमहादेव उवाच [उवा]

धन्यासि कृत पुण्यासि पार्वतीप्राणवल्लभो।

रहस्येति रहस्यं च यत् पृच्छसि वरानने (४)॥ १०-४९०॥

स्त्री स्वभावान् महादेवि पुनस्त्वं परिपृच्छसि।

गोपनीयं गोपनीयं गोपनीयं प्रयत्नतः (५)॥ १०-४९१॥

दत्ते च सिद्धिर्हानिः स्यात् तस्माद् यत्नेन गोपयेत्।

इदं रहस्यं परमं पुरुषार्थप्रदायकम् (६)॥ १०-४९२॥

धनरत्नौघमाणिक्य तुरंगस्त्रगजादिकम्।

ददाति स्मरणादेव महामोक्षप्रदायकम् (७)॥ १०-४९३॥

तत् ते हं सप्रवक्ष्यामि शृणुष्वावहिता प्रिये।

योसौ निरंजनो देवः चित्स्वरूपीजनार्दनः (८)॥ १०-४९४॥

संसारसागरोत्तीर्ण करणाय नृणां सदा।

श्रीगंगाद्रवरूपेण त्रैलोक्यं व्याप्यतिष्ठति (९)॥ १०-४९५॥

ततो लोकमहामूढा विष्णुभक्तिविवर्जिताः।

निश्चयं नधिगच्छन्ति पुनर्नारायणो हरिः (१०)॥ १०-४९६॥

निरंजनो निराकारो भक्तानां प्रीतिकामतः।

वृन्दावन विहाराय गोपालं रूपमुद्विन (११)॥ १०-४९७॥

मुरलीवादनाधारी राधायै प्रीतिमावहन्।

अंशं शोभ्यः समुन्मील्य पूर्णरूपकलायुतः (१२)॥ १०-४९८॥

श्रीकृष्णचन्द्रो भगवान्नन्दगोपवरोद्यतः।

धरणी रूपिणी मातृ यशोदानन्ददायिनी (१३)॥ १०-४९९॥

द्वाभ्यां प्रियाचितो नाथो देवक्यां वसुदेवतः।

ब्रह्मणाभ्यर्थितो देवो देवैरपि सुरेश्वरि (१४)॥ १०-५००॥

जातो अवन्यापिनुतो मुरलीवद रेचिका।

तया सार्धं वचः कृत्वा ततो जातो महीतले (१५)॥ १०-५०१॥

संसारसारसर्वस्वं श्यामलं मह उज्ज्वलम्।

एत ज्योतिरहं वन्द्यं चिन्तयामि सनातनम् (१६)॥ १०-५०२॥

गौरतेजो विनायस्तु श्यामस्तेजः समर्चयेत्।

जपेद् वा ध्यायते वापि सभवेत् पातके शिवे (१७)॥ १०-५०३॥

सब्रह्महा सुरापी च स्वर्णस्ते ये च पंचमः।

एतैर्दोषैर्विलिप्येत तेजो भेदान् महेश्वरि (१८)॥ १०-५०४॥

तस्मा ज्योतिरभुद्धया राधामाधवरूपकम्।

१४१अ) तस्माद् अहं महादेवि गोपाले नैव भाषितम् (१९)॥ १०-५०५॥

दुर्वाससो मुनेर्मोहे कार्त्तिक्यां रासमण्डले।

ततः पृच्छावतीराधा सन्देहे भेदमात्मनः (२०)॥ १०-५०६॥

निरंजनात् समुत्पन्नं मयाधीतं जगन्मयि।

श्रीकृष्णं न ततः प्रोक्तं राधायै नारदाय च (२१)॥ १०-५०७॥

ततो नारदतः सर्वै विरला वैष्णवास्तथा।

कलौजानन्ति देवेशि गोपनीयं प्रयत्नतः॥ १०-५०८॥

शठाय कृपणायाथ दांभिकाय सुरेश्वरि।

ब्रह्महत्यामवाप्नोति तस्माद् यत्नेन गोपयेत् (२३)॥ १०-५०९॥

अस्य श्रीगोपालसहस्रनामस्तोत्रस्य नारद ऋषिरनुष्टुपच्छन्दः
श्रीगोपालदेवता कामो वीजं मायाशक्तिः चन्द्रः कीलक
श्रीकृष्णचन्द्रभक्तिजनहलप्राप्तये श्रीगोपालसहस्रनाम पाठे विनियोगः॥

अथ ध्यानम्॥

फुल्लेन्दीवरकान्तिमिन्दुवदनं वर्हावतं सप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्वरं सुन्दरम्।

गोपीनां नयनोत्पलार्च्चिततनुं गोगोपसंघावृतं

गोविन्दं कलवेणुवदनपरं दिव्याङ्गभूषं भजे (२४ )॥ १०-५१०॥

श्रीगोपालो महीपालो वेदवेदाङ्गपारगः।

कृष्णकमलपत्राक्षः पुण्डरीकः सनातनः (२५)॥ १०-५११॥

गोपतिर्भूपतिः शास्ता प्रहर्त्ता विश्वतो मुखः)।

आदिकर्त्ता महाकर्त्ता महाकालः प्रतापवान् (२६)॥ १०-५१२॥

जगज्जिवो जगद्धाता? जगद्भर्त्ता जगद्वसुः।

मत्स्यो भीमः कुहुकर्त्ता हर्त्ता वाराहमूर्त्तिमान् (२७)॥ १०-५१३॥

नारायणो हृषीकेशो गोविन्दो गरुडध्वजः।

गोकुलेन्द्रो महाचन्द्र शर्वरी प्रियकारकः (२८)॥ १०-५१४॥

कमलामुखलोलाक्षाः पुण्डरीकः शुभावहः।

दुर्वासः कपिलोभौमः सिन्धुसागरसंगमः (२९)॥ १०-५१५॥

गोविन्दो गोपतिगोत्रं कालिन्दी प्रेमपूरकम्।

गोस्वामी गोकुले इन्द्रो गोवर्द्धनवरप्रदः (३०)॥ १०-५१६॥

नन्दादिगोकुलभ्राता दाता दारिद्र्यभंजनः।

सर्वमङ्गलदाता च सर्वकामप्रदायकः (३१)॥ १०-५१७॥

आदिकर्त्तामहीभर्त्ता सर्वनागरसिंधुजः।

गजगामी गजोद्धारी कामीकामकलाविधिः (३२)॥ १०-५१८॥

१४१ब) कलंकरहितश्चन्द्रो विंवास्यो विंवसत्तमः।

मालाकारक्रियाकरः कोकिलस्वरभूषणः (३३)॥ १०-५१९॥

रामो नीलो वरो देवो हलीदुर्दाममर्दनः।

सहस्राक्षपुरीभेत्ता महामारी विनाशनः (३४)॥ १०-५२०॥

शिवः शिवतमो भेत्ता वलाराति प्रपूजकः।

कुमारी वरदायी च वरेण्योमीनकेतनः (३५)॥ १०-५२१॥

नरोनारायणो धीरो धीरापतिरुदारधीः।

श्रीपतिः श्रीनिधिः श्रीमान्मापतिः पतिराजहा (३६)॥ १०-५२२॥

वृन्दापतिः कुलग्रामी धामब्रह्मसनातनः।

रेवतीरीतिमणश्चंचलश्चारुलोचनः (३७)॥ १०-५२३॥

रामायणशरीरोयं रामीरामः श्रियं पतिः।

शर्वरः शर्वरीशर्वः सर्वत्रशुभदायकः (३८)॥ १०-५२४॥

राधाराधयितो राधी राधाचित्तप्रमोदकः।

वृन्दापतिः कोषनिधिः कोशशोकविनाशनः (३९)॥ १०-५२५॥

चन्द्रापतिश्चण्डपतिश्चण्ड कोदण्डभंजनः।

रामो दाशरथिरामो भृगुवंशसम्द्भवः (४०)॥ १०-५२६॥

आत्मारामोजितक्रोधो मोहो मोहान्धभंजनः।

वृषभानभवो भावीकाश्यपिः करुणानिधिः (४१)॥ १०-५२७॥

कोलाहलो हलीहालो हलीहलधरप्रियः।

राधामुखाब्जमर्त्तांण्डो भास्करोरविजोविधः (४२)॥ १०-५२८॥

विधिर्विधाता वरुणो वारुणो वारुणी प्रियः।

रोहिणी दूरयानं दीवासुदेवात्मजो वली (४३)॥ १०-५२९॥

नीलांवरो रौहिणे यो जरासंधवधोमलः।

नागोजवा भोविरुदो वरदो वरदोनली (४४)॥ १०-५३०॥

गोपथविजयी विद्वान् शिपिपिष्टः सनातनः।

परशुरामवचो ग्राही वरग्राही सृगालहाः (४५)॥ १०-५३१॥

दमघोषो पदेष्टा च रथग्राही सुदर्शनः।

वीरपत्नीयशस्त्राका जराव्याधिविघातकः (४६)॥ १०-५३२॥

द्वारकावाससत्वज्ञो हुताशनवरप्रदः।

यमुना वेगसंहारी नीलांवरधरः प्रभुः (४७)॥ १०-५३३॥

विभुः शरासनो धन्वी गणेशो गणनायकः।

लक्ष्मणो लक्षणो लक्षो रक्षो वंशविनाशनः (४८)॥ १०-५३४॥

वामनो वामनी भूतो वमनो वमनारुहः।

यशोदानन्दनः कर्त्ता यमलार्जुनमुक्तिदः (४९)॥ १०-५३५॥

उलुखली महामानो धामवद्धाहयीशमी।

भक्तानुकारी भगवान् केशवो वलधारकः (५०)॥ १०-५३६॥

केशहो मधुहामोही वृषोत् सा विघातकः।

१४२अ) अघासुरविनाशी च पूतना मोक्षदायकः (५१)॥ १०-५३७॥

कुब्जा विनोदी भगवान् कंसमृत्युर्महामखी।

अश्वमेधो वाजपेयो गोमेधो नरमेधवान् (५२)॥ १०-५३८॥

कन्दर्पकोटिलावण्यश्चन्द्रकोटिसुशीतलः।

रविकोटिप्रतीकाशो वायुकोटिमहावलाः (५३)॥ १०-५३९॥

ब्रह्मा ब्रह्माण्डकर्ता च कमला वांच्छितप्रदः।

कमली कमलाक्षश्च कमलामुखलोलयः (५४)॥ १०-५४०॥

कमलव्रतधारी च कमलाक्षः पुरन्दरः।

सौभाग्याधिकचित्तोयं महामायी मदोत्कटा (५५)॥ १०-५४१॥

तारकारिः सुरभ्राता मारीचक्षोभकारकः।

विश्वामित्रप्रियो दान्तो रामो राजीवलोचनः (५६)॥ १०-५४२॥

लंकाधिपकुलध्वंसी विभीषणवरप्रदः।

सीतानन्द करो रामो वीरो वारिधिवंधनः (५७)॥ १०-५४३॥

चन्द्रावलीं पतिः कूलं (हृ) कंसी कंसवधोमरः।

माधवो मधुहामाध्वी कोमाधवी विभुः (५८)॥ १०-५४४॥

मुझाद्वीगाहमानो धेनुकानिर्धरात्मजः।

वंशीवटविहारां च गोवर्धनवनाश्रयः (५९)॥ १०-५४५॥

तथा तालवनोद्देशी भाण्डीरावनसंकहा।

तृणावर्त्ता कृपाकारि वृषभान सुतापतिः (६०)॥ १०-५४६॥

राधाप्राणसमोराधा वदनाब्जमधूकरः।

गोपीरंजनदैवज्ञो लीलाकमलपूजितः (६१)॥ १०-५४७॥

क्रीडाकमलसंदोहो गोपिकाप्रीतिरंजनः।

रजको रंजनारंगो रंगीरंगमहीरुहः (६२)॥ १०-५४८॥

कामः कामारिभक्तोयं पुराणः पुरुषः कविः।

नारदो देव लोभी मोवालो वालामुखांवुजी (६३)॥ १०-५४९॥

अंवुजो ब्रह्मसाक्षी च योगदत्तवरमुनिः।

ऋषभः पर्वतो ग्रामो नदीपवनवल्लभः (६४)॥ १०-५५०॥

पद्मनाभः सुरज्येष्ठो ब्रह्मारुद्रो हि भूषितः।

गणानां त्राणकर्त्तान्नगणेशोग्रहिलोग्रही (६५)॥ १०-५५१॥

गणाश्रयो गणाध्यक्षो क्रोडी कृत जगत् त्रयः।

यादवेन्द्रो द्वारकेन्द्रो मथुरावल्लभो धुरी (६६)॥ १०-५५२॥

भ्रमरः कुन्तली कुन्ती सुतरक्षी महामखी।

यमुना वरदाता च कश्यपस्य वरप्रदा (६७)॥ १०-५५३॥

शंखचूडवधोद्दामी गोपीरक्षण तत्परः।

१४२ब्) पांचजन्यकरो रामी त्रिनामी वरजोजयः (६८)॥ १०-५५४॥

फल्गुनः फाल्गुनसखा विराधवधकारकः।

रुक्मिणी प्राणनाथश्च सत्यभामा प्रियंकरः (६९)॥ १०-५५५॥

कल्प-ऋक्षो महावृक्षो दावक्षो महाफलः।

अंकुशो भूसुरो भामो भामको भ्रामको हरिः (७०)॥ १०-५५६॥

सरलः शाश्वतो वीरो यदुवंशी शिवात्मकः।

प्रद्युम्नवलकर्ता च प्रहर्त्ता दैत्यहा प्रभुः (७१)॥ १०-५५७॥

महाधनो महावीरो वनमाला विभूषणः।

तुलशीदामशोभाढ्यो जालंधरविनाशनः (७२)॥ १०-५५८॥

शूरोः सूर्योमृकण्डश्च भास्करो विश्वपूजितः।

रविस्तमो महावह्निर्वाडवो वडवानलः (७३)॥ १०-५५९॥

दैत्यदर्पविनाशी च गरुडो गरुडाग्रजः।

गोपीनाथो महानाथो वृन्दानाथो विरोधकः (७४)॥ १०-५६०॥

प्रपंचपंचरूपश्च लतागुल्मश्च गोपतिः।

गंगा च युमुना रूपो गोदावेत्रावती तथा (७५)॥ १०-५६१॥

कावेरी नर्मदा वापी गण्डकी सरयूरजः।

राजसस्तामसः सत्त्वी सर्वाङ्गी सर्वलोचनः॥ १०-५६२॥

मुदामयो मृतमयो योगिनीवल्लभः शिवः।

वुद्धो वुद्धिमताः श्रेष्ठो विष्णुर्जिष्णुः शचीपतिः (७७)॥ १०-५६३॥

वंशी वंशीधरो लोको विलोकमोहनाशनः।

खरवोरवोवलोवाला * * * वलाहकः॥ १०-५६४॥

शिवरुद्रो नलो नीलो लांगूलीलांगलाश्रयः।

पारदः पावनो हंसो हंसारूढो जगत्पतिः (७९)॥ १०-५६५॥

मोहनी मोहनो माया महामायी महमुखी।

विषो वृषाकपिः कालः कालीदमनकारकः (८०)॥ १०-५६६॥

बुब्जा भाग्यप्रदो वीरो रजकक्षयकारकः।

कोमलो वारुणो राजा जलजो जलधारकः (८१)॥ १०-५६७॥

हारकसर्वपापघ्नः परमेष्ठी पितामहः।

खड्गकारी कृपाकारी राधारमणसुन्दरः (८२)॥ १०-५६८॥

द्वादशारण्यसंभोगी शेषनागवनालयः।

कामः श्यामः सुखः शीदः प्रीहः प्रीदः पतिकृती (८३)॥ १०-५६९॥

हरिर्हरो नरो नारो नरोत्तम इषु प्रियः।

गोपाली चित्तहर्त्ता च कर्त्ता संसारतारकः (८४)॥ १०-५७०॥

आदिदेवो मादेवो गौरीगुरुरनाश्रयः।

साधुः साधुर्विधुर्धाता त्राता क्रुरपरायणः (८५)॥ १०-५७१॥

१४३अ) रालंवी च हयग्रीवो वानरारिर्वनाश्रयः।

वनं वनीवलाध्यक्षो महावधो महामुनिः (८६)॥ १०-५७२॥

श्यामन्तकमणि पूजो विज्ञो विघ्नविघातकः।

गोवर्धनो वर्धनीयो वर्धनीवर्धन प्रियः (८७)॥ १०-५७३॥

वार्धन्यो वर्धनो वर्धी वार्धनः ससुखप्रियः।

वार्धन्यो वर्धनो वर्धी वार्धनः ससुखप्रियः॥ १०-५७४॥

वर्धिको वृद्धको वृद्धो वृद्धारकजन प्रियः (८८)।

गोपालरमणी भर्त्ता शावकुष्टविनाशनः॥ १०-५७५॥

रुक्मिणी हरणप्रेमा प्रेमीचन्द्रावै पतिः (८९)।

श्रीकर्त्ता विश्वभर्त्ता च नारायण नरावली॥ १०-५७६॥

गणो गणपतिश्चैव दत्तात्रेया महामुनिः (९०)।

व्यासो नारायणो दिव्यो भव्यो भावुकधारकः॥ १०-५७७॥

स्वश्रेयः शंशिवं भद्रं भावुकं भविकं शुभम् (९१)।

शुभात्मकाः शुभः शास्ता प्रशस्ता मेघनादहा॥ १०-५७८॥

ब्रह्मण्य देवोदी नानामुद्धारकरणक्षमः (९२)।

कृष्णः कमललोलाक्षः कृष्णः कमललोचनः॥ १०-५७९॥

कृष्णः कामी सदाकृष्ण समस्तप्रियकारकः (९३)।

नंदो नन्दी महानादी मादीमादीनकः॥ १०-५८०॥

किली मिली हिली गिली गोली गोलो गोलालयो गुली (९४)।

गुरगुली मारकी साखी वटः पि *?वकः कृती॥ १०-५८१॥

म्लेच्छहा कालहर्त्ता च यशोदा यश एव च (९५)।

अच्युतः केशवो विष्णुर्हरिः सत्योजनार्दनः॥ १०-५८२॥

हंसो नारायणो नीली लीनो भक्तपरायणः (९६)।

जानकी वल्लभो रामो विरामो विशनाशनः॥ १०-५८३॥

सहस्रभानुर्महाभानुर्वीरभानुर्महोदधिः (९७)।

समुद्रोव्धिरकुपारः पारावारः सरित्पतिः॥ १०-५८४॥

गोकुलानन्दकारो च प्रतिज्ञा परिपालकः (९८)।

सदारामः कृपारामो महारामो धनुर्द्धरः॥ १०-५८५॥

पर्वतपर्वताकारो गयो गेयो द्विजप्रियः (९९)।

कंवलाश्व ततो रामो रामायण प्रवर्त्तकः॥ १०-५८६॥

द्योदिवौदिवसो दीप्यो भव्यो भावीभयावहः (१००)।

पार्वती भाग्य सहितो भ्राता लक्ष्मीर्विलासवान्॥ १०-५८७॥

विलासी साहसी सर्वगर्वी गर्वितलोचनः (१)।

मुरारिर्लोकधर्मज्ञो जीवनो जीवनान्तक॥ १०-५८८॥

१४३ब) यमो यमारियमानो यामी यामविधायकः (२)।

वंशुली पांशुली पाडुः पाडुरर्जुनवल्लभः॥ १०-५८९॥

लीलीतां चन्द्रिकामाली माली मालांवुजश्रयः (३)।

अंवुजाख्यो महायक्षो दक्षो चिन्तामणिः प्रभुः॥ १०-५९०॥

मणिर्दिनमणिश्चैव केदारो वद्रीश्रयः (४)।

वद्रीवनसंप्रीतो व्यासः सत्यवती सुतः॥ १०-५९१॥

भ्रमारि च निहन्ता च स्वधासिंधुविधूदयः (५)।

चन्द्रो रविः शिवः शूली चक्री चैव गदाधरः॥ १०-५९२॥

श्रीकर्त्ता श्रीपतिः श्रीदः श्रीदेवो देवकी प्रियः (६)।

सहस्रनामम् (१०००)॥

इति श्रीराधिकानाथ सहस्रं नामकीर्त्तितम्॥ १०-५९३॥

स्मरणात् पापराशीनां खण्डनं मृत्युनाशनम् (७)।

वैष्णवानां प्रियकरं महादारिद्र्यनाशनम्॥ १०-५९४॥

ब्रह्महत्यां सुरापानं परस्त्रीगमनं तथा (८)।

परद्रव्यापहरणं परद्वेषसमन्वितम्॥ १०-५९५॥

मानसं वाचिकं कायं यत् पापं पापसंभवम् (९)।

सहस्रनामपठनात् सर्वं नश्यति तत्क्षणात्)॥ १०-५९६॥

महादारिद्र्ययुक्तो यो वैष्णवो विष्णुभक्तिमान् (१०)।

कार्त्तिक्यां यः पठेद् रात्रौ शतमष्टोत्तरं पठेत्॥ १०-५९७॥

पीतांवरधरो धीमान् सुगंधिपुष्पचन्दनैः (११)।

पुस्तकं पूजयित्वा च नैवेद्यादिभिरेव च॥ १०-५९८॥

राधाध्यानाङ्कितो धीरो वनमालाविभूषितः (१२)।

शतमष्टोत्तरं देवि पठेन्नामसहस्रकम्॥ १०-५९९॥

चैत्रशुक्ले च कृष्णे च कुहूसंक्रान्ति वासरे (१३)।

पतितव्यं प्रयत्नेन त्रैलोक्यं मोहयेत् क्षणात्॥ १०-६००॥

तुलसी मालयायुक्तो वैष्णवो भक्ति तत्परः (१४)।

रविवारे च शुक्रे च द्वादश्यां श्राद्धवासरे॥ १०-६०१॥

ब्राह्मणं पूजयित्वा च भोजयित्वा विधानतः।

पठेन्नामसहस्रं च ततः सिद्धिः प्रजायते॥ १०-६०२॥

महानिशायां सततं वैष्णवं यः पठेत् सदा।

दिशान्तरगता लक्ष्मीः समायाति न संशयः॥ १०-६०३॥

त्रैलोक्ये च महादेव्यः सुन्दर्याः काममोहिताः (१७)।

मुग्धाः स्वयं समायान्ति वैष्णवं च भजन्तिताः॥ १०-६०४॥

रोगी रोगात् प्रमुच्येत वद्धो मुच्यतवंधनात् (१८)।

गुर्विणी जनयेत् पुत्रं कन्या विन्दति सत्पतिम्॥ १०-६०५॥

राजाश्च वश्यतां याति किं पुनर्क्षुद्रमानुषः (१९)।

१४४अ) सहस्रनामश्रवणात् पठनात् पूजनात् प्रिये॥ १०-६०६॥

धारणात् सर्वमाप्नोति वैष्णवो नात्र संशयः (२०)।

वंशीवटे चान्यवटे तथा पिप्पलकी तथा॥ १०-६०७॥

कदंवपीतपतले गोपालं मूर्त्ति सन्निधौ (२१)।

य पठेद् वैष्णवो नित्यं सयाति हरिमन्दिरम्॥ १०-६०८॥

कृष्णे नोक्तं राधिकायै मेपि प्रोक्तं पुराशिवे (२२)।

नारदाय मया प्रोक्तं नारदे नप्रकाशितम्॥ १०-६०९॥

मया त्वाये वराहोहे प्रोक्तमेतत् सुदुर्लभम् (२३)।

गोपनीयं प्रयत्नेन नप्रकाशं कथं च न॥ १०-६१०॥

शठाय पापिने चैव लंपटाय विशेषतः (२४)।

नदातव्यं नदातव्यं नदातव्यं कदाचन॥ १०-६११॥

देयं शान्तापशिष्योय विष्णुभक्तिरताय च (२५)।

गोदानं ब्रह्मयज्ञश्च वाजपेयशतं तथा॥ १०-६१२॥

अश्वमेधसहस्त्रस्य फलं पाठे भवेद्रुमे (२६)।

मोहनं स्तंभनं चैव मारणोच्चाटनादिकम्॥ १०-६१३॥

यद्यद्वांच्छति चित्ते न तत् तत् प्राप्नोति वैष्णवः (२७)।

एकादश्यां नरः स्नात्वा सुगंधिद्रव्यतैलकैः॥ १०-६१४॥

आहारं ब्राह्मणो दत्वा दक्षिणां त्वणं भूषणाम् (२८)।

तत आरंभकर्त्तासौ सर्वं प्राप्नोति मानवः॥ १०-६१५॥

शतावर्तं सहस्रं च यः पठेद्वैष्णवोग्रतः (२९)।

श्रीवृन्दावनचक्रस्य प्रसादात् सर्वमाप्नुयात्॥ १०-६१६॥

यद्गेहे पूस्तकं देवि पूजिता चैव तिष्ठति (३२)।

नमानी न च दूर्भिक्षं नोपसर्गं भयं क्वचित्॥ १०-६१७॥

सर्पादिभूतयक्षाद्यान् वश्यते नात्र संशयः।

श्रीगोपालो महादेवि वसेत् तस्य गृहे तथा॥ १०-६१८॥

यत्र गेहे सहस्रं च नाम्नी तिष्ठति पूजितम् (३३)।

इति श्रीसम्मोहनतन्त्रे पार्वती हर संवादे श्रीगोपालसहस्रनामसमाप्तम्॥

अथ गोपालस्तवं लिख्यते॥

ॐ नवीन नीरदे श्यामं नीलेन्दीवरलोचनम्॥ १०-६१९॥

वल्लभी नन्दनं वन्दे कृष्णं गोपालरूपिणम् (१)।

स्फुरद्वर्हदलोद्वद्ध नीलकुंचित् मुधर्जम्॥ १०-६२०॥

कदंवकुसुमोद्वद्ध वनमाला विभूषितम् (२)।

गण्डमण्डलशसर्गि चलत् कांचन कुण्डलम्॥ १०-६२१॥

स्थुलमुक्ताफलोदाम हारद्योतिवक्षसम् (३)।

१४४ब) हेमाङ्गदतुलो कोटि किरीटोज्ज्वलविग्रहम्॥ १०-६२२॥

मन्दमारुतसंक्षोभ वल्लितांवरसंचयम् (४)।

रुचिरोष्टपुटन्यस्त वंशीमधुरनिःस्वनैः॥ १०-६२३॥

ललङ्गोपालिका चेतो मोहयतं मुहुर्म्मुहुः (५)।

वल्लवीवदनां भोज मधुपानमधुव्रतम्॥ १०-६२४॥

क्षोभयन्तं मनस्तासां सस्मेरापाङ्गवीक्षणैः (६)।

यौवनोद्भिन्नदेहाभिः संसक्ताभिः परस्परम्॥ १०-६२५॥

विचित्रं विरभूषाभिर्गोपनारीभिरावृतम् (७)।

प्रभिन्नांजनकालिन्दी जलकेलिरसोत्सुकम्॥ १०-६२६॥

योधयन्तं क्वचिद् गोपान् व्याहरन्तं गवां गणम् (८)।

कालिन्दीजलसंसर्गि शीतला निलकंपिते॥ १०-६२७॥

कदंवपादपच्छाये स्थितं वृन्दावने क्वैत् (९)।

रत्नभूधरसंलग्न रत्नासनपरिग्रहम्॥ १०-६२८॥

कल्पपादपमध्यस्थं हेममण्डपिकागतम् (१०)।

वसन्तकुसुमोमोद सुरभीकृत दिङ्मुखे॥ १०-६२९॥

गोवर्द्धनगिरौ रम्ये स्थितं रामरसोत्सुकम् (११)।

सव्यहस्ततलं न्यस्त गिरिवर्यातपत्रकम्॥ १०-६३०॥

खण्डिताखण्डलोन्मुक्त मुक्तामारघनाघनम् (१२)।

वेणुवाद्य महोल्लास कृतहुंकारनिःस्वनैः॥ १०-६३१॥

सत्सैरुन्मुखैः शश्वङ्गोपालैरभिवीक्षितम् (१३)।

कृष्णमेवानुगायद्भिस्तवेष्ठावशवर्त्तिभिः॥ १०-६३२॥

दण्डपाशोद्यतकरैर्गोपालैरूपशोभितम् (१४)।

नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदाङ्गपारगैः॥ १०-६३३॥

प्रीतिसुस्निग्धया वाचा स्तूयमानं परात्परम् (१५)।

ये इमं चिन्तयेद् देवं भक्त्या संस्तौतिमानवः॥ १०-६३४॥

त्रिसंध्यं तस्य तुष्टोसौ ददाति वरमीप्सितम् (१६)।

राजवल्लभतामेति भवेत् सर्वजनप्रियः॥ १०-६३५॥

अचलां श्रियमाप्नोति सवाग्मी जायते ध्रुवत् (१७)।

इति गौतमीतन्त्रे गोपालस्तवः समाप्ता॥

अथ वैष्णवानां द्वादशशुद्धि एहोच्यते॥ १०-६३६॥

गृहोपसर्पणं चैव तथानुगमनं हरः।

भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः॥ १०-६३७॥

पूजार्थं पत्रपुष्पाणां पादयोः शोधनं पुनः।

पूजार्थं पत्रपुष्पाणां भक्त्यौवतोलनं हरः॥ १०-६३८॥

करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते।

तन्नमे कीर्त्तनं चैव गुणानामपि कीर्त्तनम्॥ १०-६३९॥

भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते।

तत्कथाश्रवणं चैव तस्योत्सवनिरीक्षणम्॥ १०-६४०॥

श्रीत्रयोनेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते।

पादोदकं च निर्माल्यं पुष्पाणामपि धारणम्॥ १०-६४१॥

उच्यते शिरस्ः शुद्धिः प्रणतस्य हरेः पुनः।

आघ्राणं गंधपुष्पादेर्निर्मालस्य तपोधन॥ १०-६४२॥

विशुद्धिः त्यादं तरस्ये घ्राणस्यापि विधीयते।

तत्र पुष्पादिकं यश्च कृष्णपाटयुगार्चितम्॥ १०-६४३॥

तदेकं पावनं लोके तद्धिसर्वं विशोधयेत्।

ललाटे च गदाकार्या मूर्द्धिर्ध्नचापधरास्तथा॥ १०-६४४॥

नन्दकं चैव हृन्मध्ये शंखचक्रं भुजद्वये।

संखचक्राङ्कितो विप्रः श्मशाने म्रियते यदि॥ १०-६४५॥

प्रयोगे या गतिः प्रोक्तो सा गतिस्तस्य गौतम।

चन्दनेति शेषः तप्तमुद्रादौ निन्दा श्रवणात्॥ १०-६४६॥

तथा चोक्तं वृहन्नारदीये॥

ब्राह्मणमधिकृत्य॥

यस्तु सन्तप्तशंखादि लिंगचिह्नितनुर्नरः।

ससर्वयातनाभोगी चण्डालो जन्मकोटिषु॥ १०-६४७॥

तं द्विजं तप्तशंखादि लिङ्गाङ्किततनुं पुनः।

संभावा रौरवं याति यावदिन्द्रश्चतुर्दश॥ १०-६४८॥

चक्राङ्किततनुर्यस्य तत्र कापि न संवसेत्।

यदि तिष्ठेन् महापापी सहस्त्रब्रह्महा भवेत्॥ १०-६४९॥

चक्राङ्कितोतनुं दृष्ट्वा पश्येत् सूर्यं जपेद् ऋचः।

जपेच्च पौरुषं सूक्तमन्यथा रौरवं व्रजेत्॥ १०-६५०॥

ब्रह्मणस्य तनुर्ज्ञेया सर्वदेव समाश्रिता।

सा चेत् सन्तापिता राजन् किं वक्ष्यामि महे नमः॥ १०-६५१॥

चक्राङ्किततनुर्वापि राजं ल्लिङ्गाङ्कितो पि वा।

नाधिकारी परिज्ञेयः शौतस्मार्तेषु कर्मसु॥ १०-६५२॥

पंचोपचारगंधाद्या दशतेर्घादिपंचभिः।

यथोक्त वस्तुसंपत्तौ धिया संकल्प पूजयेत्॥ १०-६५३॥

विभर्त्तिमूर्ध्ना निर्माल्यं केशवार्वा धृतं तु यः।

अनिवेद्य च नाश्नाति तस्य * ष्यति केशवः॥ १०-६५४॥

श्रीविष्णुधर्मोत्तरे॥

सर्वान् समर्च्चयेद् देवान केवादेवमर्च्चयेत्।

देवार्च्चं श्रद्धया कृत्वा ध्रुवं तल्लोकमाप्नुयात्॥ १०-६५५॥

अलाभेन तु पुष्पाणां पत्राण्यपि निवेदयेत्।

फलानामप्यलाभेन तृणगुल्मौषधीरपि॥ १०-६५६॥

ओषधीनामलाभे तु जलमात्रं निवेदयेत्।

१४५ब्) जलाभावे तु भावेन भक्त्या संपूजितो भवेत्॥ १०-६५७॥

केशवाग्रे नृत्यगीतं नकरोति हरेर्दिने।

वह्निना किं नदग्धोसौ गतः किं नुरसातलम्॥ १०-६५८॥

इति द्वात्रिंशदपराधाः।

पानैर्वा पादुकैर्भिर्वा यानं भगवतो गृहे।

देवोत्सवेष्ठसे वासा अप्रणामस्तदग्रतः॥ १०-६५९॥

उच्छिष्टे चैव चाशौ चे भगवद्वन्दनादिकम्।

एकहस्तप्रणामश्च यत् पुरस्तात् प्रदक्षिणम्॥ १०-६६०॥

पादप्रसारणं चाग्रे तथा पर्यंकवंधनम्।

शयनं भक्षणं चापि मिथ्या भाषणमेव च॥ १०-६६१॥

उच्चैभाषं मिथोजल्पो रोधनानि च विग्रहः।

निग्रहानुग्रहौ चैव स्त्रीषु च क्रुरभाषणम्॥ १०-६६२॥

कंवलावरणं चैव परनिन्दा परस्तुतिः।

अश्लेलभाषणं चैव अधोवायुविमोक्षणम्॥ १०-६६३॥

शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम्।

तत् तत्कालोद्भवानां च फलादीनामसर्पणम्॥ १०-६६४॥

विनियुक्ता वशिष्ठस्य प्रदानं व्यंजनं च यत्।

स्पष्टीकृत्यासनं चैव सतां निंदा सतां स्तुतिः॥ १०-६६५॥

गुरौं मानं निजस्तोत्रं देवता निन्दनं तथा।

अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्त्तितः॥ १०-६६६॥

इत्यागमकल्पलतायां दशमः॥

अथ श्रीविष्णुमन्त्राः॥

तारं नमः पदं भूयान् नरोदीर्घसमन्वितौ।

पवनोनायमन्त्रोयं प्रोक्तो व स्वक्षरात्मकः॥ ११-१॥

तारं ॐकारः नमः स्वरूपं नरौनकाररेफौ दीर्घसमन्वितौ

आकारयुक्तौ तेन नारा इति भवति पवनो यकारः नाय इति स्वरूपम्। तथा।

ॐ नमो नारायणाय॥

इत्यष्टाक्षरमन्त्रो भवति॥

अस्य मन्त्रस्य साधो नारायणो मुनिः गायत्री च्छन्दः श्रीविष्णुर्देवता
धर्मार्थकाममोक्षेषु विनियोगः॥

अत्र षड्भिर्वर्णैः षडङ्गानि शिष्टवर्णयोः कुक्षिपृष्ठयो न्यासमात्रमिति
शारदा॥

ॐ हृदयाय नमः॥

नं शिरसे स्वाहा॥

मो शिखायै वौषट्॥

नां कवचाय हुम्॥

रां नेत्राभ्यां वौषट्॥

य अस्त्राय फट्॥

इति हृदयादिषु विन्यस्य नाकुक्षौ य पृष्टे न्यसेत्।

ततः किरीटमन्त्रेण व्यापकं न्यस्त्वा ध्यायेत्।

किरीटमन्त्रो यथा॥

ॐ किरीटकेयुरहारमकरकुण्डलचक्रशंखगदां भोजहस्तपीतांवर
श्रीवत्साङ्कितवक्षस्थलं श्रीभूमिसहितसाग्निसात्मज्योति द्वयदीप्तकराय

सहस्रादित्य वर्चसे नमः॥

१४६अ) इति कीरीतमन्त्रेण व्यापकं कुर्यात्॥

ॐ अद्यत् कोटिदिवाकराभमनिशं शंखं गदां पंकजं चक्रं
विभ्रतमिन्दिरावसुमती संशो। भपार्श्वद्वयम्।

कोटीराङ्गदहारकुण्डलधरं पीतांवरं कोस्तुभोद्दीप्तं विश्वधरं
सुवक्षसिलसच्छ्रीवत् सचिह्नं भजे।

इति ध्यात्वा पूजयेत्॥

शंखचक्रे दक्षिणवामहस्तयोरधः।

पद्मगतेरूर्ध्वयोर्दक्षिणवामहस्तयोः।

दक्षिणोर्ध्वहस्तमारभ्य शंखचक्रगदापद्मानां चतुर्स्यां विन्यासः
॥

षट्कोणेषु केशवमधुसुदनसंकर्षणदामोदर वामनप्रद्युम्नाः

षण्मुर्त्तयः पूज्याः॥

एवं वामोर्ध्वहस्तमारभ्य यथा क्रमं विष्णुमाधवा
निरुर्द्धपुरुषोत्तमाधोक्षजजनार्दनाः॥

अधोवामहस्तमारभ्य गोविन्दत्रिविक्रम श्रीधर हृषीकेश नृसिंहाच्युताः
।

अधोदक्षिणहस्तमारभ्य वासुदेवनारायण पद्मनाभो
पेन्द्रहरिकृष्णमूर्त्तयो भवन्ति॥

आवरणपूजायां कर्णिकाया अग्न्यादिकोणोषु हृदयशिरः शिखाकवचानि।

अग्रे नेत्रं दिक्षु-अस्त्रं विमलोत्कर्षिणी ज्ञाना क्रियायोगा ततः परम्।

प्रह्वीसत्या तथे शानानुग्रहा नवमीमता।

इति पीठशक्तयः॥

ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्म

संयोगयोगपीठात्मने नमः।

इति पीठमन्त्रः॥

विकारलक्षं प्रजपेन् मनुमेनं समाहितः।

विकारलक्षं षोडशलक्षम् (१६)॥

प्रणवो हृद्भगवते वासुदेवाय कीर्त्तितः।

प्रधानं वैष्णवे मन्त्रोयं द्वादशाक्षरः।

ॐ नमो भगवते वासुदेवाय॥

इति द्वादशाक्षरो मन्त्रः॥

ऋषिः प्रजापतिः च्छन्दो गायत्री परीकीर्त्तितः।

देवतास्य मनोः प्रोक्ता वासुदेवो मनीषिभिः॥ ११-२॥

ॐ हृदयाय नमः॥

नमः शिरसे स्वाहा॥

१४६ब) भगवते शिखायै वौषट्॥

वासुदेवाय कवचाय हुम्॥

ॐ नमो भगवते वासुदेवाय अस्त्राय फट्॥

इत्यंगमत्रः॥

पीठशक्तयः पीठमन्त्राश्चापि पूर्ववत्।

ॐ विष्णुं शारदं चन्द्रकोटिसदृशं शंखं रथाङ्गगदा

मंभोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम्।

आवद्धाङ्गदहारकुण्डल महामौलिस्फुरत्कुन्तलं

श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैस्तुतम्॥ ११-३॥

इति ध्यानम्॥

अत्रादौ दक्षिणहस्तमारभ्य प्रदक्षिणक्रमेण शंखादिचतुष्टयं देयम्
॥

पूजायन्त्रम्॥

प्रथममष्टदलं ततो द्वादशदलं पद्मम्।

वर्णलक्षं जपेन् मन्त्रं दीक्षितोविजितेन्द्रियः॥ ११-४॥

तत् सहस्त्रं प्रजुहुयात् तिलैराज्यपरिप्लुतैः।

अथ लक्ष्मीनारायण मन्त्रः।

हृल्लजावीजयुगलं रमावीजयुगं पुनः॥ ११-५॥

लक्ष्यन्ते वासुदेवाय हृदन्तः प्रणवादिकः।

चतुर्दशाक्षरेः प्रोक्तो मन्त्रोयं सुरपादपः॥ ११-६॥ ११-तेन॥

ॐ ह्रीँ ह्रीँ श्रीँ श्रीँ लक्ष्मीवासुदेव मन्त्रस्य अंगमन्त्रं ध्यानं च
विनासर्वं द्वादशाक्षरमन्त्रवत्॥

अंगमन्त्रास्तु॥

ॐ ह्रीँ श्रीँ हृदयाय नमः॥

ॐ ह्रीँ श्रीँ शिरसे स्वाहा॥

ॐ लक्ष्मी शिखायै वौषट्॥

ॐ वासुदेवाय कवचाय हुम्॥

ॐ नमः अस्त्राय फट्॥

ॐ विद्युच्चन्द्रनिभं वपुः कमलजा वैकुण्ठयोरेकतां

प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालंकृतम्।

विद्यापंजदर्पणं मणिमयं कुंभं सरोजं गदां

शंखं चक्रममुनिविभ्रदनितां दिश्याच्छ्रियं वः सदा॥ ११-७॥

वर्णलक्षं जपेन् मन्त्री तत् सहस्त्रं सरोरुहैः।

होमं कुर्याद् विकसितैर्मधुरत्रयसंयुतैः॥ ११-८॥

पायसे न कृतो होमो लक्ष्मी वश्य प्रदायकः।

मधुराक्तैस्तिलै हुत्वा सर्वकार्याणि साधयेत्॥ ११-९॥

अथ दधिवमनमन्त्रः॥

तारो हृद्वैष्णवे पश्चाद् * तः सुरपतेर्भवेत्।

महावलाय ठ द्वंद्वं मनुरष्टादशाक्षरः॥ ११-१०॥

मन्त्रो यथा॥

ॐ नमो विष्णवे सुरपतये महावलाय स्वाहा॥

अस्य मन्त्रस्य॥

ऋषिरिंदुर्विराट् च्छन्दो देवता दधिवामनः।

विभूत्याद्यभीष्टसिद्ध्यै विनियोगः प्रकीर्त्तितः॥ ११-११॥

१४७अ) ॐ हृद्याय नमः॥

नमः शिरसे स्वाहा॥

विष्णवे शिखायै वौषट्॥

सुरपतये कवचाय हुम्॥

महावलाय नेत्राभ्यां वौषट्॥

स्वाहा अस्त्राय फट्॥

इत्यंगमन्त्रः॥

पीठशक्तयः पूर्ववत्॥

ध्यानम्॥

ॐ मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं

हस्ताव्जाभ्यां कनककलशं शुद्धतो याभिपूर्णम्।

दधान्नोद्यं कनकचषकं धारयन्तं भजामः

कनकचषकं दक्षिणहस्ते * * * चिन्तयेत्॥ ११-१२॥

आवरणपूजा॥

अग्न्योदिकोणकेसरेषु हृदयशिरः।

शिखाकवचानि अग्रे नेत्रं दिक्ष्वस्त्रम्।

गुणलक्षं जपेन् मन्त्रं तद् देशाशघृतप्लुतैः।

पायसान्नैः प्रजुहुयाद्दध्यन्नैर्वा यथाविधि॥ ११-१३॥

गुणलक्षं लक्षत्रयम्।

अथ हयग्रीवमन्त्र।

उद्गिरत्पदमाभाष्य प्रणवोद्गीथशब्दतः।

सर्ववागीश्वरेत्पन्ते प्रवदेदीश्वरीत्पथ॥ ११-१४॥

सर्ववेद मया चिन्त्य पदान्ते सर्वमुच्चरेत्।

वोधया द्वितयां तोयं मन्त्रहस्तारादिरीतितः॥ ११-१५॥

म्न्त्रो यथा॥

ॐ उद्गिरत् प्रणवोद्गीथ सर्ववागीश्वरेश्वर।

सर्वदेव मया चिन्त्य सर्वं वोधयवीधय॥ ११-१६॥

अस्त्र मन्त्रस्य ब्रह्मा ऋषिः अनुष्टुपच्छन्दः हयग्रीवो देवता
वागीश्वर्याद्यभीष्टसिद्धौ विनियोगः॥

ॐ हृदयाय नमः।

ॐ उद्गिरत् प्रणवोद्गीथ शिरसे स्वाहा।

सर्ववागीश्वरेश्वर शिखायै वौषट्।

सर्वदेव मया चिन्त्य कवचा हुम्।

सर्ववोधय वोधय अस्त्राय फट्।

इति पंचाङ्गमन्त्रः॥

एवं करन्यासः।

पीठशक्तयः पूर्ववत्॥

पीठमन्त्रश्चापि पूर्वोक्तवत्॥

ॐ शरच्छशाङ्क प्रभमश्ववक्त्रं मुक्तामयैराभणैरुपीतम्।

रथाङ्गशंखाङ्वितवाहुं युग्मं जानुद्वयन् पस्तकरं भजामः॥ ११-
१७॥

आग्नेयादिकोणके सरेषु॥

हृदयशिरः शिखा कवचानि अग्रे नेत्रं दिक्ष्वस्त्रम्॥

वर्णलक्षं जपेन् मन्त्रं कुंटपुष्पैर्मधुप्लुतैः।

दशांशं वैष्णवो वह्नौ जुहुयान् मन्त्रसिद्धये॥ ११-१८॥

अष्टाक्षरो दिते पीठे हयग्रीवं प्रपूजयेत्।

वीजेन मूर्त्तिं सकल्प्य वीजं मूर्द्ध्नि यजेद् यथा॥ ११-१९॥

विपद्भृगुस्थमर्घीशमिन्दुं सद्बीजमीरितम्।

१४७ब्) हसूं इति मूर्तिकल्पनमन्त्रः।

अथवराहमत्रम्॥

तरं नमो भगवते वराहपदमीरयेत्॥ ११-२०॥

रूपाय भूर्भुवः स्वः स्याते तये तदनन्तरम्।

रूपतित्वं मे पदान्ते ज्यन्ते च प्रददापय।

वह्निजायावधिमन्त्रः स्यात् त्रयस्त्रिंशदक्षरः॥ ११-२१॥

मन्त्रो यथा॥

ॐ नमो भगवते वराहरूपायर् भूर्भुवः स्वः पतये भूपतित्वं मेदे हि
प्रदापय स्वाहा॥

इति मन्त्र॥

अस्य मन्त्रस्य भार्गव ऋषिः अनुष्टुपच्छन्दः आदिवराहो देवता भूपति
त्वाद्यभीष्टसिद्धौ विनियोगः॥

एकदंष्ट्राय हृदयाय नमः।

व्योमाल्काय शिरसे स्वाहा।

तेजोधिपतये शिखायै वौषट्।

विश्वरूपाय कवचाय हूँ।

महादंष्ट्राय अस्त्राय फट्।

इति पंचाङ्गमन्त्रः।

पीठशक्तयः पीठमन्त्रश्च पूर्ववत्।

इति॥

अथ ध्यान।

ॐ आपादं जानुदेशान् नवकनकनिभं नाभिदेशादधस्तान्

मुक्ताभं कण्ठदेशात् तरुणरविनिभं मस्तकान्नीलभासम्॥

ईडे हस्तैदधानं रथचरणदरौ खड्गखेटौ गदाख्यां

शक्तिदानाभये च क्षितिधरण लसद्दंष्ट्रमाद्यं वराहम्॥ ११-२२॥

रथ चरणं चक्रं दरः शंखः।

लक्षमेनं जपेन् मन्त्रं मधुराक्तैः सरोरुहैः।

जुहुयात् तद्दशांशेन पीठे विष्णौः प्रपूजयेत्॥ ११-२३॥

उपरिहस्तयोश्चक्रं शंखौ ध्यातव्यौ।

आवरण पूजायाम्।

अग्न्यादिकोणके सरेषु।

इत्यादि पूर्ववत्।

अथ धरणि मन्त्र।

हृदयं भगवत्यै स्याद् धरण्यै तदनन्तरम्।

धरण्यन्ते धरे द्वन्द्वं द्विठं तोयं ध्रुवाधिकः॥ ११-२४॥

मन्त्रो यथा॥

ॐ नमो भगवत्यै धरणिधर स्वाहा।

इति मन्त्रः॥

द्विठः स्वाहा।

ध्रुवः प्रणवः।

एकोनविंशद्वर्णाढ्यांधरा हृदयमीरितम्।

वराहो स्यमुनिः प्रोक्तः च्छन्दो निवृदुदाहृतम्॥ ११-२५॥

देवता सर्वभूतानां प्रकृतिर्वसुधामता।

हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम्॥ ११-२६॥

त्रिभिः शिखा समुद्दिष्टा पंचभिः कवचं मतम्।

द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रं पुनर्भवेत्।

वर्णमन्त्रैः षडंगानि कुर्याद् एव विधानवित्॥ ११-२७॥

१४८अ) इति ध्यानम्॥

ॐ श्यामां विचित्राशुकरत्नभूषां पद्मासना तुंगपयोधरानताम्।

ईंदिवरत्वं नवशालिमंजरीं शुकंदधानां वसुधां भजामहे॥

११-२८॥

लक्षमात्रं जपेन् मन्त्री धरा हृदयमादरात्।

ससर्पिषा पायसेन जुहुयात् तद्दशांशतः॥ ११-२९॥

तां विष्णुं पूजयेत् पीठे वक्षमाणविधानतः।

इति धरणीमन्त्रः॥

ॐ नमो भगवते लक्ष्मीनरसिंहाय नमः।

अथाभिधास्ये विधिवन्नारसिंहं महामनुम्॥ ११-३०॥

उग्रं वीरं वदेत् पूर्वं महाविष्णुमनन्तरम्।

ज्वलन्तं पदमाभाष्य सर्वतो मुखमीरयेत्॥ ११-३१॥

नृसिंहं भीषणं भद्रं मृत्युमृत्युं वदेत् ततः।

नमाम्यहं मयं प्रोक्तो मन्त्रराजसुरद्रुमः॥ ११-३२॥

मन्त्रो यथा॥

ॐ उग्रवीरं महाविष्णु ज्वलन्तं सर्वतो मुखम् [भुखम्]।

नृसिंहं भीषणं भद्रं मृत्युमृत्यं नमाम्यहम्॥ ११-३३॥

अस्य मन्त्रराजस्य ब्रह्मा ऋषिः अनुष्टुपच्छन्दः नरसिंहो देवता धनाद्यभीष्टसिद्धौ विनियोगः॥

चतुर्भिर्हृदयं प्रोक्तं शिरस्तावत्भिरक्षरैः।

शिखाष्टभिः समाख्याता षड्भिः कवचमीरितम्॥ ११-३४॥

तावद्भिर्नयनं प्रोक्तमन्त्रस्यात् करणाक्षरैः।

करणाक्षरैश्चतुरक्षरैः।

उग्रं वीरं हृदयाय नमः।

महाविष्णुं शिरसे स्वाहा।

ज्वलन्तं सर्वतो मुखं शिखायै वौषट्।

नृसिंहं भीषणं कवचाय हुम्।

भद्रं मृत्युमृत्युं नेत्रत्रयाय वौषट्।

नमाम्यहमस्त्राय फट्।

इत्यङ्गमन्त्रः।

अत्रापि विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वीसत्या ईशाना अनुग्रहापीठशक्तयः।

ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्म संयोगपद्मपीठात्मने नमः।

इति मन्त्र॥ ध्यानं यथा॥

माणिक्यादिसमप्रभं निजरुचा सन्त्रस्तरक्षोगणं

जानुन्यस्तकरांवुजं त्रिनयनं रत्नाल्लसद् भूषणम्।

वाहुभ्यां धृत शंखचक्रमनिशं दंष्ट्रो वक्रोल्लस

ज्वाला जिह्वमुदग्रकेशनिचपं वन्दे नृसिंहं विभुम्॥ ११-३५॥

इति ध्यात्वा पूजयेत्॥

अत्रोपरिहस्तयोः शंखचक्रे अधो हस्तौ जानुन्यस्तौ आवरण पूजायाम्।

१४८ब्) अग्न्यादिकोणकेसरेषु हृदयशिरः कवचानि अग्रे नेत्राणि दिक्ष्वस्त्रम्।

वर्णलक्षं जपेत्।

वर्णलक्षं द्वात्रिंशल्लक्षम्।

प्रयोगे तु अस्य ध्यानान्तरमाह।

ॐ उद्यत् कोटिरविप्रभं नरहरि कोटी वहारोज्वलं

दंष्ट्राभीममुखं लसन् नखमुखैर्दीर्घैरनेकैर्भुजैः।

विभिन्नासुरनाथमग्निशशिभृत् सूर्यात्मनेत्रत्रयं

विद्युत्पुंजसढाकरौपमनिशं वह्निं वमन्तं भजे॥ ११-३६॥

सौम्ये सौम्यं स्मरेत् कार्ये क्रुरे क्रुरमिमं यजेत्।

क्षमारो वह्निमारूढो मनुः स्वरसमीरितः॥ ११-३७॥

विन्दुनादलसन्मूद्ध्र्ना वीजं नरहरेर्मनुम्।

तथा च॥

क्ष्रौँ इति भवति।

वीजं नमो भगवते नृसिंहाय ततः परम्॥ ११-३८॥

स्याज्वालामालिनी दीप्ति दंष्ट्राय तत्पदम्।

अग्निनेत्राय सर्वादिरक्षौघ्नाय पदं वदेत्॥ ११-३९॥

सर्वभूतविनाशान्ते नकारो दीर्घवान्मरुत्।

सर्वज्वरविनाशान्ते नकारो दीर्घवान्मरुत्॥ ११-४०॥

अष्टषष्टाक्षरैः प्रोक्तो ज्वालामाली माहामनुः।

हृन् त्रयोदशभिः प्रोक्तं शिरोदशभिरितम्॥ ११-४१॥

शिखैकादशभिः प्रोक्ता वर्माष्टादशभिर्मतम्।

वर्णैर्द्वादशभिर्नेत्रमस्त्रा स्यात् करणाक्षरैः।

एवमंगानि विन्यस्य चिन्तयेन् मन्त्रदेवतम्॥ ११-४२॥

उज्ज्वलत् प्रलयानलाभमयुग्मनेत्रमनारतं

भास्वरं शिखिनः शिखाभिरुद्रग्रदंष्ट्रमुखांवुजम्।

रक्ष मां * * * * * * विकीर्णसटाकलापविभीषणं

शंखचक्रकृपाणखेटक * * * * नृहरिं भजे॥ ११-४४॥

लक्षमेकं जपेत्॥

प्रागुक्तं पूजयेत् पीठे देवं प्रागुक्तवर्त्मना।

कुर्वीतमन्त्रराजोक्तात् प्रयोगान् मनुनामुना॥ ११-४५॥

पाशाशक्तिर्नरहरिरंकुशोवर्मफड्ननुः।

षडक्षरो नरहरेः कथितः सर्वकामदः॥ ११-४६॥

पाशः आशक्तिः ह्रीँ नरहरिः क्ष्रौ अंकुशः क्रोँ वर्म हुं फट् स्वरूपम्।

एते न॥

आँ ह्रीँ क्ष्रौँ क्रौँ हुं फट्।

इति षडक्षरमन्त्रः॥

अस्य मन्त्रस्य ब्रह्मा ऋषिः पंक्तिः च्छन्दः श्रीनरसिंहो देवता अबीष्टसिद्धौ विनियोगः।

आँ हृदयाय नमः।

ह्रीँ शिरसे स्वाहा।

क्ष्रौँ शिखायै वौषट्।

१४९अ) क्रौँ कवचाय हूम्।

हुं नेत्रत्रयाय वौषट्।

फट् अस्त्राय फट्।

इत्यङ्गमन्त्रः॥

पीठशक्तयश्चापि पूर्ववत्।

ततो ध्यानम्॥

ॐ कोपादा लोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं

पादा नानाभिरक्तप्रभमुपरिमितं भिन्नदैत्यन्द्रगात्रम्।

शंखं चक्रं सपाशाङ्कुशकुलिशगदा दारणान् पुद्वहन्तं

भीमं तीक्ष्णौग्रदंष्ट्रं मणिमयविविधा कल्पपीठे नृसिंहम्॥ ११-४७॥

इति ध्यानम्॥

अधोमुख विमुखहस्तद्वया दावरणम्॥

आवरणपूजा पूर्ववत॥

ऋतुलक्षं जपेदेनं घृतं नजुहुयात्तमः॥

ऋतुलक्षं षट्लक्षम्॥

अथ सुदर्शनास्त्रमन्त्रः॥

तारो भृगुर्वियद्धूयस्तदाद्यं वह्नि दीर्घयुक्।

पावकः कवचास्त्रां ते मनुः सप्ताक्षरः स्मृतः॥ ११-४८॥

तारः प्रणवः भृगुः सकारः वियद्धंकारः तदाद्यं हकाराद्यं
सकरः वह्निः रेफः दीर्घयुक् आकारयुक्॥

पावकः रेफः हुम् अस्त्र फट्।

ॐ सहस्रार हुं फट्।

इति मन्त्रः॥

अस्य मन्त्रस्य॥

हिर्बुध्न ऋषिः अनुष्टुपच्छन्दः चक्ररूपी हरिर्देवता अभीष्टसिद्धौ विनियोगः॥

आचक्राय स्वाहा हृदयाय नमः।

विचक्राय स्वाहा शिरसे स्वाहा।

सुचक्राय शिखायै वौषट्।

धीचक्राय स्वाहा कवचाय हुम्।

संचक्राय स्वाहा नेत्रत्रयाय वौषट्।

ज्वालाचक्राय स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्रः॥

मू * * * विमलोत्कर्षिणीत्पाद्याः पीठशक्तयः।

पीठमन्त्रश्चापि पूर्ववत्।

अथ ध्यानम्।

ॐ कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं

रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम्।

शङ्खं चक्रं गदाब्जं पृथूतरमुसुलं चापपाशांकुशान्

स्वैर्विभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम्॥ ११-
४९॥

अर्कलक्षं जपेन् मन्त्रं जुहुयात् तत् सहस्रकम्।

तिलैः ससर्षपैः पद्मैः विल्वैर्दुग्धोदनैः क्रमात्॥ ११-५०॥

विष्णुः संपूजयेत् पीठे मूर्त्तिं मूलेन कल्पयेत्।

अर्कं लक्षं द्वादशलक्षम्।

अग्निप्रकारमन्त्रः।

१४९ब्) त्रैलोक्यं रक्ष रक्ष हूं फट्।

द्वादशलक्षम्।

श्रीपुरुषोत्तमस्य।

ॐ क्लीँ श्रीँ नमः पुरुषोत्तमप्रकृति रूपलक्ष्मी निवाससकलजगत्क्षोभन
सर्वस्त्री हृदयविदारण त्रिभुवन मदोन्मादकरसुरासुरमनुजसुन्दरी
जनवल्लभमनांसि तापय तापय दीपय दीपय शोषय शोषय मारय

मारय स्तंभय स्तंभय मोहय मोहय द्रावय द्रावय आकर्षय
आकर्षय समस्तपरमसुभग सर्वसौभाग्यकर सर्वकामप्रदा मुकं हन
हन चक्रेण गदया शंखेन सर्ववाणैर्भिंदि भिंदि पाशेन कट्ट कट्ट
अंकुशेन ताडय ताडय तुरु तुरु किं तिष्ठसि तावत् समीहितं मे सिद्धिं
भवति ह्रीँ फट् नमः॥

इति द्विशताक्षरोयं मन्त्रः।

चतुर्लक्षं जपेत्॥

जैमिनि मुनिराख्याताः छन्दोस्यास्य समीरितम्॥ ११-५१॥

समस्तजगतामादिर्देवता पुरुषोत्तमः।

प्राक्प्रोक्ते वैष्णवे पीठे कल्पयेद् आसनं ततः॥ ११-५२॥

अथ गरुडमन्त्रः॥

पक्षिराजाय स्वाहा।

देव्यामन्त्रः॥

भृगुर्लान्तयुतः सेन्द्रवीजं देव्या प्रकीर्त्तितम्।

तेन स्वं इति मन्त्रः॥

अथ श्रीकरमन्त्रः॥

उत्तिष्ठवर्णा नामाभाष्य श्रीकोधेशहुताशनौ॥ ११-५३॥

वह्निजाया वधिर्मन्त्रो वस्वक्षरसमन्वितः।

उत्तिष्ठ श्रीकर स्वाहा।

इति मन्त्रः॥

ऋषिरस्य भवेद् वामः पंक्तिः च्छन्द उदाहृतः।

श्रीकराख्यो हरिः प्रोक्तो देवतास्य मनीषिभिः॥ ११-५४॥

ॐ कांचनाद्रिसमप्रभं कमलाननं कमलेक्षणं

शंखचक्रगदासरोजधरं मनोहरदर्शनम्।

कौस्तुभाङ्कितवक्षसं मुकुटाङ्गदादिविभूषितं

तार्क्ष्यवाहनमच्युतं हृदि भावयामि जगत्पतिम्॥ ११-५५॥

इति ध्यात्वा पूजयेद् अष्टलक्षं जपेत्।

अथ गोपालमन्त्रः॥

गोपीजनान्ते एवदेद्वल्लभायाग्नि सुन्दरीम्।

अयं दशाक्षरो मन्त्रो दृष्टा दृष्टफलप्रदः॥ ११-५६॥

अस्य पूजाप्रकरणं पूर्वमेव लिखितम्॥

कृष्णाय पदमाभाष्य गोविन्दाय ततः परम्।

गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः॥ ११-५७॥

कामवीजादिराख्यातो मनुरष्टादशाक्षरः।

१५०अ) अस्य मन्त्रस्य श्रीनारद ऋषिः गायत्री च्छन्दः श्रीविष्णुर्देवता क्लीँ
वीजं स्वाहा शक्तिः श्रीकृष्णप्रकृति दुर्गाधिष्ठात्रि देवता
पुरुषार्थचतुष्टये विनियोगः॥

क्लीँ कृष्णाय हृदयाय नमः।

गोविन्दाय शिरसे स्वाहा।

गोपीजन शिखायै वौषट्।

वल्लभाय कवचाय हूम्।

स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्रः॥

पीठशक्तयः पीठमन्त्राश्चापि पूर्ववत्॥

ध्यानम्॥

ॐ स्मरेद् वृन्दावने च मृ?मोहंयन्तमनाचतम्॥ ११-५८॥

गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः।

आत्मनो वदनां भाज प्रषिताक्षिमधुव्रताः॥ ११-५९॥

पीडिताः कामवाणेन विवशाश्लेषणोत्सुकाः।

मुक्ताहा वलसत्पीतो नोतुंगस्तनभवानताः॥ ११-६०॥

प्रस्तदम्मिल्लवसना मदसुवलितभाषणाः।

दन्तपङ्क्ति प्रभोद्भासि स्पंदमानाधचांचिदाः॥ ११-६१॥

विलोभयन्ती विविधै वित्रमैर्भावगर्भितैः।

इति ध्यायेत्॥

अथवा फूल्लन्दीव च कान्तीत्यादि ध्यायेत्॥

अयुतं द्वयं जपेत्।

अथ पिण्डवीजम्।

पंचान्तकोधरासंस्थो मनुरिन्दुविभूषितः॥ ११-६२॥

पिण्डवीजमिदं प्रोक्तं सर्वसिद्धिकरं परम्।

एते नग्लौ इति भवति॥

पंचान्ते को गकारः धरालकारः मनुःस्वारः औकारः विन्दुरनुस्वारः॥

तेन॥ ग्लौँ इति भवति॥

अथ कामवीजम्।

ब्रह्मा भूम्यासनासीनः शान्तिविन्दुविभूषितः॥ ११-६३॥

वीजं मनोभवं प्रोक्तं जगत् त्रितयमोहनम्।

ऋषिः सम्मोहनः प्रोक्तो गायत्रं च्छन्द ईरितम्॥ ११-६४॥

सर्वसम्मोहनः साक्षाद् देवता मकरध्वजः।

क्लीमिति मन्त्र॥

वीजेन दीर्घयुक्तं नषडंगविधिरीरितः॥ ११-६५॥

अथ ध्यानम्॥

ॐ जपारुणं रत्नविभूषणाढ्यं मीनध्वगं चारुकृताङ्गरागम्।

करांवुजैरंकुशमिक्षुचापं पुष्पास्त्रपाणौ दधतं भजामि॥ ११-६६॥

लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः।

पुष्पैः किंशुकजैः फुल्लैजुहुयाच्च दशांशतः॥ ११-६७॥

अथ श्रीमुकन्दमन्त्रः॥

श्रीमन्मुकुन्द च मणौ सदाशरणमहं प्रपद्ये॥

इति मन्म्त्र॥

१५०ब) चतुर्लक्षं जपेत्॥

अस्य मन्त्रस्य नारायण ऋषिः श्रीगायत्री च्छन्दः श्रीमुकुंदो देवता पुरुषार्थ चतुष्टये विनियोगः॥

आचह्वाय स्वाहा हृदयाय नमः विचक्राय स्वाहा शिरसे पूर्ववत्।

सुचक्राय स्वाहा शिखायै वौषट्।

त्रैलोक्यरक्षणचक्राय स्वाहा कवचाय हुम्।

असुरान्तचक्राय स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्रः॥

पीठशक्तिः पीठमन्त्रश्च पूर्ववत्।

वाग्भवं मारवीजं च कृष्णाय परमेश्वरीम्।

गोविन्दाय रमा गोपीजनवल्लभ ङे शिरः॥ ११-६८॥

चतुर्दशस्वरोपेतः शुक्लस्तु स च मूर्धतः।

शुक्लः सकारः स च मूर्धतः स्वाहानन्तरमित्यर्थः॥

तथा च मन्त्रः॥

ऐँ क्लीँ कृष्णाय गोविन्दाय श्रीँ गोपीजनवल्लभाय स्वाहा सौः॥

अस्य मन्त्रस्य श्रीनारद-ऋषिः गायत्री च्छन्दः श्रीकृष्णा देवता क्लीँ वीजम्
स्वाहा शक्तिः कृष्णा प्रकृति दुर्गाधिष्टा तृदेवता विद्याद्यभीष्टसिद्धौ
विनियोगः॥

क्लीँ कृष्णाय हृदयाय नमः।

गोविन्दाय शिरसे स्वाहा।

गोपीजन शिखायै वौषट्।

वल्लभाय कवचाय हुम्।

स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्र॥

ध्यानम्॥

वामार्ध्वे हस्ते दधतं विद्या सर्वस्व पुस्तकम्॥ ११-६९॥

अक्षमालां च दक्षोर्ध्वे स्फाटिकीमातृकामयीम्।

शब्दब्रह्ममयं वेणुमधः पाणि द्वयेरितम्॥ ११-७०॥

गायन्तं पीतवसनं श्यामलं कोमलच्छविम्।

हविर्वहकृतोत्तंसं सर्वाङ्गसर्ववेदिभिः॥ ११-७१॥

उपासितं सुरगणैरूपतिष्ठेद् धरिं सदा।

ध्यात्वैवं प्रमदावेश विलासं भुवनेश्वरम्॥ ११-७२॥

इति चतुर्लक्षं जपेत्॥

पीठशक्त्यादिकं पूर्ववत्॥

श्रीशक्ति स्मरकृष्णाय गोविन्दाय शिरोमनः।

शिरः स्वाहारव्यर्णः द्वादशार्णः॥

मन्त्रो यथा॥

श्रीँ ह्रीँ क्लीँ कृष्णाय गोविन्दाय स्वाहा।

अस्य मन्त्रस्य ब्रह्मा ऋषिः गायत्री च्छन्दः श्रीकृष्णो देवता ऐश्वर्ये विनियोगः॥

श्री हृदयाय।

ह्रीँ शिरसे स्वाहा।

क्लीँ शिखायै वौषट्।

कृष्णाय कवचाय हुम्।

स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्र।

अन्यत् सर्वं पूर्ववत्।

श्रीशक्ति कामपूर्वोंगजन्मशक्तिरमन्तिका॥ ११-७३॥

१५१अ) दशाक्षरः स एवादोस्याच्चेच्छक्तिरमान्वित्ः।

स एवादौ॥

दशाक्षरः स एवादौ स्याच्चेच्छक्तिरमान्वितः॥ ११-७४॥

मन्त्रौ विकृतिरव्यर्णौ वा चक्राद्यं कताविमौ।

दशाक्षर इत्यं ते न षोडशाक्षरः॥

स एवेत्यादिना द्वादशाक्षरः प्रतिपादितः॥ ११-७५॥

यत्रादौ शक्तिरमान्वित इति संवन्ध इति केचित्।

अनयोर्मन्त्रयोः ब्रह्मा-ऋषिः गायत्री च्छन्दः श्रीकृष्णो देवता संपत्
सुखसौभाग्येषु विनियोगः॥

एतयोरपि मन्त्रयोरंगमन्त्रध्यानं विहाय सर्वं शत्यक्षरवत्॥

आचक्राय हृदयाय नमः।

विचक्राय शिरसे स्वाहा।

सुचक्राय शिखायै वौषट्।

त्रैलोक्यरक्षणाय चक्राय स्वाहा।

कवचाय हुम्।

असुरान्तकचक्राय स्वाहा अस्त्राय फट्।

इत्यङ्गमन्त्र॥

अथ ध्यानम्॥

ॐ वरदाभयहस्ताभ्यां श्लिष्यन्तं स्वाङ्क प्रिये॥ ११-७६॥

पद्मोत्पलकरताभ्यां श्लिष्टं चक्रधरोज्वलम्।

प्रिये रुक्मिणी सत्यभामे शंखचक्रारुपरितनदक्षिणहस्तयोर्दशलक्षं

जपेत्॥

पीठशक्तिमन्त्रश्च पूर्ववत्॥

अष्टादशार्णोमारान्ता मन्त्रः सुतधनप्रदः॥ ११-७७॥

सत्रो यथा॥

क्लीँ कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा क्लीँ अस्य मन्त्रस्य नारद-
ऋषिः गायत्री च्छन्दः श्रीकृष्णो देवता क्लीँ वीजं स्वाहा शक्तिः
सुताद्यभीष्टसिद्धौ विनियोगः॥

क्लां हृदयाय नमः।

क्लीँ शिरसे स्वाहा।

क्लूँ शिखायै वौषट्।

क्लैँ कवचाय हुम्।

क्लौँ नेत्राभ्यां वौषट्।

क्लः अस्त्राय फट्।

इत्यङ्गमन्त्रः।

पीठशक्तिमन्त्राश्च पूर्ववत्॥

अथ ध्यानम्॥

ॐ पाणौ पायसभक्तमाहितरसं बिभ्रन्मुदा दक्षिणे

सणे सव्ये शारदचन्द्रमण्डलनिभं हैयंगवीनं दधत्।

कण्ठे कल्पितपुण्डरीकनखमप्युद्दामदीप्तिं दधद्

देवा दिव्यदिगंवरो दिशभुवः सोख्यं यशोदासुतः॥ ११-७८॥

पुण्डरीकनखं व्याघ्रनखंद्वाविंशल्लक्षं जपेत्॥

वाग्भवं मारवीजं च कृष्नाय भुवनेश्वरीम्।

गोविन्दाय रमागोपीजनवल्लभ ङे शिरः॥ ११-७९॥

१५१ब) चतुर्दशस्वरोपेतः शुक्लस्तु स च मूर्द्धतः।

द्वाविंशत्यक्षरो मन्त्रो वागीशत्व प्रदायकः॥ ११-८०॥

तदूर्ध्वतः स्वाहानन्तरमित्यर्थः॥

केचित् तु तदूर्ध्वतस्तेषां वर्णानामुपरि प्रथमत इत्याहुः।

मन्त्रो यथा॥

ऐँ क्लीँ कृष्णाय ह्रीँ गोविन्दाय श्रीगोपीजनवल्लभाय स्वाहा सौः।

इति मन्त्रचतुर्दशास्वरः औकारः शुक्लः सकारः।

अस्य मन्त्रस्य नारद [नार] ऋषिः गायत्रीच्छन्दः श्रीकृष्णा देवता क्लीवीजं स्वाहाशक्तिः कृष्ण प्रकृतिदूर्गाधिष्ठा तृदेवता विद्याद्यभीष्टौ विनियोगः॥

धुन्यत् सर्वं मंगमन्त्रध्याने विहाय विंशत्यर्णवद्विधेयम्॥

अङ्गमन्त्राम्।

क्लीँ कृष्णाय हृदयाय (१)॥

गोविन्दाय शिरसे स्वाहा।

गोपीजन नशिखायै वौषट्।

वल्लभाय कवचाय हूम्।

स्वाहा अस्त्राय फट्।

ध्यानम्॥

वामार्ध्वहस्ते इत्यादि॥

चतुर्लक्षं जपेन् मन्त्रमिमं मन्त्रीसुसंयुतः।

पलाशपुष्पैः सुचजैश्चत्वारिंशत् सहस्रकम्॥ ११-८१॥

हूहूयात् कर्मणानेन मनुः सिद्धा भवेद् ध्रुवम्।

इति श्री विष्णुमन्त्रः॥

श्रीकृष्ण जयकृष्ण जय जय कृष्णाति भभद्रम्॥

श्रीशिवाय नम।

अथ श्रीशिवमन्त्रः।

ॐ नमः शिवाय।

सातः सत्यान्तसंयुक्ता विन्दुं भूषितमस्तकः॥ ११-८२॥

प्रासाहाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिद्।

सान्ताहकारः सत्यान्त औकारः तद्युक्तः विन्दूरनुस्वारः॥

तद्युक्त इत् मन्त्रो भवति॥ हौँ॥

अस्य पूजाविधिं वक्ष्ये सर्वकार्यार्थ सिद्धिदाम्॥ ११-८३॥

तद्यथा॥

ब्राह्मे मुहुर्त्ते चात्थ स्वशिरसि गुरुं ध्यायेत्।

प्रातः शिरसि शुक्ले कृ द्विनेत्रं द्विभुजं गुरुम्॥ ११-८४॥

वराभयकरं शान्तं स्मरेत् तन्नामपूर्वकम्।

इति ध्यात्वा मानसोपचारैराराध्य च सस्कुर्यात् अनेनषु ज्ञानतिमिरान्धस्यति ततः स्वे हृत्यत्मानं तद्रूपं विभाव्यावश्यकार्थं वहिर्गच्छेत्॥

इति प्रातः कृत्यम्॥

ततो मध्याह्नकाले स्नानार्थं नद्यादौ गत्वा यथा विधिस्नात्वा मन्त्रस्नानं कुर्यात्॥

१५२अ) यथा॥

आदौ प्राणायामं कृत्वा कलाङ्गन्यासं कृत्वा जले पंचकोणचक्रं विलिख्य अंकुशमुद्रया सूर्यमण्डलात्॥

गंगे च यमुने चैवेत्यनेनतीर्थमावाह्य मूलमन्त्रमष्टधा जप्त्वा

शिवरूपं विभाव्य कुंभमुद्रया स्वशिरसि सप्तवारं जलांजलिं दद्यात्

॥

ततो वारत्रयं निमष्ठ्योत्थायाचम्य पूनर्निमज्ज्यतर्पणं च कृत्वा जलादुत्थाय धौते वाससपरिधायाचम्यमूलमंसुध्नि त्रिवारं जलं दत्वा सदाशिव उर्वारामीति त्रिः सन्तर्प्यगायत्रीं जप्त्वा सूर्यार्घं दत्वा शिवगायत्रीं यथाशक्ति जपेत्॥

यायत्री यथा॥

ॐ सदाशिवाय विद्महे त्र्यंवकाय धीमहि तन्नः शिवः प्रचोदयात्॥

इति गायत्री जप्त्वा ताम्रपात्रे जलं गृहीत्वा रक्तपुष्पं च दत्वा हस्ताभ्यां गृहीत्वा सूर्याय शिवतेजसे प्रकाशशसिहितायैषोघो नमः॥

इत्यर्घन्दत्वा नमस्कृत्य वा घ्रा? गच्छेत्॥

ततः पूजागृहद्वारे गत्वा हस्तपादौ च प्रक्षाल्य द्वारदेवताभ्यो नमः।

इति द्वारदेवतां संपूज्य गृहात्यन्तरे प्रविश्य अपसर्पं तु ये भूता इति

पठित्वाक्षतान्विकिरेत्।

आसनयोग्य मेरुपृष्ठऋषिः सुतलं च्छन्दः कूर्मो देवता आसनयोगे विनियोगः॥

पृथ्वि त्वया धृता लोक इति पठित्वा॥

आधारशक्ति कमलासनाय नम इत्यासनं संसृज्य आसने उपविश्य।

वामे गुरुभ्यो नमः।

दक्षिणे गणपतय नमः।

मध्ये सदाशिवाय नमः।

ततो स्त्राय फट्।

इति गन्धपुष्पाभ्यां करौ सम्माज्र्य तालत्रयं दत्वा दिग्वन्धनं कुर्यात् ॥

ततो भूतशुद्धिं कुर्यात्।

सोहमिति मन्त्रेण जीवान्मानं प्रदीपकलिकाकार हृदयात सिरसि सहस्त्रदलकमले नियोज्ययमिति वायुवीजेन शरीरं शुष्कं विचिन्त्य रमिति वह्निवीजेन शरीरं दग्ध्वायमिति वायुवीजेन भस्म प्रोन्सार्य ठमिति चन्द्रवीजेनामृतवृष्टिं कृत्वा तया शरीरमुत्पाद्य लमिति पृथिवी वीजेन दृढीकृत्य तद्रूपमात्मानं चिन्तयेत्।

१५२ब) ततो जीवात्मकं हृदि समानयेत्॥

अथ मातृकान्यासः॥

ब्रह्मा-ऋषिः गायत्रीच्छन्दः सरस्वती देवता मातृका न्यासे विनियोगः॥

अँ नमो ललाटे।

आँ नमो मुखवृत्ते।

इं नमो दक्षिणचक्षुषि।

ईँ नमो वामचक्षुषि।

उँ नमो दक्षकर्णे।

ऊँ वामकर्णे।

ऋँ दक्षनासायाम्।

ॠँ नमो वामनासायाम्।

ऌँ नमो दक्षगण्डे।

ॡँ नमो वामगण्डे।

एँ ओष्ठे।

ऐँ अधरे।

ओँ नम ऊर्ध्वदन्ते।

औँ नम धधोदन्ते।

अं नम मूर्ध्नि।

अः नमो मुखे।

कँ नमो दक्षवाहुमूले।

खं नमो कूर्परे।

गं नमो मणिवन्धे।

घं नमो मंगुलिमूले।

ङं नमो अंगुल्यग्रे।

चं वामवाहुमूले।

च्छं नमः कूर्परे।

जं नमो मणिवन्धे।

झं नमो अंगुलिमूले।

ञं नम अंगुल्यग्रे।

टं नमो दक्षोरुमूले।

ठं नमो जानुनि।

डं नमो गुल्फे।

ढं नम अंगुलिमूले।

णं नम अंगुल्यग्रे।

तं नमो वामोरुमूले।

थं नमो जानुनि।

दं नमो गुल्फे।

धं अंगुलिमूले।

नं नमो अंगुल्यग्रे।

पं नमो दक्षपार्श्वे।

फं नमो वामपार्श्वे।

वं नमः पृष्ठे।

भं नमो नाभौ।

मं नमो उदरे।

यं नमस्त्वगात्मनि हृदये।

रं नमः असृ।गात्मनि दक्षवाहुमूले।

लं नमो मान्सात्मनि ककुदि।

वं नमः मेदात्मनि हृदयादि वामपादे।

लं नम जीवात्मनि हृदयादि उदरे।

क्षं नमः परमात्मनि हृदयादि मुखे।

ततो ध्यानम्॥

ॐ पंचाशल्लिपिभिर्विभक्तमुखदोः यन् मध्यवक्षस्थलं

भास्वन्मौलिनिवद्धचन्द्रशकलामापीनस्तुंगस्तनीम्।

मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्तांवुजैर्

विभ्राणां विषदप्रभां त्रिनयनां वाग्देवतामाश्रये॥ ११-८५॥

अथमूलमन्त्र-ऋष्यादिन्यासः।

एकाक्षरप्रासादमन्त्रस्य वामदेव ऋषिः पंक्तिच्छन्दः सदाशिवो देवता
मम पुरुषार्थ चतुष्टये विनियोगः।

शिरसि वामदेवाय ऋषये नमः।

१५३अ) मुखे पंक्तिः च्छंदसे नमः।

हृदि सदाशिव देवतायै नमः।

अथ प्राणायामः।

मूलमन्त्रेण षोडशवारेणपूरणम्।

चतुः षष्टिवारेण कुंभकम्।

द्वात्रिंशद्वारेण रेचनम्।

वामनासया पुरणं उभाभ्यां कुंभकं दक्षिणनासया रेचनम्॥

एवं वारत्रयम्॥

अथाङ्ग न्यासः॥

हाँ हृदयाय नमः।

हीँ शिरसे स्वाहा।

हूँ शिखायै वौषट्।

हैँ कवचाय हुम्।

सर्वगात्रे।

हौँ नेत्रत्रयाय वौषट्।

हः अस्त्राय फट्।

इत्योर्ध्वं तालत्रयं दत्वा च्छोटिकाभिर्दशभिर्दिशोवध्नीयात्॥

अथ करन्यासः॥

हौँ ईशानाय अंगुष्ठाभ्यां नमः अंगुष्टयोः।

हैँ तत्पुरुषाय तर्जनीभ्यां नमः।

हूं अघोराय मध्यमाभ्यां नमः।

हीँ वामदेवाय अनामिकाभ्यां नमः।

अनामिकयोः॥

हं सद्योजाताय कनिष्ठाभ्यां नमः।

हाँ ईशानाय ऊर्ध्ववक्त्राय नमः।

अंगुष्ठेन शिरसि।

ॐ हँ तत्पुरुषाय नमः।

तर्जन्या मुखे।

ॐ हुं अघोराय नमो मध्यहृदि।

ॐ हिँ वामदेवाय नमः अनामिकया गुह्ये।

ॐ हं सद्योजाताय नमः कनिष्ठकया पादे।

इति मूर्त्तिन्यासः।

ऐँ क्लीँ ब्लूँ स्त्रीँ सः सर्वज्ञाय हृदयाय नमः।

हृदि॥ एवम्॥

अमृततेजोलिनि ब्रह्मशिरसे नमः।

शिरसे स्वाहा।

एवम्॥

ज्वलितशिखि शिखाय अनादिवोधाय शिखायै वौषट्।

शिखायाम्।

एवं वज्रिणे वज्रहस्ताय।

स्वतन्त्राय नमः कवचाय हुम्।

सर्वगात्रे।

ॐ सौँ धौँ हौँ अलुप्तशक्तये नेत्रत्रयाय वौषट्।

नेत्र त्रय।

श्लाँ पशु हुं फट् अस्त्राय फट्।

ततोर्ध्वं तालत्रयं पूर्ववद् दिग्वन्धनं कुर्यात्।

अथ वज्रन्यासः।

ईशानः सर्वविद्यानां शशिन्यै नम ऊर्ध्ववक्त्रे।

इश्वरः सर्वभूतानां अंगदायै नमः पूर्ववक्त्रे।

ॐ ब्रह्माधिपतिर्ब्रह्मणोधिर्ब्राह्मेष्टदायै नमो दक्षवक्त्रे।

ॐ शिवोमेस्तु मरीच्यै नमः।

उत्तरवक्त्रे।

ॐ सदाशिवों शुमालिन्यैः।

पश्चिमवक्त्रे।

अथ चतुर्वक्त्रन्यासः।

ॐ तत्पुरुषाय विद्महे।

१५३ब) शान्त्यै नमः पूर्ववक्त्रे।

ॐ महादेवाय धीमहि।

विद्यायै पश्चिमवक्त्रे।

ॐ तन्नोरुद्रः प्रतिष्ठायै।

दक्षिणवक्त्रे।

ॐ प्रचोदयान् निवृत्त्यै नम उदङ्मुखे।

ॐ अघोरेभ्य उमायै नमो हृदि।

ॐ अथ घोरेभ्यो महायै ग्रीवायाम्।

ॐ घोरक्षमायै नमो दक्षांसे।

ॐ घोरतरेभ्यो निद्रायै वामांसे।

ॐ सर्वतः सर्वव्याध्यै नाभौ।

ॐ सर्वेभ्यो नृत्ये वे कुक्षौ।

ॐ नमस्ते क्षुधायै पृष्ठै।

ॐ रुद्ररूपेभ्यः भृषायै नमः वक्षसि।

ॐ वामदेवाय नमो रुजायै नमो गुह्ये।

ॐ ज्येष्ठाय दक्षायै नमो पृष्ठे।

ॐ रुद्राय नमो रत्यै नमो दक्षौरौ।

ॐ कालाय पाशिन्यै वामोरौ।

ॐ कलविकरणाय कामायै दक्षजानुनि।

ॐ संयमिन्यै वलिक्रियायै वामजानुनि।

ॐ वलविकरणाय वृध्यै दक्षजंघायाम्।

ॐ वलिस्थिरायै प्रमथनाय रात्र्यै नमो वामजंघायाम्।

ॐ सर्वभूतरमनाय भ्रामिन्यै नमो दक्षकट्याम्।

ॐ नमोन्मनाय मोहिन्यै नमो वामकट्याम्।

ॐ उन्मनाय जरायै वामपार्श्वे।

ॐ सद्योजातं प्रपद्यामि सिद्ध्यै नमो दक्षपादे।

ॐ सद्योजाताय वै नमो वृद्ध्यै वामपादे।

ॐ भवेद्यूत्यै नमो दक्षस्तने।

ॐ भावे लक्ष्म्यै नमो वामस्तने।

ॐ अनादिभवे मेधायै नमो नासायाम्।

ॐ भजस्व मां प्रजायै नमः। शिरसि।

ॐ भवप्रभायै नमो दक्षवाहुमूले।

ॐ उद्भवाय स्वधायै वामवाहुमूले।

अत्यष्टत्रिंशत्कला न्यास।

अष्टत्रिंशत्कलाः प्रोक्ताः पंचब्रह्मपदाधिकः।

पंचब्रह्मपदाधिक इति।

ऐँ क्लीँ ब्लूँ स्त्रीँ स इति।

पंचप्रणवाधिक इत्यर्थः॥

ततः पीठन्यासं कुर्यात्॥

तद्यथा॥

ॐ धर्मार्य नमो दक्षांसे।

ॐ ज्ञानाय वामांसे।

ॐ वैराग्याय वामोरौ।

ॐ अधर्माय वामपार्श्वे।

ॐ अवैराग्याय नाभौ।

ॐ अनैश्वर्याय दक्षपार्श्वे।

ॐ अनन्ताय नमः हृदि।

पद्माय नमः।

अँ सूर्यमण्डलाय द्वादशकलात्मने नमः।

ॐ सोममण्डलाय षोडशकलात्मने नमः।

ॐ मं वह्निमण्डलाय दशकलात्मने नमः।

१५४अ) ॐ सं सत्वाय नमः।

ॐ रं रजसे नमः।

ॐ तं तमसे नमः।

ॐ आं आत्मने नमः।

ॐ अँ अन्तरात्मने नमः।

ॐ पं परमात्मने नमः।

ॐ ह्रीँ ज्ञानात्मने नमः।

इति पीठनयासं कृत्वा हृदि दवं ध्यायेत्।

ॐ मुक्तापीतपयोधमौक्तिकजपा वर्णैर्मुखैः पंचभिस्-
त्र्यक्षैरंचितमीश्वं इन्द्रमुकुटं पूर्णेन्दुकोटिप्रभम्।

शूलं टंककृपाणवज्रदेहना नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिता कल्पोज्वलं चिन्तयेत्॥ ११-८६॥

इति ध्यात्वा मानसोपचारैराराध्य नमस्कृत्य वहिः पूजार्थमर्घ्यपत्रं स्थापयेत्।

यथा।

स्व वामे त्रिकोणमण्डलं कृत्वा तदुपरि त्रिपदि कामायोप्य।

मं वह्निमण्डलाय दशकलात्मने नम इति संपूज्य त्रिपदिकां तदुपरि पात्रं स्थाप्य।

अं सूर्यमण्डलाय द्वादशकलात्मने नम इति पात्रं संपूज्य मूलमन्त्रं जपन शुद्धजलमापूर्य।

डं सोममण्डलाय पूर्ववदिति संपूज्य मूलमन्त्रमष्टधा जप्त्वा षडंगं विन्मस्य धेनुमुद्रयामृतीकृत्य अस्त्राय फट्।

इति तालत्रयण च्छोटिकाभिर्दशभिर्ग्वंधनं कृत्वा तदर्घं देवतात्मकं भिव्यते नोदकनान्मानं पूजोपकरणं चात्पुक्षेत्।

ततो मूलमन्त्रेण मस्तकादि सर्वाङ्गे पुष्पांजलिं दद्यात्।

ततो यथोक्तपीठे पंचकोष्ठदलपद्मभूवि व सहितं यन्त्रं निर्माय पुरतः स्थापयित्वा पूजामारभेत्।

अष्टदलपद्मे॥

अँ आधारशक्तये नमः। एव।

प्रकृत्यै। कुर्माय।

अनन्ताय। पृथिव्यै। रत्नद्वीपाय नमः।

मणिमण्डपाय।

कल्पवृक्षाय।

रत्नवेदिकायै।

धर्माय।

ज्ञानाय।

वैराग्याय नमः।

ऐश्वर्याय नमः।

अग्न्यादिकोणचतुष्टये चतुर्दिक्षु।

अधर्माय नमः।

अज्ञानाय नमः।

अवैराग्याय नमः।

अनैश्वर्याय नमः।

पुनर्मध्ये। पद्माय।

आनन्दकन्दाय नमः।

सं विज्ञानाय नमः।

सर्वतत् सात्मकपद्माय नमः।

प्रकृतिमयपत्रेभ्यो नमः।

विकारमय केसरेभ्यो नमः।

अं सूर्यमण्डलाय पूर्ववत्।

१५५ब्) ॐ सोमण्डलायेति च।

मँ वह्निमण्डलाय तद्वत्।

सं सत्वाय।

रं रसे।

तँ तमसे।

अँ आत्मने।

अं अन्तरात्मने।

पं परमात्मने।

ह्रीँ ज्ञानात्मने नमः। तत।

मुक्ता पीतेभ्यादिना ध्यात्वा वहन्नासापुटे कुसुमांजला वानीय यथोक्तपीठे संस्थाप्य प्राणप्रतिष्ठां कृत्वा वाह्यपाद्यादिभिः पूजयेत्॥

आग्नेय्याम्।

मृत्यवे नमः।

ऐशान्याम्।

ईशानाय।

पूर्वे।

तत्पुरुषाय नमः।

याम्ये।

अघोराय।

सौम्ये।

वामदेवाय।

पश्चिमकोणे।

सद्योजाताय।

अं निवृत्त्यै नमः।

आं सुप्रतिष्ठाय नमः।

इँ विद्यायै नमः।

ईं ईशान्यै नमः।

उँ इन्द्रायै नमः।

ऊँ देविकायै नमः।

ऋ रेचिकायै नमः।

ॠँ मोचिकायै नमः।

ऌँ परायै नमः।

लृँ सुक्ष्मायै नमः।

एँ सुक्ष्मामृतायै नमः।

ऐँ ज्ञानायै नमः।

ओँ अमृतायै नमः।

औँ आप्यायन्यै नमः।

अं व्यापिन्यै नमः।

अः व्योमरूपायै नमः।

पुनः॥

अं अनन्ताय नमः।

आँ पुषायै नमः।

इँ सूक्ष्माय नमः।

ईं त्रिमुर्त्तये नमः।

उँ अमरेश्वराय नमः।

ऊँ अर्घेशाय नमः।

ऋँ भारभूतेशाय नमः।

ॠँ अतिथीशाय नमः।

ऌँ स्थाणुकाय नमः।

ॡँ हराय नमः।

एँ किण्ठीशाय नमः।

ऐँ भौतिकाया नमः।

ओँ सद्योजाताय नमः।

ओँ अनुग्रहेश्वराय नमः।

अं अक्रुराय नमः।

अः महासेनाय नमः।

परितः।

उमायै नमः।

कात्यायै नमः।

गौर्यै नमः।

काल्यै नमः।

हेमवत्यै नमः।

ईश्वरायै नमः।

शिवायै नमः।

शर्वाण्यै नमः।

सर्वमङ्गलायै नमः।

अपूर्णायै नमः।

पार्वत्यै नमः।

दुर्गायै नमः।

मृडान्यै नमः।

चण्डिकायै नमः।

अंविकायै नमः।

चतुरश्रे इन्द्रादीन्।

तद्बाह्ये वज्रादीन् यथाशक्ति जप्त्वा गुह्यातिगुह्यत्यादिना जपं समर्प्यस्तुत्वा नत्वा संहारमुद्रया निर्माल्यं हृदिसमानीय यथासुखं विहरेत्।

इति शिवपूजापद्धतिः समाप्ताः।

अथ शिवकवचम्॥

ॐ नमः शिवाय॥

ॐ नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम्।

१५५अ) वक्ष्य शिवमयं वर्त्म सर्वरक्षाकरं नृणाम् (१)॥ ११-८७॥

शुचौदेशे समासीनो यथावत् कल्पितासनः।

जितेन्द्रियो जितप्राणश्चिन्तयेच्छिमप्ययम् (२)॥ ११-८८॥

हृत्पुडरीकान्तरसन्निष्ठं स्वतेजसा व्याप्त नभो वकाशम्।

जितेन्द्रियं सुक्ष्ममनन्तमाद्यं ध्यायेत् परानन्दमयं महेशम् (३)॥ ११-
८९॥

ध्यानावधुताखिलकर्मवन्धश्चिरं चिदानन्दनिमग्नचेताः।

षडक्षरन्यासससमाहितान् माशै वेन कुर्यात् कवचेन रक्षाम् (४)॥ ११-९०॥

मां पातु देवोखिलदेवतात्मा संसारकुपे पतितं गभीरे।

यन्नामदिव्यं व न मन्त्रमूलं धुनो तु मे सर्वमद्यं हृदिस्थम् (५)॥ ११-
९१॥

सर्वत्र मां रक्षतु विश्वमूर्त्तिर्ज्योतिर्मयानन्दमयश्चिदात्मा।

अणोरणीयानुरुशक्तिरेकः स ईश्वरः पातु भवादशेषात् (६)॥ ११-९२॥

यो भू स्वरूपेण विभर्त्तिविश्वं पायात् सभूमौ गिरिशोष्टमूर्त्तिः।

यो पां स्वरूपेण नृणां करोति संजीवनं सोव तु मांजलेभ्यः (७)॥ ११-
९३॥

कल्पावसाने भुवनानिदग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः।

सकालरुद्रो व तु मादवाग्नेर्वात्वादिभीतेरखिलच्च पापात् (८)॥ ११-९४॥

प्रदीप्तविद्युत् कनकावभासः सदावराभीति कुठारहस्तः।

चतुर्मुखस्तत् पुरुषास्त्रिनेत्रः पाच्यां स्थितो रक्षतु मामजम्रम् (९)॥ ११-९५॥

कुठारवैदाङ्कुशपाशशूलं ढक्काक्षमालोग्निगणान्दधानः।

चतुर्मुखो नीलरुचिस्त्रिनेत्रः पायादघोरोदिशिदक्षिणस्याम् (१०)॥ ११-९६॥

कुन्देन्दुशंखस्फटिकावदात वेदाक्षमाला वलयाभयाङ्कः।

दिश्याश्चतूर्वक्राडरुप्रभावः सद्योजातो वतु मां प्रतीच्याम् (११)॥ ११-९७

॥

वराक्षमाला भयढक्कहस्तः सरोजकिंजल्कसमानवर्णः।

त्रिलोचनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशिवासुदेवः (१२)॥ ११-९८॥

वेदाभयेष्टोङ्कुशपाशशार्ङ्गं कपालढक्काक्षित्रिशूलपाणिः।

सितद्युतिः पंचमुखावतात्मां ईशानमुर्धा परमप्रकाशः (१३)॥ ११-९९
॥

सूर्या नम व्यान् मम चन्द्रमौलि भालं ममा व्यान् मम भालमेत्रः।

१५५ब्) नेत्रममाव्याद्भगनेत्रहारी नासां सदारक्षतु विश्वनाथः (१४)॥
११-१००॥

पायाच्छ्रुतिं मे श्रुति गीतकीर्त्तिः कपोलमव्यात् सततं कपाली।

वक्त्रं सदारक्षतु पंचवक्त्रो जिह्वां सदारक्षतु धाचेदजिह्वा (१५)॥ ११-
१०१॥

कण्ठं गिरीशो व तु नीलकण्ठः पाणिद्वयं पातु पिनाकपाणिः।

दोन्मूलमव्यान् मम धर्मवाहुर्वक्षःस्थलं दक्षमखान्तकोव्याम् (१६)
॥ ११-१०२॥

ममोदरं पातु गिरीन्द्रधन्वा मध्यं ममाव्यान् मदनान्तकारी।

हेरंभता मम पातु नाभिं पायात् कटिं धूर्जटिरीश्वरोसौ (१७)॥ ११-१०३॥

ऊरुद्वयं पातु कुवेरमित्त्रो जानुद्वयं मे जगदीश्वरोव्यात्।

जंघायुगं पुंगवकेतुरव्यात्पादौ ममाव्यान् मुरवंद्यपादः (१८)॥
११-१०४॥

महेश्वरः पातु दिनाद्य यामे मा मध्ययामे व तु वामदेवः।

त्रयंवकः पातु तृतीययामे वृषध्वजः पातु दिनान्तयामे (१९)॥ ११-१०५॥

पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीसे।

गौरीपतिः पातु निशावसाने मृत्युंजयो रक्षतु मां प्रभाते (२०)॥ ११-१०६॥

गृहस्थितं रक्षतु शंकरो मां स्थाणुः सदापातु वहिः स्थितं माम्।

तदन्तरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समन्तात् (२१)॥ ११-१०७॥

तिठन्तमव्याद् भुवनैकनाथः पायाद्व्रजन्तं प्रमथाधिनाथः।

वेदान्तवेद्यो व तु मा निषण्णं ममाव्ययः पातु शिवः शयानम् (२२)॥ ११-१०८॥

मार्गेषु मां रक्षतु नीलरूद्रैः शैलादिदुर्गेषु परत्रयारिः।

आरण्यवासादि महत् प्रवासे पायान् मृगव्याध उदारशक्ति (२३)॥ ११-१०९॥

कल्पान्तकालोग्रकटप्रकोप स्फुट्टाट्टहासो चलिताण्डकाशः।

घोरारिसेनार्णवहुर्निवासो महाभयाद् रक्षतु वीरभद्रः (२४)॥ ११-११०॥

पत्त्यश्च मातं गघटावरूथिनां सहस्त्रलाक्षायतकोटिभीषणम्।

अक्षौहिणीनां शतमाततायिनां च्छिद्यान् मृडोघोरकुठारधारय (२५)॥
११-१११॥

निहन्तु दस्युत् प्रलयानलार्चि ज्वलर्त्त्रिशूलं त्रिपुरान्तकस्य।

शार्दुलसिंहक्षा मृगादिसिंहान् सण्डासयेद् विश्वघनः पिनाकः (२६)॥ ११-
११२॥

दुःस्वप्न दुःशकुतदुर्गमदौर्मनस्य दुर्भिक्षदुर्व्यसन
दुःसहदुर्यशांसि।

१५६अ) उत्पातशापविषभीति मसद्गुहार्त्तिं व्याधींश्च नाशयतु मे
जगतामधीशः (२७)॥ ११-११३॥

ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सकलतत्त्वविदूराय
सकललोकैककर्त्रे सकललोकैकहर्त्रे सकलनिगमगुह्याय सकललोकैक
वरप्रदायने॥

सकलदुरितार्त्तिभंजनाय सकलजगदभयंकराय शशाङ्कशेराय
शाश्वतनिजावासाय निरामयाय निरातंकाय निष्कलाय निरावासाय
निराहाराय निष्प्रपंचाय निर्द्वंद्वाय निःसंगाय निर्गुणाय
निरुपविभवाय निराधाराय नित्यशुद्धपरिपूर्णचिदानन्दा नन्त
द्वयपरमशान्तप्रकाशाय तेजोरूपाय तेजोमयाय जय जय महारुद्र
भवावतार महाभैरव कालभैरव कल्पान्तभैरव कालभैरव
कल्पान्तभैरव कपालभैरव कपालमालाधरखद्वाङ्ग
खङ्गचर्मपाशाङ्कुशडमरुकशूलचापवाणासि गदाशक्तिभिण्डिपालतो
मरमुसलमुद्गर प्रासपरिघभुसुंडिशतघ्निचक्रायुध
भीषणकरसहस्रमुख दंष्ट्राकरालविकटाट्टहास विस्फाटित
ब्रह्माण्डमण्डल नागेन्द्रमण्डल मृत्युंजयान्तकान्तकत्रि पुरान्तक
कामान्तक विरूपाक्ष विश्वविश्वेश्वर वृषभवाहन विश्वभूषण
विश्वरूप षडूषण विश्वतोमुख सर्वतो रक्ष मां ज्वल ज्वल
महामृत्युमपमृत्युभयं नाशय॥ २॥ रौरान्नाशय २। शत्रुनुच्चाटय २।
शूलेन विदारय २। कुठारेण भिंदि २। ख्वांगेन विपोथय २। मुशलेन
निष्पेशय २। रक्षांसि भीतय २। भूतानि विद्रावय २।
कुष्माण्डवेतालमारीगण ब्रह्मराक्षसगणान् सन्त्रासय २। ममाभयं
कुरु २। विश्वस्तमा श्वासय २। दुःखातुरं मामानन्दय २।
क्षुडुभृडार्त्ति निवारय २। नरकभयान् मामुद्धर २। शिवकवचेन

मामाच्छादय २। ॐ सदाशिवाय नमो नमस्ते॥

ऋषभ उवाच

इत्येवं कवचं शैवं परमं व्याहृतं मया।

सर्ववाधाप्रशमनं रहस्यं सर्वदेहिनाम्॥ ११-११४॥

१५६ब्) यस्मादधारयेन् मर्त्यः शैवं कवचमुत्तमम्।

नतस्य जायतङ्कापि भयं शंभोरनुग्रहात्॥ ११-११५॥

क्षीणायुः प्राप्तमृत्युर्वा महारोग हतोपि वा।

देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः॥ ११-११६॥

सद्यः सुखमवाप्नोति दीर्घमायुश्चविन्दति।

सर्वदारिद्र्यशमनं सर्वमङ्गल्यवर्धनम्॥ ११-११७॥

योधत्ते कवचं शैवं सदेवैरपि पूज्यते।

महापातकसंघातैर्मुच्यते चोपपातकैः॥ ११-११८॥

देहान्ते मुक्तिमाप्नोति शिववर्मानुभावतः।

इति ऋषभ प्रोक्तं शिवकवचं समाप्तम्॥

अथ शिवसहस्रनामम्॥

ॐ नमः शिवाय।

ऋषय ऊचुः

कथं देवेन वै सुत देवदेवान् महेश्वरान्॥ ११-११९॥

चक्रं सुदर्शनं लब्धं वक्तुमर्हसि विष्णुना।

सुत उवाच

देवानामसुरेन्द्राणामभवच्च सुदारुणः॥ ११-१२०॥

सर्वेषामेव भूतानां विनाशायरणोमहान्।

ते देवा शक्तिमुसुलैः सायकैर्नतपर्वभिः॥ ११-१२१॥

प्रभिद्यमानाः कुन्तश्च दुद्रुवुर्भयविह्वलाः।

पराजितास्ततो देवा देव देवेश्वरं हरिम्॥ ११-१२२॥

प्रणेमुस्ते सुरेशानं शोकसं विघ्नमानसः।

गता यत्रासीद् भगवान् देव देवेश्वरो हरिः॥ ११-१२३॥

प्रणिपत्य स्थितान्देवान् इदं वचनमब्रवीत्।

हरिरुवाच

वत्माः किमिति वै देवाश्च्युतालंकारविभ्रमाः॥ ११-१२४॥

समागताः सुसन्तप्ता वक्तुमर्हथसुव्रताः।

तस्य तद् वचनं श्रुत्वा तथा भूत्वा सुरोत्तमाः॥ ११-१२५॥

प्रणम्याहुर्यथा वृत्तं देव देवाय विष्णवे।

भगवन् देव देवेश शेषशायिञ्जनार्दन॥ ११-१२६॥

दानवैः पीडिताः सर्वे स्वयं शरणमागताः।

त्वमेव देव देवेश गतिर्नः पुरुषोत्तम॥ ११-१२७॥

त्वमेव परमात्मासित्वं पिता जगतामपि।

त्वमेह हन्ता भर्त्ता च भोक्ता दाता जनार्दनः॥ ११-१२८॥

हन्तुमर्हसि तस्मात्वं दानवान् दानवार्दन।

दैत्याश्च वैष्णवैर्ब्राह्मैरौद्रैर्याम्यैः सुदारुणैः॥ ११-१२९॥

कौवेरैश्चैव सौम्यैश्च नैरृतैर्वारुणैर्दृढैः।

वायव्यैश्च तथा यक्ष्यैरैशानैर्वार्षिकैः शुभैः॥ ११-१३०॥

औरगेन्द्रैस्तथा भीमैः कंपनैर्जृभनैर्दृढेः।

१५७अ) अवध्या वरलाभे तु सर्ववारिजलोचनः॥ ११-१३१॥

सूर्यमण्डलसंभूतं त्वदीयं चक्रमुत्तमम्।

कुण्ठितं तद्दधीचेन च्यावनेन जगद्गुरोः॥ ११-१३२॥

दण्डं शाङ्गतवास्त्रं च सर्वं निष्फलतां गतम्।

पुराजालन्धरं हन्तुं निर्मितं त्रिपुरारिण॥ ११-१३३॥

रथाङ्गसुशितं घोरं ते नतान्हन्तुर्महसि।

तस्मात् तेन निहन्तव्या चान्यैः शस्त्रशतैरपि॥ ११-१३४॥

ततो निशम्यतेषां वै वचनं वारिजेक्षणः।

वचस्पति मुखानाह हरिश्चक्रधरः स्वयम्॥ ११-१३५॥

विष्णुरुवाच

भोर्भो देव महादेव सर्वेशानं सनातनम्।

संप्राप्य सांप्रतं सर्वं करिष्यामि दिवौकसाम्॥ ११-१३६॥

देवा जालन्धरं हन्तुं निर्मितं त्रिपुरारिणा।

रथाङ्गनिशितं लब्धा तेन हर्म्यं सुराधिपान्॥ ११-१३७॥

सर्वान्वंधुमुखान्दैत्या नष्टोषष्टिशतासुरान्।

सवांधनक्षणादेव दुष्टा संसादयाम्यहम्॥ ११-१३८॥

सुत उवाच

एवमुक्त्वा सुरश्रेष्ठान् पूजयामासशङ्करम्।

लिङ्गं स्थाप्य यथा न्यायं हिमवच्छिखरे शुभे॥ ११-१३९॥

मेरुपर्वतसंकाशं निर्मितं विश्वकर्मणा।

त्वरिताख्येन रुद्रेण स्थापयित्वा जनार्द्दनः॥ ११-१४०॥

संपूज्य चैव गन्धाद्यैर्ज्वालाकारमनुत्तमम्।

तुष्टा व च तदा रुद्रं संपूज्याग्नौ प्रणम्य च॥ ११-१४१॥

जुहा व च महेशानं प्रणवाद्यं नमोन्तगम्।

देवं नाम्नां सहस्रेण भावाद् येन यथाक्रमम्॥ ११-१४२॥

प्रतिनाम च पद्मेन पूजयामासशङ्करम्।

अग्नौ च नामभिर्देवं भावद्यैः समिदादिभिः॥ ११-१४३॥

स्वाहान्तविधिवद् धूता प्रत्येकमयुतं विभुः।

तुष्टा व च पुनः शम्भुं भवाद्यैर्भवमीश्वरम्॥ ११-१४४॥

अस्य श्रीशिवनामसहस्रस्तोत्रं मन्त्रस्य विष्णुः ऋषिः। भगवान् शिवोदेवता
[-दे*ता]। अनुष्टुपच्छन्दः। यथोक्तफलप्राप्त्यर्थं श्रीशिवप्रीत्यर्थं
पाठे होमे वाति विनियोगः।

भवः शिवोहरोरुद्रः पुष्करः पद्मरोचनः।

अग्रकोण्यः सदाचारः शर्वः शंभुर्महेश्वरः॥ ११-१४५॥

ईश्वरः स्थाणुरीशानः सहस्राक्षः सहस्रपात्।

वरीयान् वरदो वन्द्यः शङ्करः परमेश्वरः॥ ११-१४६॥

१५७ब्) गङ्गाधरः शूलधरः परार्थैकप्रयोजनः।

सर्वज्ञः सर्वदेवश्च गिरिधन्वीजटाधरः॥ ११-१४७॥

चन्द्रपीडश्चन्द्रमौलिर्विद्वान्विद्या महेश्वरः।

वेदान्तसारसन्दोहः कपाली नीललोहितः॥ ११-१४८॥

ध्यानभव्यो परिच्छेद्यो गौरीभर्त्ता गणेश्वरः।

अष्टमूर्त्ति विश्वमूर्त्तिः त्रिवर्गस्वर्गसाधनः॥ ११-१४९॥

ज्ञानगम्यो दृढप्रज्ञो देव देवस्त्रिलोचनः।

वामदेवो महादेवः पटुः परिवृटोवृढः॥ ११-१५०॥

विश्वरूपो विरूपाक्षो वागीशस्तुतिमुत्तरः।

सर्वप्रमाणसंवादी वृषाङ्को वृषवाहनः॥ ११-१५१॥

ईशः पिनाकीखट्वाङ्गी चित्त्रवेशश्चिरन्तनः।

मनोहरो महात्यागी स्थिरो व्रह्माङ्गभूर्जटि॥ ११-१५२॥

कालकालः कृत्तिवासः सुभगः प्रणवात्मकः।

नागरूडः सुचक्षुष्या दुर्वासः स्मरशासनः॥ ११-१५३॥

दृढायुधः स्कन्दगुरुः परमेष्ठीपरायणः।

अनादिमध्यनिधनो गिरीशो गिरिवान्धवः॥ ११-१५४॥

कुवेरवन्धुः श्रीकण्ठा लोकवर्णोत्तमोत्तमः।

सामान्य देवः कोदण्डी नीलकण्ठः परश्वधि॥ ११-१५५॥

विशालाक्षो मृगेन्द्रोस्यः सुरथः सूर्यतापनः।

धर्मधाम्नः क्षमाक्षेत्रो भगवान् भग हृत् तथा॥ ११-१५६॥

उग्रः पशुपतिस्ताक्ष्यैः प्रियं रक्तः प्रियंवदः।

दाता दयाकरो दक्षः कपर्द्दिः काममर्दनः॥ ११-१५७॥

लोककर्त्ता भूतपतिर्महाकर्ममहौषधिः।

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः॥ ११-१५८॥

नीतिः सुनीतिः शुद्धात्मा सोमः सोमरतः सुखी।

सोमपो मृतपः सौम्यो महारीतिर्महाद्युतिः॥ ११-१५९॥

अजातशत्रुरालोक्य संभाव्यो हव्यवाहनः।

लोककारो वेदकारः सुत्रकारः सनातनः॥ ११-१६०॥

महर्षिः कपिलाचार्यो विश्वदीप्तिविरोचनः।

पिनाकपाणिर्भूदेवः स्वस्तिकृत् स्वस्तिदायकः॥ ११-१६१॥

धात्री धामकरः सर्वः सर्वज्ञः सर्वगोचरः।

ब्रह्मसृग् विश्वसृक् सर्गः कर्णिकार प्रियशुचिः॥ ११-१६२॥

शाखो विशाखो गोशाखः शिवानेकक्रतुः समः।

गंगाप्लवोदको भव्यः पुष्कलः स्थपति स्थिरम्॥ ११-१६३॥

१५८अ) विजितात्मा विधेयात्मा भूतभावनसारथिः।

भस्मप्रियो भस्मशायी कामीकान्तः कृतागमः॥ ११-१६४॥

समायुक्तो निवृत्तात्मा धर्मयुक्तः सदाशिवः।

चतुर्मुखश्चतुर्वाहुः सर्वावासो दुरासदा॥ ११-१६५॥

दुर्गमो दुर्लभो दुर्गः सर्वायुधविशारदः।

अध्यात्मयोगनिलयः सुतन्तुस्तन्तुवर्धनः॥ ११-१६६॥

शुभाङ्गायोगसारंगो जगदीशो जनार्दनः।

भस्मशुद्धिकरो मेरुरोजस्वी शुद्धविग्रहः॥ ११-१६७॥

हिरण्यरेतस्तरणिर्मरीचिस्तु हिमालयः।

महाह्लदो महागर्भः सिद्धवृन्दारवन्दिता॥ ११-१६८॥

व्याघ्रचर्मधरो व्याली महाभूत महानिधिः।

अमृतेशोमृतवपुर्दक्ष यज्ञभंजनः॥ ११-१६९॥

पंचविंशतितत्त्वज्ञः परिज्ञातपरावरः।

सुलभः सुव्रतः शुरा वाङ्मयैकनिधिर्निधिः॥ ११-१७०॥

वर्णाश्रमगुरुवर्णी शत्रुजिच्छत्रुतापनः।

अत्मवित् कृपणाक्षामो ज्ञानवान वलावलः॥ ११-१७१॥

प्रमाणभूतो दुर्ज्ञेयः सुपर्णा वायुवाहनः।

धनुर्धरो धनुर्वेदगुणराशि तु शाकरः॥ ११-१७२॥

अनन्तदृष्टिरानन्द् दण्डोदमयितादमः।

अभिवाद्य महाचार्य विश्वकर्मविशारदः॥ ११-१७३॥

वीतरागविनीतात्मा तपस्वी भूतवाहनः।

उन्मत्तवेशः प्रच्छन्नोजितकामो जनप्रियः॥ ११-१७४॥

कल्पाणप्रकृतिः कल्पः सर्वलोकप्रजापतिः।

तपस्वी तारकोधीमान् प्रधानः प्रभवोव्ययः॥ ११-१७५॥

लोकपालान्तर्हितात्मः कल्पादिकमलेक्षणः।

वेदशास्त्रार्थतत्त्वज्ञो नियमो नियमाश्रयः॥ ११-१७६॥

राहुः सूर्यः शनिः केतुर्विरामो विद्रुमच्छविः।

भक्तिगम्यः परंब्रह्मा मृगपाणार्पणोनयः॥ ११-१७७॥

अद्रिरद्रिशयः शान्तः परमात्मा जगत्प्रभुः।

सर्वकर्मावलंवश्च मंगल्या मंगलावृतः॥ ११-१७८॥

महातपो दीर्घतपःस्थविष्टःस्थविरोध्रुवः।

अहः संवत्सरोप्याप्तिः प्रमाणः परमस्तपः॥ ११-१७९॥

संवत्सरकरो मन्त्रः प्रत्ययः सर्वदर्शनः।

अजः सर्वेश्वरः सिद्धो महारेतो महावलः॥ ११-१८०॥

योगियोग्या महादेवः सिद्धः सर्वादिरग्निदा।

वसुर्वसुमनः सत्यः सर्वपापहरामृतः॥ ११-१८१॥

१५८ब) अमृतः शाश्वतः शान्तो वीणाहस्तः प्रतापवान्।

कमण्डलुधरो धन्वी वेदाङ्गवेदविन्मुनिः॥ ११-१८२॥

त्राजिष्णुर्भोजनो भोक्ता लोकनेत्रा धुरन्धरः।

अन्तीद्रिया महामाया सर्वावस्थश्चतुष्पथः॥ ११-१८३॥

कालयोगी महानादो महोत्साहो महावलः।

महावुद्धिर्महावीर्यो भूतचारीपुरन्दरः॥ ११-१८४॥

निशाचरः प्रेतचारि महाशक्तिर्महाद्युतिः।

दैत्यप्रियो नृत्तनित्यः प्रकाशान् मा प्रतापनः॥ ११-१८५॥

वुद्धः षष्टाक्षरामन्त्रः सन्मात्रा सारसंभवः।

युगादिकृद् युगावर्त्तो गंभीरो वृषवाहनः॥ ११-१८६॥

इष्टो विशिष्टः शिष्टेष्ठः शरभः शलभाधनुः।

अपां निधिरधिष्ठानो विजयाजयकालवित्॥ ११-१८७॥

प्रतिष्ठितः प्रमाणज्ञो हिरण्यकवचो हरिः।

विमोचिता सुरगणो विद्यो शोविवुधाश्रयः॥ ११-१८८॥

वालरूपो वलोन्माथी विवर्त्तगहनो गुहः।

करणः कारणात् कर्ता सर्ववबंधुविमोचनः॥ ११-१८९॥

व्यवसायो व्यवस्थानः स्थानदो जगदाजयः।

दुंदुभो ललितो विश्वो भवात्मात्मनिसंस्थितः॥ ११-१९०॥

वीरेश्वरो वीरभद्रो वीरासन विधिविराट्।

वीरचूडामणिर्वेत्ता तीव्रानन्दो नदीधरः॥ ११-१९१॥

संज्ञाधरः त्रिशूलाङ्कः शिपिविष्टः शिवाश्रयः।

वालखिल्या महाचर्यः तिग्मांशुर्वलधिः खगः॥ ११-१९२॥

अभिरामः सुरण्या सुब्रह्मण्यश्च सुधामराट्।

मद्यवान् कौशिको गोमान् विरामो सर्वशासनः॥ ११-१९३॥

ललाटाक्षः पिंगवेहः सर्वसंसारचक्रभृत्।

अमोघदण्डमध्यस्थो हिरण्यब्रह्मवर्च्चसी॥ ११-१९४॥

परमार्यः परपदः शंवरो व्याघ्रकोपनः।

रुचिवरभर्च्चिवन्द्यो वाचस्पतिरहः पनिः॥ ११-१९५॥

रविर्व्विरोचनः स्कन्दः शास्त्रच्चैवस्वतो यमः।

मुक्तिरुन्नतकीर्त्तिश्च शान्तरागः पुरंजयः॥ ११-१९६॥

कैलासपति काव्यारिः सवितारविलोचनः।

विद्वत्तमो वीतभया विश्वहर्त्ता निवारितः॥ ११-१९७॥

नित्यं नियतकल्याणं (ह्) पुण्यश्रवणकीर्त्तनः।

दुरासदो विश्वसहो ध्येयो दुःस्वप्ननाशनः॥ ११-१९८॥

उत्तारको दुष्कृतहा दुर्विषाधि * * * *।

* * * भुर्भुवो लक्ष्मी किरीटि त्रिदशाधिपः॥ ११-१९९॥

१५९अ) विश्वगोप्ता विश्वहर्त्ता स्ववीरो रुचिराङ्गदः।

जननो जनजन्मादि प्रीतिमान्नीति मान्नयाः॥ ११-२००॥

वसिष्टकशिपो भानुर्भीमो भीमपराक्रमः।

प्रणवः सत्पथाचारो महाकायो महाधनुः॥ ११-२०१॥

जन्माधिपो महादेवो मङ्गलाचारपारगः।

तत्त्वा तत्वविवेकात्मा वित्तष्णुभूतिभूषणः॥ ११-२०२॥

वृषो ब्राह्मणविद्विष्णुर्जन्ममृत्युर्जरातिगः।

यज्ञो यज्ञपति यज्वो यज्ञाङ्गो मोघविक्रमः॥ ११-२०३॥

महेन्द्रो दुर्भरः सेनि यज्ञान्तो यज्ञवाहनः।

पंचब्रह्मसमुत्पत्तिर्विश्वेशो विमलोदयः॥ ११-२०४॥

आत्मयोनिरनित्यन्तः षड्विंशत् तत्त्वलोकभृत्।

गायत्री वल्लभः प्रांशुर्विन्ध्यावासः प्रभाकरः॥ ११-२०५॥

शिशुरारुतरः समुद्बुषेणः सुरशत्रुहा।

अमोघारिष्टमथनो मुकुन्दो विगतज्वरः॥ ११-२०६॥

रोगहर्त्तः यं ज्योतिर्दिव्यज्योतिरलंवलः।

पिङ्गलः कपिलः मेश्रुः शास्त्रनेत्रस्त्रयी तनुः॥ ११-२०७॥

ज्ञानस्कन्दो महाविज्ञावीतोत्पत्तिरुपप्लवः।

भगो विवस्वानादित्या योगाचार्य वृहस्पतिः॥ ११-२०८॥

उदारकीर्तिरुद्योगि योगिनी सदसत्परः॥

नक्षत्रमालीराकाशः स्वाधिस्थानगुदाश्रयः।

पवित्रपाणिः पापारिर्मणिपूरमनोगतिः॥ ११-२०९॥

कृत्पुण्डरीकमासीनः शुक्लः श्येनो वृषाकपिः।

उग्रोग्रहतिः कृष्णः समर्थानर्थनाशनः॥ ११-२१०॥

अधर्मशत्रुरक्षम्यः पुरुहुता पुरातनः।

ब्रह्मगर्भो वृहद्गर्भा धर्मसेतु धनागमः॥ ११-२११॥

जगष्ठितैषिसुगतः कुमारः कुशलागमः।

हिरण्यवर्णो ज्योतिष्मान्ननाभूतधराध्वनिः॥ ११-२१२॥

आरोग्यनियमाध्यक्षो विश्वामित्रो द्विजेश्वरः।

ब्रह्मज्योतिः सुशुद्धात्मन् महाज्योतिरनुत्तमः॥ ११-२१३॥

मातामहो मातरिश्वो नागहारः पिनाकधृत्।

पुल्यस्त्यः पुलहेगस्त्यो जंवुकर्णः पराशरः॥ ११-२१४॥

निरवणधर्मज्ञश्च विरिंचिर्विष्टरश्रवः।

आत्मभुवो निरुद्धश्च अत्रिराज्ञानमूर्त्तिमान्॥ ११-२१५॥

महायशो लोकचूडामणिः सत्यपराक्रमः।

व्यालकल्पो महाकल्पः कल्पवृक्षकलाधरः॥ ११-२१६॥

अलंकरिष्णुरचलारो विष्णुर्विक्रमोत्तमः।

१५९ब्) आशुतीव्रगतिश्चैव पावनः शिखिसारथिः॥ ११-२१७॥

असंश्लिष्टस्तिथिश्चैव माथीवा पापनाशनः।

वसुश्रवः कव्यवाहः प्रतप्तविश्वभोजनः॥ ११-२१८॥

जप्यो जरारिशमनः लोहिताश्वोनूनपात्।

पृषदश्वोन भायानाः सुप्रतीकस्तमिस्रहा॥ ११-२१९॥

निदाघतपना मेघपक्षा परपुरंजयः।

सुखानिलः सुनिष्पर्शः सुरभिः शशिरात्मकः॥ ११-२२०॥

वसन्तमाधवो ग्रीष्मो नभसो वीजवाहनः।

आङ्गिरोगुरुरात्रे यो विमलो विश्ववाहनः॥ ११-२२१॥

पावकः पुरजिच्चक्रस्त्रिविद्यो नगवाहनः।

मनोवुद्धिरहंकारः क्षेत्रज्ञः क्षेत्रपालकः॥ ११-२२२॥

जमदग्नि जलनिधिर्विपाको विश्वकारकः।

अधरोन् उत्तरोज्ञो ज्येष्ठा निःश्रेयसोलयः॥ ११-२२३॥

शैलानगस्तरुदावो दानवारिररिंदमः।

* * * * चामुं * जनका चोरो विशल्प हृत्॥ ११-२२४॥

चतुर्वेद चतुर्भावश्चतुरश्चतुर प्रियः।

आम्नायाथ सदाम्नायस्तीथदेवः शिवालयः॥ ११-२२५॥

वहुरूपो महोरूपः सवेरूपश्च भास्करः।

नाभयनिर्वाहको न्यायो न्यायगम्यो निरजुनः॥ ११-२२६॥

सहस्रमूर्ध्नो देवेन्द्रः सर्वशास्त्रप्रभंजनः।

मुण्डो विरूपो विकृतो दण्डीदान्तगुणोत्तमः॥ ११-२२७॥

धनाध्यक्षः पिंगलाक्षो नीलग्रीवो निरामयः।

सहस्रवाहुः सर्वौशः शरण्यः सर्वलोकभृत्॥ ११-२२८॥

पद्मसेनः पद्मगर्भ विश्वगर्भो विचक्षणः।

परावरज्ञो वीरेशः सुमुखः सुमहास्वनः॥ ११-२२९॥

देवासुरगुरुदेवो देवासुरनमस्कृतः।

देवासुरमहामात्रो देवासुरमहाश्रयः॥ ११-२३०॥

देवादिदेवो देवर्षिर्देवासुरवरप्रदः।

देवासुरेश्वरो देवो देवासुरमहेश्वरः॥ ११-२३१॥

सर्वदेवषया चिन्त्य देवतात्मसमुद्भवः।

ईड्योनीशः सुरव्याघ्रो देव सिंहो दिवाकरः॥ ११-२३२॥

विवधाग्रवरश्रेष्ठो शिखण्डीपार्वती प्रियः।

वज्रहस्तस्वविष्टंभिर्नरसिंहनिपातनः॥ ११-२३३॥

ब्रह्मचारिर्लोकचारिर्धर्मचारिधनाधिपः।

नन्दिर्नन्दीश्वरोनग्रो नग्नव्रतधरः शुचिः॥ ११-२३४॥

लिङ्गाध्यक्षः सुराध्यक्षः युगाध्यक्षो युगावहः।

१६०अ) स्वर्गतः स्वर्गः स्वरः स्वरमयस्वनः॥ ११-२३५॥

वीजाध्यक्षो वीजकर्त्तृ धनकृद्धर्मवर्द्धनः।

दंभो दंभो महादंभः सर्वभूतमहेश्वरः॥ ११-२३६॥

श्मशाननिलयस्तिष्यः केतुरप्रतिमाकृतिः।

लोकोत्तरस्फुटालोकस्तांवको नागभूषणः॥ ११-२३७॥

अंधकारमुखद्विषिविष्णुः कंधरपातनः।

वीतदोषाज्व?यगुणो दक्षारिपुवदन्तभित्॥ ११-२३८॥

धूर्जटिः स्वण्डपरशुः सकलो निष्कलो नघः।

आधारसकलाधारः पाण्डुराङ्गो?मृडोनरः॥ ११-२३९॥

पूर्णः पुरयिता पुण्यः सुकुमारः सुलोचनः।

सामगान प्रियः क्रुरः पुण्यकीर्त्तिरनामयः॥ ११-२४०॥

मनोजवस्तीर्थकरो जटिलो जीवितेश्वरः।

जीवितान्तकरानन्तो वसुरेतो वसुप्रदः॥ ११-२४१॥

सद्गतिः सत्कृतः सक्तः कालकण्ठः कलाधरः।

मानिर्मनुमहाकालः सद्भूतिः सत्यराक्रमः॥ ११-२४२॥

चन्द्रसंजीवनः शास्ता लोकगूढामराधिपः।

लोकवन्धुलोकनाथः कृतज्ञः कीर्त्तिभूषणः॥ ११-२४३॥

अनपायोक्षः सर्वशास्त्रभृतांवरः।

तेजोमयो द्युतिधरो लोकनाथाग्रणीगणः॥ ११-२४४॥

शुचिस्मितः प्रसन्नात्मा दुर्जयो दुरतिक्रमः।

ज्योतिर्मयनिराकारो जगन्नाथो जलेश्वरः॥ ११-२४५॥

सुवीणश्च महाकायो विशोकः शोकनाशनः।

त्रिलोकात्मा त्रिलोकेशः शुद्धाशुद्धितधोक्षजः॥ ११-२४६॥

व्यक्तलक्षणव्यक्तश्च व्यक्ताव्यक्तो विशांपतेः।

वरशीला वरगुणा मारामारमनोमयः॥ ११-२४७॥

व्रह्मविष्णु प्रजापाल हंसाहंसगतियमः।

वेधोविधातृसंस्त्रष्टः संहर्तृ च चतुर्मुखः॥ ११-२४८॥

कैलासशिखरोवासि सर्वावासिं सतांगतिः।

हिरण्यगर्भाद्रुहिणः पुरुषः पूर्वजः पिता॥ ११-२४९॥

भूतालयो भूतपतिर्भुतिदो भुवनेश्वरः।

सद्योगियोगविद्वाह्म ब्रह्मणप्रियः॥ ११-२५०॥

देव प्रियो देवनाथो देवज्ञो देवचिन्तकः।

विषमाक्षो विलामाक्षो विघवर्धनः॥ ११-२५१॥

निर्मांसरिरहंकारो निर्मोहो निरुपप्लवः।

दर्प्यघ्नो दर्पहो दृप्तः सर्वर्तुपरिवर्त्तकः॥ ११-२५२॥

सप्तजिह्वः सहस्त्रार्चिः स्निग्धः प्रकृति दक्षिणः।

१६०ब्) भूतभव्यभवन्नाथः प्रभवोभ्रान्तिनाशनः॥ ११-२५३॥

अर्थानर्थमहाकोशः परकार्यौकपण्डितः।

निष्कण्ठकः कृतानन्दो निर्व्याजो व्याजमर्दनः॥ ११-२५४॥

सत्त्ववत् सात्विकः सत्यः कीर्त्तिस्तंभकृतागमः।

अंकंपितग्रहग्राहिर्नकात्मानैककर्मकृत्॥ ११-२५५॥

सुप्रीतः सुमुखः सुक्ष्मः सोत्कण्ठो दक्षिणानिलः।

कंधस्कंधधराधुर्यः प्रकटप्रीतिवर्धनः॥ ११-२५६॥

अपराजितः सर्वसहोविदग्ध्वः सर्ववाहनः।

अमृतः सर्वविश्वास्यः पूतमूर्त्तियशोधरः॥ ११-२५७॥

वराहश्रृंगा वृद्धार्थ वलवेदकनायकः।

श्रुतिप्रकाशश्रुतिमदेवं धुरलेककृत्॥ ११-२५८॥

श्रीवल्लभमिवारंभ शान्ततभद्रसमंजसः।

भूशयो भूतिकृद् भूतिर्भूषणा भूतवाहनः॥ ११-२५९॥

अकायभक्तकायस्थो कालज्ञनः कला विधिः।

सत्यव्रतो महात्यागिनिच्छाशक्तिः परायणः॥ ११-२६०॥

परार्थवृत्तिवरदो विविक्तश्श्रुतिसागरः।

अनिर्विणोगुणग्राहि निष्कलंकाकलंक हृत्॥ ११-२६१॥

सुप्रभा वर्धमध्यस्थः शत्रुघ्नः शत्रुतापनः।

शिखण्डीशेखरी शूली मौलीसंसारसारथि॥ ११-२६२॥

अमृत्युः सर्वजित् सिंहस्तेजोराशिर्महामणिः।

असंख्ये या प्रमेयात्मा वीर्यवात्कार्यकोविदः॥ ११-२६३॥

वैद्या वैद्यविपङ्गोप्ता सर्वावरमुनीश्वरः।

अनुत्तमो दुराधर्षो मधुरः प्रियदर्शनः॥ ११-२६४॥

सुरेशः शरणः शब्दः शब्दब्रह्मन्सतां गतिः।

कालभक्ष्यः कलंकारः कंकणीकृत वासुकिः॥ ११-२६५॥

महीष्यासो महीभर्ता निष्कलंकोपिश्रृंखलः।

द्युमणिस्तरणिधर्न्यः सिद्धिदसिद्धिसाधनः॥ ११-२६६॥

निवृत्तः संवृत्तः शिल्पिर्व्यूढोरस्को महाभुजः।

एकज्योतिर्निरातङ्का नरनारायण प्रियः॥ ११-२६७॥

निर्लेपो निष्प्रपंचात्मा निर्व्यग्राव्यग्रनाशनः।

स्तव्यास्तव प्रियः स्त्रोत्रव्योममूर्त्तिरनाकुलः॥ ११-२६८॥

निरवद्यपदोभ्याद्यो विद्याराशिरुरुक्रः।

प्रणान्तवुद्धिरक्षुद्रः क्षुद्रहा नित्यसुन्दरः॥ ११-२६९॥

ध्येयाग्रधुर्यो धात्रीशः शर्वरः शर्वरीपतिः।

१६१अ) परमार्थ गुरुद्रष्टा यनुराशितवत्सलः॥ ११-२७०॥ ११-(?)

रसारसज्ञः सरिज्ञः सर्वसत्वावलंवनः (१०००)।?

एवं नाम्नासहस्त्रेण तुष्टा व वृसध्वजम्॥ ११-२७१॥

स्नापयामास च विभुं पूजयामासपंकजैः।

परीक्षाथ फलस्तेषु कमलेषु महेश्वरः॥ ११-२७२॥

गोपयामसकमलं तदेकं भुनेश्वः।

हृत्पुष्पो हरिस्तत्र किमिदं तु विचिन्तयेत्॥ ११-२७३॥

ज्ञात्वा स्वनेत्रमुधृत्य सर्वसत्वावलंवनम्।

पूजयामासभावेन रत्ना तेन जगद्गुरुम्॥ ११-२७४॥

ततस्तत्र विभुर्दृष्ट्वा तथा भूतं हरोहरिम्।

तस्मादवतताराशु (?)र्मण्डलात्यावकस्य च॥ ११-२७५॥

कोटिसास्करसंकाश जटामुकुटमण्डितम्।

ज्वालामालावृतं देवं तीष्णदंष्ट्रं भयंकरम्॥ ११-२७६॥

शुलटंकगदाचक्र कुकपाशरंहरम्।

वरदोभयहस्तं च द्वीपिचर्मोत्तरीयकम्॥ ११-२७७॥

इत्थं भूतं तदा दृष्ट्वा भवभस्मावभूषितम्।

पुननमश्चकाराशु देव देवं जनार्दनः॥ ११-२७८॥

दद्रुचस्तं परित्यज्य सेन्द्रादेवस्त्रिलोचनम्।

चचालब्रह्मभवनं च कंपे च वसुंधरा॥ ११-२७९॥

ददाहे तेजस्तच्छंभो प्रान्ते वै शतयोजनम्।

अधस्तादूर्ध्वतश्चैव हाहाकृतमभुत्तदा॥ ११-२८०॥

तदा प्राह महादेव प्रहसन्निवशंकरः।

संप्रेक्ष्य प्रणयाद्विष्णुं कृतांजलिपुटं स्थितम्॥ ११-२८१॥

ज्ञातं मयेदमधुना देवकार्यं जनार्दन।

सुदर्शनाख्यं चक्रं च ददामि तव शोभनम्॥ ११-२८२॥

यद्रूपं भवता दृष्टं सर्वलोकभयंकरम्।

हितायदर्शितं तद्भुत व भावायसुव्रत॥ ११-२८३॥

शान्तं रणातिरे विष्णो देवानां दुःखशासनम्।

शान्तस्य चास्त्रं शास्त्रस्य शान्तिरेव तपस्विनाम्॥ ११-२८४॥

योद्धुंशान्ति वलच्छेदं परस्य वलवद्विषः।

दैवैरशान्तं तद्रूपं मदीयं भावयाव्ययम्॥ ११-२८५॥

क्षमायुधिनकार्या वै योद्धुं देवारिसुदन्।

किन्तु क्षिप्तसमः कालो जीवनार्थं जनार्द्दन॥ ११-२८६॥

अनागते व्यतीते च दौर्वल्येथ जनोत्करे।

आकालिके त्वधर्मे च आनार्ये वैरिसुदन॥ ११-२८७॥

एवमुक्ता ददौ चक्रं सूर्यायुतसमप्रभम्।

नेत्रं पुनः समुद्धूतम् प्रभावात् पद्मसन्निभम्॥ ११-२८८॥

१६१ब) नेत्रं पुनः समुद्धूतं प्रभावात् पद्मसन्निभम्।

तदा प्रभृतितं प्राहुः पद्माक्षमिति सुब्रताः॥ ११-२८९॥

पस्पर्श च कराभ्यां वै शुभाभ्यां समुवाचहा।

वरदोहं वरश्रेष्ठ वरवरयथेप्सितम्॥ ११-२९०॥

भक्त्या च मत्कृतो नूनं त्वयाहं पुरुषोत्तम।

इत्युक्तो देव देवेन देवदेवं प्रणम्यताम्॥ ११-२९१॥

त्वयि भक्तिर्महादेव प्रसीदवरमुत्तमम्।

नान्यमिच्छामि भक्तानामार्त्तयो नैव यत् क्वचित्॥ ११-२९२॥

तच्छ्रुत्वा वचनं तस्य दयावान् सुतरां भवः।

पस्पर्श च ददौ तस्मै वरं देवो यथेप्सितम्॥ ११-२९३॥

प्राह चैव महादेवः परमात्मानमच्युतम्।

मयि भक्तश्च वंधश्च पूज्यश्चैव सुरासुरैः॥ ११-२९४॥

भविष्यति न सन्देहो मत्प्रसादात् सुरोत्तम।

यथा सती दक्षपुत्री विनिन्द्यैव सुलोचनः॥ ११-२९५॥

मातरं पितरं दक्षं भविष्यति सुरेश्वरी।

दैवी हैमावती कृष्ण तदा त्वं मम सुव्रत॥ ११-२९६॥

भगिनी तव कल्याणीं देवी हैमवती सुमाम्।

नियोगाद् व्रह्मणः साक्षात् प्रदास्यति त देवतम्॥ ११-२९७॥

मम वन्धुश्च देवानां मध्ये पूज्यो भविष्यसि।

मां च दिव्येन भावेन तदा प्रभृति शंकर॥ ११-२९८॥

इज्यसे च प्रसन्नेन मित्रभूतमिहात्मनः।

इत्युक्त्वा तर्द्ददे रुद्रो भगवान्नीललोहितः॥ ११-२९९॥

जनार्द्दनोपि भगवान् देवानामथ संनिधौ।

अया च त सुरश्रेष्टं ब्रह्माणं मुनिभिः समम्॥ ११-३००॥

मया प्रोक्तं स्तवं दिव्यं पद्मयोने सशोभनम्।

यः पठेच्छृणुयाद्वापि श्रावयेद् वा द्विजोत्तमान्॥ ११-३०१॥

प्रतिमासं हिरण्यस्य दत्तस्य फलमाप्नुयात्।

अश्वमेधसहस्रस्य फलं भवति तस्य वै॥ ११-३०२॥

घृताद्यैः स्नापयेद् रुद्रं स्थाल्यां वै कलशैः शुभैः।

नाम्नां सहस्रे नानेन श्रद्धयाशिवमेश्वरम्॥ ११-३०३॥

सोपि यज्ञसहस्रस्य फलं लब्ध्वा सुरेश्वरैः।

पूज्यो भवति रुद्रश्च तुष्टो भवति तस्य वै॥ ११-३०४॥

तथा त्वति तदा प्राह पद्मयोनिर्जनार्दनः।

जग्मुर्देवं नमस्कृत्य देवाः सर्वे नमस्कृतम्॥ ११-३०५॥

शिवनाम्ना सहस्रेण पूजयेद् अनघा द्विजाः।

जपन्नामसहस्रं च सयाति परमां गतिम्॥ ११-३०६॥

१६२अ) इति श्रीसुदर्शनचक्रलाभे महाप्रभावः शिनामसहस्रस्तवराजः समाप्तः।

श्रीशिवाय नमः

ॐ एकं ब्रह्मै वा द्वितीयं समस्तं सत्यं सत्यं नेहना नास्ति केंचित्।

एको रुद्रो न द्वितीयो वतस्थे तस्माद् एकं त्वां प्रपद्ये महेशम् (१)॥ ११-३०७॥

एकः कर्त्ता त्वं हि सर्वस्य शंभो नानारुपेष्टकरूपोस्य रूपः।

यद्वत् प्रत्यन्ध्वर्क एकोप्यनेकस्तत् मात्रान्य त्वां विनेशं प्रपद्ये (२)॥ ११-३०८॥

रजौ सर्पशुक्तिकायां च रूप्यं नरैः पुरस्तन्मृगाख्ये मरीचौ।

यद्वत् तु द्विव्द्धष्वा * * प्रपंचो यस्मिन् ज्ञात तं प्रपद्ये महेशम् (३)॥ ११-
३०९॥

ते यशैत्यं त्वं च दाहका त्वं च वह्नौ तापो भानौ शीतभानौ
प्रमादः।

पुष्पे गंगोदग्धमध्ये च सर्पिर्यत्त च्छंभो स्वं ततस्त्वां प्रपद्य (४)॥
११-३१०॥

शब्दं गृह्णाम्य श्रवास्त्वं हि जिघ्रेनघ्राणस्त्वं
व्यंघ्रिरायामिदूरात्।

वक्षः पश्येस्त्वं रसज्ञोप्यजिह्वः कस्त्वां सम्यग्वेतस्त्वां प्रपद्ये (५)॥
११-३११॥

नोवेदत्वामीशसाक्षाद् धिवे दोनो वा विष्णुर्नो विधाताखिलस्य।

नायोगीन्द्रानेद्रमुख्याश्च देवा भक्तो वेदत्वातमस्त्वां प्रपद्य (६)॥ ११-३१२॥

नवेदत्वामीशसाक्षाद् विवेदोनो वाविष्णुर्नो विधाताखिलस्य।

ना योगीन्द्रोनेन्द्रमुख्याश्च देवाभक्तो वेदत्वमतस्त्वां प्रपद्ये (७)॥ ११-३१३॥

नोतगोत्रं नापि जन्मापि नाख्यानो वा रूपं नैव शीलं न दशः।

इत्थं भूतोपीश्वरंस्तत्रिलोक्याः सर्वात्कामान् पूरयेत् तद्भजेत्वाम् (८)॥ ११-३१४॥

त्वत् तः सर्वं त्वं हि सर्वं स्मरारेत्वं गौरीशस्त्वं च नग्नोति शान्तः।

त्वां वैवृद्धस्त्वं युवात्वं च वालस्तत् किं यत्वं नास्य तत्त्वं नतोस्मि (९)॥ ११-३१५॥

स्तुत्वेति भूमौ निपपातविप्रः संदण्डवद्या वदती हृष्टः।

तावत् सवालोखिलवृद्ध वृद्धः प्रोवाच भूदेववरं वृणि हि (१०)॥ ११-३१६॥

तत दुत्थाय हृष्टात्मा मुनिविश्या नरः कृती।

प्रत्य व्रवीत् क्रिमज्ञातं सर्वज्ञस्य तव प्रभो॥ ११-३१७॥

सर्वान्तरात्म भगवान् सर्वः सर्वप्रदो भवान्।

याव्जां नियुक्तमां किंचिद् ईशीशो दैत्यकारिणीम्॥ ११-३१८॥

१६२ब्) इति श्रुत्वा वचस्तस्य देवा विश्वानरस्य ह।

शुचेः शुचिव्रतस्याथ शुचिस्मित्वा व्रवीच्छिशुः॥ ११-३१९॥

वाल उवाच

अभिलाषाष्टकं पुण्यं स्तोत्रमेतत् व पेरितम्।

अब्दं त्रिकालपठनात् कामदं शिसंनिधौ॥ ११-३२०॥

एतत् स्तोत्रस्य पठनं पुत्रपौत्रधन प्रदम्।

सर्वशान्तिकरं चापि सर्वोपत्यरिनाशनम्॥ ११-३२१॥

स्वर्गापवर्गसंपत्ति कारकं नात्र संशयः।

प्रातरुत्थाय सस्नातो लिंगमभ्यर्च्य शांभवम्॥ ११-३२२॥

वर्षं जपन्निदं स्तोत्रमपुत्रः पुत्रवान् भवेत्।

वैशाखे कार्त्तिके माघे विशेषनियमैर्युतः॥ ११-३२३॥

यः पठेत् स्नानसमये सलभेत् सकलं फलम्।

कार्त्तिकस्य तु मासस्य प्रसादादहमव्ययः॥ ११-३२४॥

अभिलाषाष्टकमिदं नदेयं यस्य कस्यचित्।

गोपनीयं प्रयत्नेन महावन्ध्या प्रसूति कृत्॥ ११-३२५॥

स्त्रिया वा पुरुषेणापि नियमाल्लिंगसंनिधौ।

अब्दं जप्तमिदं स्तोत्रे पुत्रदं नात्रसंशयः॥ ११-३२६॥

इत्युक्त्वा तर्द्धे वालः सोपि विप्रो गृहं गतः।

इति श्रीवस्तोत्रं समाप्तम्॥

अथ पद्मपुराणे रुद्राक्षलक्षणमहात्म्यं च॥ ११-३२७॥

शिखायां हस्तयोः कण्ठे कर्णयोश्चापि यो नरः।

रुद्राक्षां धारयेद् भक्त्या स शैवलोकमाप्नुयात्॥ ११-३२८॥

निच्छिद्राश्च स्वयकाश्च रुद्राक्षधारणे स्मृताः।

सप्तविंशति रुद्राक्षमालया देहसंस्थया॥ ११-३२९॥

यत् करोति नरः पुण्यं सर्वं कोटिगुणं भवेत्।

यो ददाति द्विजातिभ्यो रुद्राक्षं भुविसम्मुखम्॥ ११-३३०॥

तस्य पुत्रो भवेद् रुद्रः स्वपदं च प्रयच्छति।

रुद्राक्षे देहसंस्थे च कुक्कुरो म्रियते यदि॥ ११-३३१॥

सोपि रुद्रपदं याति किं पुनर्मानवो गुह।

एकवक्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति॥ ११-३३२॥

अवेध्यनं प्रतिम्रौ तौ वह्निस्तंभं करोति च।

द्विवक्रो हरगौरी स्याद् गोवधाद्याघनाश कृत्॥ ११-३३३॥

त्रिवक्रोग्निस्त्रिजन्मीय पापराशिं च नाशयेत्।

चतुर्वक्रः स्वयं ब्रह्म नरहत्यां व्यपोहति॥ ११-३३४॥

१६३अ) पञ्चवक्रस्तु कालाग्निरगम्या भक्ष्यपापनुत्।

षड्वक्रस्तु गुहः साक्षाद् गर्भहत्यां व्यपोहति॥ ११-३३५॥

सप्तवक्रस्त्वनन्तः स्यात् स्वर्णस्ते योघनुत् सदा।

विमाय कोष्टवक्रस्तु सर्वानृतविनाशकृत्॥ ११-३३६॥

भैरवो नरवक्रस्तु शिवसायुज्य दायकः।

दशवक्रः स्मृतो विष्णुर्भूतप्रेतपिशाचहा॥ ११-३३७॥

एकादशमुखो रुद्रो नानायज्ञफलप्रदः।

द्वादशाभ्यो भवेदर्कः सर्वक्रतुफल प्रदः॥ ११-३३८॥

त्रयोदशमुखः कामः सर्वकामफलप्रदः।

चतुर्द्दशास्यः श्रीकण्ठो वंशोद्धारक चापरः॥ ११-३३९॥

नववक्रं च रुद्राक्षं धारयेद्वामवाहुना।

चतुर्दशमुखं चैव शिखायां धारयेद्बुधः॥ ११-३४०॥

रुद्रक्षम्य प्रतिष्ठायां मन्त्रं पचाक्षरं ततहा।

ॐ त्र्यंवकादिमेकं चापि तत्र तत्र प्रयोजयेत्॥ ११-३४१॥

पंचामृतं पंचगव्यं स्नानकाले प्रयोजयेत्।

पंचाक्षरमन्त्रो यथा॥

नमः शिवाय।

त्र्यंवकमन्त्रो यथा॥

ॐ त्र्यंवकं यजामहे सुगन्धिं पुष्टिवर्धनम्॥ ११-३४२॥

उर्वारुकमिववन्धनान् मृत्योन्मुखीयमामृतात्।

ॐ हाँ अघोरे।

ॐ हौँ घोरे हे घोरतरे।

ॐ औँ ह्रीँ सर्वतः सर्वाङ्गे।

नमस्ते रुद्ररूपे ह्रीँ।

अल्पे नापि च मन्त्रेण रुद्राक्षस्य द्विजोत्तम॥ ११-३४३॥

प्रतिष्ठा विधिवत् कुर्यात् ततोधिकफलं लभेत्।

ततो यथा स्वमन्त्रेण धारयेद् भक्ति संयुतः॥ ११-३४४॥

तत्र क्रमेण मन्त्रः॥

ॐ ॐ भृशां नमः।

ॐ ॐ नमः [२]।

ॐ ह्रीँ नमः [३]।

ॐ ह्रँ नमः [४]।

ॐ ह्रूँ नमः [५]।

ॐ ॐ हुँ हुँ नमः [६]।

ॐ सः ह्रँ नमः [७]।

ॐ हँ नमः [८]।

ॐ ह्रीँ नमः [९]।

ॐ श्रीँ नमः [१०]।

ॐ हुँ नमः [११]।

ॐ क्षाँ क्षौँ नमः [१२]।

ॐ नमो नमः [१३]।

इति पद्मपुराणे रुद्राक्षमाहात्म्यं समाप्तम्॥

अथ स्कन्दपुराणे॥

कार्त्तिकेय उवाच

एकद्वित्रिचतुः पंचषट्सप्तवसवो नव।

दशैकादशद्वादशत्रयोदशचतुर्दश॥ ११-३४५॥

एतेषां तु मुखानां तु देवता कोत्र शङ्करः।

गुह्यं गुह्यतरं तेषां कथयस्व यथार्थतः॥ ११-३४६॥

श्रीशङ्कर उवाच

शृणु षण्मुखतत्त्वेन वक्त्रे वक्त्रे यथाक्रमम्।

१६३ब्) एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहतु॥ ११-३४७॥

द्विवक्त्रो देवदेव्यौ तु गोवधनायेद्ध्रुवम्।

त्रिवक्त्रो दहनः साक्षाद् भ्रूणहत्यां व्यपोहति॥ ११-३४८॥

चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति।

पंचवक्त्रः स्वयं रुद्रः कालाग्निनामनामतः॥ ११-३४९॥

षड्वक्त्रः कार्त्तिकेयस्तु धारणाद् दक्षिणे भुजे।

ब्रह्महत्यादिभिः पापैर्मुच्यते नात्रसंशयः॥ ११-३५०॥

सप्तवक्त्रो महासेन अनन्तो नामनागरात्।

गुरुतल्पादिभिः पापै मुच्यते नात्र संशयः॥ ११-३५१॥

अष्टवक्त्रो महासेनः साक्षाद् देवो विनायकः।

पृष्ठोदरकरेणापि संस्पृशेद् वा गुरुस्त्रियम्॥ ११-३५२॥

एवमादीनि पापानि ह्यतिपापानिसर्वशः।

विघ्नस्तस्य च नश्यन्ति मुक्तो याति पराङ्गतिम्॥ ११-३५३॥

गुणा ह्येतेषु सर्वेषु अष्टवक्त्रस्य धारणात्।

नववक्त्रो भैरवः स्याद् धारयेद् वामके भुजे॥ ११-३५४॥

कपिलं मुक्तिदं प्रोक्तं ममतुल्यवलं भवेत्।

लक्षकोटिसहस्राणि ब्रह्महत्यां करोति यः॥ ११-३५५॥

तत् सर्वं दहते शीघ्रं नववक्त्रधारणात्।

दशवक्त्रो महासेन साक्षाद् देवो जनार्दनः॥ ११-३५६॥

ग्रहाश्चैव पिशाचाद्या वेताला ब्रह्मराक्षसः।

पन्नगाश्च विनश्यन्ति दशवक्त्रस्य धारणात्॥ ११-३५७॥

वक्त्रैकादशरुद्राक्षो रुद्रा एकादशः स्मृतः।

शिखायां धारयेन्नित्य तस्य पुण्य * ल शृणु॥ ११-३५८॥

अश्वमेधसहस्रस्य वाजिपेय शतस्य च।

हेमसंख्याश्च लक्षस्य सम्यग्दत्तस्य यत्फलम्॥ ११-३५९॥

तत्फलं समवाप्नोति रुद्रौकादशधारणात्।

रुद्राक्षद्वादशैर्वक्रः कण्ठदेशे च धारयेत्॥ ११-३६०॥

आदभ्यस्तुष्यते नित्यं द्वादशार्क व्यवस्थितः।

तत्र क्रमेण मन्त्रानाह।

ॐ ऐँ [१]

ॐ श्रीँ [२]

ॐ ब्रँ घ्युँ [३]

ॐ जी ह्ः [४]

ॐ ह्रीँ [५]

ॐ ह्रीँ [६]

ॐ ह्राँ [७]

ॐ ब्रुँ रँ [८]

ॐ ह्राँ [९]

ॐ ह्रीँ [१०]

ॐ ह्रीँ हुँ [११]

ॐ क्ष्रौँ स्त्रीँ [१२]

ॐ उँ माँ ठः [१३]

ॐ नमो नमः [१४]

इति श्रीस्कन्दपुराणोक्त रुद्राक्षमाहात्म्यं समाप्तम्॥

१६४अ) अथ महाविद्या निरूपणम्॥

तदुक्तं मुण्डमालातन्त्रे॥

कालीतारा महाविद्या षोडशी भुवनेश्वरी॥ ११-३६१॥

भैरवी च्छिन्नमस्ता च विद्या धूमावती तथा।

वगला सिद्धिविद्या च मातङ्गी कमलात्मिका [क*ला-]॥ ११-३६२॥

एता दश महाविद्या महादेवि प्रकीर्त्तिताः।

तथा चोक्तं भूतभरवीतन्त्रे॥ ॥

नृसिंहोथ हयग्रीवो भैरवश्चरणायुधः॥ ११-३६३॥

क्षेत्रपालो महाकालो यक्षोयक्षिण्य एव च।

त्रिजटैकजटातारो ग्राख्यानीलसरस्वती॥ ११-३६४॥

शवरी त्रिपुरा वाला महोग्रा कालसुन्दरी।

ब्रह्मतारा च चण्डाली श्यामा कर्णपिशाचिनी॥ ११-३६५॥

मातङ्गी धनदा काली कलौ तुष्ण फलप्रदा।

शवरी त्वरिता चण्डाली उच्छिष्टचण्डाली *॥ ११-३६६॥

नात्रसिद्धाद्यपोक्षास्ति नक्षत्रादि विचारणा।

कलाधिशो धनं नास्ति न वा मिन्त्रादि दुषणम्॥ ११-३६७॥

सिद्धिविद्या महाविद्या युगमे वा परिश्रमः।

नास्ति किंचिन् महादेवि दुःखसाध्यं कथं च न॥ ११-३६८॥

एकाक्षी महाविद्या वीजहीना भवत्पुरा।

भुवनेशी त्र्यक्षरी तु महाविद्याः प्रकीर्त्तिताः॥ ११-३६९॥

भुवनेशी महाविद्या देवराजन वै पुरा।

आराधिता च विद्ये व वज्रेणापि विमोहिता॥ ११-३७०॥

एकाक्षरी। वीजहीना वाग्भवे नोज्ज्वला परा।

कामराजख्य विद्या या विद्धा सा युष्पधन्वना॥ ११-३७१॥

केवलं शिवरूपेण शक्तिरूपेण केवलम्।

माया प्रतिष्ठिता विद्या तारा चन्द्रस्वरूपिणी॥ ११-३७२॥

भैरवी तु महाविद्या महासंपत् प्रदायिनी।

इति मुण्डमालातन्त्रे॥

ननु वैष्णवादि मतम् विहाय कथं शाक्ते यत्नः क्रियतेतैरेव भुक्ति मुक्ति

भवति

किमनेन तथा श्रुति मयोविद्या सते साधं तमः प्रविशति

इति मै चं वक्तव्यं संसारो मियतरूप इति तथा चोक्तमाचार्यैः॥

शांभवे सूत्रे॥

प्रमोदं खलुकर्त्तव्यमकर्त्तव्यमिदं ममः॥ ११-३७३॥

इत्थं हिनियमास्यास्य हेतुर्नियतिरुच्यते।

१६४ब) तेन तुस्था विद्या परेयं श्रुतिः।

अनुष्टुप श्रुतिरपि।

जीवाश्रयो ब्रह्मपदाद्य विद्यातत्त्वविन्मता॥ ११-३७४॥

इत्थं जीवो विद्या व च्छिन्नः मोक्षदशायां ब्रह्मदा ब्रह्मस्वरूपेति यावत्॥

प्रमाणिक वचनानि।

यत्रास्ति भोगो न च तत्र मोक्षा यत्रास्ति मोक्षो न च तत्र भोगः।

शिवा पदाम्भोज युगान् नकस्य भोगश्च मोक्षश्च करस्थ एव॥ ?॥ इति संक्षपः॥

मन्त्रोद्धारमाह करस्थ॥

तथा च भूतभैरवे॥

क्रोधीशं क्षतजाभूढं धूम्रभैरव्यलंकृतम्।

रुद्रडाकिनिसंयुक्तं विन्दुस्था वानी स्मृतम्॥ ११-३७५॥

क्रोधीशः ककारः क्षतजः रेफस्तद् युक्तं धूम्रभरवी ईकार इत्युक्तं रुद्रडाकिनी विन्दुस्तद् युक्तं तेन क्रीँ इति वीजम्॥

तथा च कालीतन्त्रे॥

कामाक्षरं वह्निसंस्थमिन्दिरानादविन्दुभिः।

मन्त्रराजमिदं ख्यातं दुर्लभं पापचेतसाम्॥ ११-३७५॥

कामाक्षरं ककारं वह्निसंस्थं वह्निः रेफः तदुक्तः इंदिरा ईकारस्तद्युक्तं नादोर्ध्व चन्द्रस्तद्युक्तं विन्दुद्युक्तं च तथा चक्रीं इत्येकाक्षरी भवति विद्या॥

कामत्रयं वह्निसंस्थं रतिविन्दुसमन्वितम्।

कुर्वयुग्मं तथा लज्जा युगलन्तदनन्तरम्॥ ११-३७६॥

दक्षिणे कालिके चेति पूर्ववीजानि चोच्चरेत्।

अते वह्निवधुं दद्याद् विद्या राज्ञी प्रकीर्त्तिता॥ ११-३७७॥

कामत्रयं ककारत्रयं वह्निः रेफः रतिः ईकारः तद्युक्तं विन्दुरनुस्वारस्तद्युक्तं कूर्चयुग्मं हूँ हूँ इति वीजयुग्मं लज्जायुगलं ह्रीँ ह्रीँ इति युगलं दक्षिणे कालिके इति स्वरूपं पूर्ववीजानि पूर्वोक्तवीजानि उच्चरेत्॥

तथा च मन्त्रः॥

क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा॥

इति द्वाविंशत्यक्षरोमन्त्रः॥

विद्यारत्नं प्रवक्ष्यामि श्रुत्वा कर्णवतंसय।

माया द्वयं कुर्चयुग्मं मैन्द्रान्तं मदनत्रयम्॥ ११-३७८॥

मायाविन्द्विश्वरयुतं दक्षिणे कालिके पदम्।

१६५अ) संहारक्रमयोगेन वीजसप्तकमुद्धरेत्॥ ११-३७९॥

एकविंशत्यक्षराद्यस्ताराद्याः कालिकामनुः।

पूर्वोक्तमन्त्रवत् कुर्यात् पूजां सर्वां विचक्षणः॥ ११-३८०॥

फेत्कारिणीतन्त्रे॥

वर्गाद्यं वह्निसंयुक्तं रतिविन्दुसमन्वितम्।

त्रिगुणं च ततः कुर्च्चयुग्मं लज्जा युगं तथा॥ ११-३८१॥

दक्षिणे कालिके वीजं पूर्वच्च ततः पुनः।

ठ द्वयं न समायुक्तं मनुमेनं विदुर्बुधः॥ ११-३८२॥

नात्र सिद्ध्याद्यपक्षास्ति न वा मित्रादिदूषणम्।

न वित्तव्ययवाहुल्यं कायक्लेशकरं न वा॥ ११-३८३॥

वर्गेति वर्गाणामाद्यः ककारः वह्निः रेफः तद्युतः मतिः ईकारः तेन क्रीँ क्रीँ क्रीँ तत् त्रिगुणं त्रिवारं इत्यर्थः।

कुर्चः हूंकारः स्तुतौ तथैवोद्धारात् लज्जा ह्रीँ पूर्ववद् इति वीजत्रयं पूर्वेण क्रमेणैव वाचां इत्यर्थः ठ द्वयं स्वाहा। एवम्॥

क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ दक्षिणे कालिके क्रीँ क्रीँ क्रीँ हूँ हूँ स्वाहा।

इति मन्त्रः।

लक्षमेकं जपेन् मन्त्रं नियमे न दिवाशुचिः।

सुशुचिश्च तथा रात्रौ लक्षमेकं तथा जपेत्॥ ११-३८४॥

तथा च कालीकल्पे॥

नमः पाशांकुशो द्वेठा फट् स्वाहा कालिकालिके।

दीर्घान्तनुच्छदं काली मनुः पंचदशाक्षरः॥ ११-३८५॥

मन्त्रो यथा॥

॥ नमः आँ क्रौं फट् ठः प स्वाहा कालिकालिके हूम्॥

इति पंचदशाक्षरो मन्त्रः॥

दीर्घान्तनुच्छदं हूम्॥

मत्स्यसुक्ते॥

लज्जावीजं ततः क्रोधः फडन्तस्त्र्याक्षरी भवेत्।

क्रोधः हूँ तथा च ह्रीँ हूं फट्।

इति मन्त्रः॥

इदानीं श्यामसुन्दर्याः श्यामायाः सेपर्याविधिः पूजाविधिः।

तद्यथा॥

ब्रह्मे मुहुर्ते चोत्पाय रात्रिवासः परित्यज्य धौते वाससौ परिधाया चम्प
स्वशिरसि सहस्त्रदलकमले गुरुं ध्यायेत्।

कीदृशम्॥

प्रातः शिरसि शुक्लेब्जे द्विनेत्रं द्विभुजं गुरुम्॥ ११-३८६॥

वराभयकरं शान्तं स्मरेत् तन्नामपूर्वकम्।

इति ध्यात्वा मानसोपचारैराराध्यनमस्कुर्यात्।

अनेनः।

अज्ञानतिमिरान्धस्येति ततो मूलाधारत्रिकोणे कामं क्लीँ वीजं स्वरूपं वालार्कवर्णं सत्वरजस्तम इति गुणत्रयालंकृतं ध्यात्वा तदुपरि कुण्डलिनीं शक्तिं प्रसुप्तभुजगाकारां सार्ध त्रिवलये स्थिताँ हूँकारेण मनोदण्डा कृता कृत्वादुत्थाप्य मूलाधार स्वाधिष्ठान मणिपूरका-नाहतविशुध्याख्यामिषड्चक्राणि भित्वा शिरस्थिताधोमुखसहस्रदल-कमले नीत्वा तत्रस्थ चन्द्रमण्डलं विगलदमृतधारया मण्डमय्यान्तां कुण्डलिनीं स्नापयित्वा तद्रूपमात्मा तं चिरं ध्यात्वा तां पुनराज्ञा विशुद्धादिक्रमेण मूलाधारं नयेत्॥

ततो गृहान्निर्गत्य मलमूत्रात् सर्गं निधाय यथा विविशौचाचमनं कृत्वा

दन्तान्विशोध्य नध्यादौ गत्वा स्वशाखोक्त विधिना स्नानं कृत्वा मन्त्रस्नानमाचरेत्।

यथा मुलमुच्चार्य त्रिराचम्य मूलेन जलमामन्त्र्य अस्त्राय फडिति रक्षितं कृत्वा वमिति धेनुमुद्रयामृतीकृत्य मुलं मन्त्रेण अमुकदेवतां अभिषिंचामीति कलशमुद्रया त्रिः स्वशिरसि जलांजलिं दत्वा सन्ध्या वन्दनं देवपितृतर्पणं च कृत्वा मुलमन्त्रेणोच्चार्यामुकदेवतां तर्पयामीति त्रिः सन्तर्प्य गायत्रीं जप्त्वा मूलमुच्चार्य सूर्यमण्डलस्थायै देवतायै अर्घां दत्वा ततः।

सूर्यमण्डले इष्टदेवतां ध्यात्वा भगवति अमुकदेवते क्षेमस्वति संहारमुद्रया देवी स्वहृदि समानीय सूर्यमण्डमुच्चार्य सूर्यार्घं दत्वा ततो मौनी पूजागृह द्वारमागत्य हस्तौ पादौ प्रक्षाल्याचम्य सामान्यार्घस्थापनं कुर्यात्।

यथास्त्रेण पात्रं प्रक्षाल्य नम इति पुरयित्वा गन्धपुष्पादि दत्वा तीर्थमन्त्रेण तीर्थमावाह्य प्रणवेन धेनुमुद्रां प्रदर्शयेत्।

ततोस्त्रेण द्वारं प्रोक्ष्य।

ॐ द्वार देवताभ्यो नम इति संपूज्य अस्त्रमन्त्रेण वामपादघातत्रयेन भौमान् विघ्नानुत्सार्य अस्त्रादिभिश्चान्तरिक्षगान्विघ्ननुत्सार्य मूलमन्त्रसंचितदिव्यदृष्ट्यादिव्यान्विघ्नानिति अपसर्पन्त्वेति पठित्वा विकान्विकीर्यदक्षिणपादपुरसरमंगसंका च न वाममण्डपं प्रविश्य ब्रह्मणे वास्तु पुरुषाय नम इति नैर्ऋत्यां संपूज्यासनं कुर्यात्।

१६६अ) रक्तं कम्वलाद्यासने कुशाचद्धान् दत्वा ह्सौः सदाशिवमहाप्रेतपद्मासनाय नम इति संपूज्य ध्यात्वा आसनस्य मेरुपृष्ठ-ऋषिरिति पूर्वोक्तवत्॥

पृथ्वित्वयेति च पतित्वा ततोर्घ जलेन संप्रोक्ष्य ह्सौः सदाशिवमहाप्रेतं इति संपूज्य तौपरि प्राङ्मुखं उदङ्मुखौ वा वद्धपद्मासनः स्वस्तिकासना वा उपविशत्।

ततो वामे गुरुभ्यो नमः।

दक्षे गणेशाय नमः।

मध्ये। इष्टदेवतायै नमो नमस्कुर्य्यात्

स्ववामे शंखपाद्याचमनीय पात्राणि नि दद्यात्।

दक्षिणे गन्धपुष्पादि सकलपूजा सामग्रीं निधाय करप्रक्षालणार्थं पात्रं पृष्ठतो निदद्यात्॥

ततो ह्ः अस्त्राय फट् इति गन्धपुष्पाभ्यां करौ संशोध्य ह्र इति अस्त्राय फट् इत्युर्ध्वं तालत्रयं दत्वा दिग्वन्धनं प्राकारौ च भूतशुद्धिं कुर्यात्। यथा॥

स्वाङ्के उत्तानहस्तौ कृत्वा निरुद्धपवनः सन् सुषुम्ना वर्त्मना हृदयाज्जिवात्मानं प्रदीप कलिकाकारं मूलाधारस्थ कुण्डलिन्या सहमूलाधारादि [-धा*दि] षड्चक्रं भित्वा शिरस्थसहस्त्रदलपद्म-कर्णिकान्तर्रात परमात्मज्योतिषि सोहमिति मन्त्रेण संयोज्य पृथिव्यप्तेजो वाय्वाकाशगन्धरसरूपस्पर्शशब्दघ्राणरसनचक्षुस्त्वक् श्रोत्रवाक्पाणि पादपायुस्थवचना दानगमनपि सर्गानन्दात्मक पंचविंशतितत्वानि वीजभावेन तत्र लीलानिविचिन्त्य वामकुक्षि स्थितं पापपुरुषं कज्जलाभं प्रभम्।

ब्रह्म हत्या शिरस् * * * * र्णस्तेयभुजद्वयम्॥ ११-३८७॥

सुरापन हृदायुक्तं गुरुतल्पकटिद्वयम्।

तत् संसर्गिपदद्वन्द्व अंगप्रत्यङ्गपातकम्॥ ११-३८८॥

उपपातकरोमाणं रक्तश्मश्रुविलोचनम्।

खड्गचर्मधरं क्रुरं वामकुक्षौ विचिन्तयेत्॥ ११-३८९॥

इति विचिन्त्य वामनासापुटीयमिति वायुवीजं धूम्रवर्ण ध्यात्वा जपन् यं वीजोक्तवायुना समस्तं शरीरं षोडशमात्रया पूर्व ते नैव वायुना समस्तं शरिरं पापपुरुषसहितं चतुषष्टिमात्रया नासापुटेन वायुरेचयेत्।

१६६ब्) पुनर्दक्षिनासापुटेरमितरक्तवर्णवन्हिवीज ध्यात्वा जपन् षोडशमात्रवायुं आपुर्य नासापुटद्वयं धृत्वा कुंभकं कुर्वन्।

चतुषष्टिमात्रया तदेव वीजसमस्तसरीरपापपुरुषसहित संदह्य वामनासापुटेन पूर्ववद्वीजं द्वात्रिंशतमात्रया भस्मना सह

वायुरेचरेत्।

ततो वामे नासापुटे वमिति चन्द्रवीजं शुभ्रवर्णं ध्यात्वा जपन्
षोडशमात्रया वायुमापुर्य ललाचन्द्रनयेत्।

तस्माचन्द्राद् वमिति वारुणवीजं जपन् कुंभयोगेन चतुषष्टिमात्रया-
मृतवृष्टिं अ अकारादिक्षकारान्तामक्षरमयीं
वृष्टिनिपात्पतयामृतवृष्ट्या
सर्वशरीरवक्रकवचचरणायन्वितमुत्पायलं इति पृथिवीवीजं पीतवर्णं
जपन् दक्षिणनासापुटेन द्वात्रिंशद्वारं मात्रया वायुरेचयन्।

सर्वशरीरदृढीभूतं विचिन्तयेत् [विन्तयेत्]।

ततो हंस इति मन्त्रेण हृत्पद्मे जीवात्मानं समानीय ते नैव मन्त्रेण
कुण्डरीलिमपि स्वस्था तं नयेत्।

पृथिव्यादीनि तत्त्वानि स्वस्थान प्रापय्य देवता भेदेनात्मानं तावयेद् इति
भूतशुद्धि।

अथ मातृकान्यास॥

श्रीब्रह्मा-ऋषिः गायत्रं छन्दं श्रीसरस्वती देवताद्द?रावीजानि स्वराः शक्तः यः मातृकान्यासे विनियोगः।

शिरसि ब्रह्म-ऋषये नमः

मुखे गायत्री [गात्री] छन्दसे नमः।

हृदि स्वरस्वती देवतायै नमः।

पादयो हलवीजेभ्यो नमः।

गुह्ये स्वरेभ्यः शक्तिभ्यो नमः।

१६७अ) अं क ख ग घ ङ अंगुष्टाभ्यां नमः।

इ च छ ज झ ञ ई तर्जनीभ्यां स्वाहा।

उं ट ठ ड ढ ण ऊं मध्यमाभ्यां वौषट्।

एं त थ द ध न ऐं अनामिकाभ्यां कवचाय हूँ।

ओं प फ ब भ म औं कनिष्ठाभ्या वौषट्।

अं य र ल व श ष स ह ल क्ष अ करतलपृष्टाभ्यां वस्त्राय फट्।

अँ कँ खँ गँ घँ ङँ आँ हृदयाय नमः।

इँ चँ छँ जँ झँ ञँ ईं शिरसें स्वाहा।

उँ टँ ठँ डँ ढँ णँ ऊँ शिखायै वौषट्।

एँ तँ थँ दँ धँ नँ ऐँ कवचाय हूँ।

ओँ पँ फँ बँ भँ मँ औँ नेत्रत्रयाय वौषट्।

अँ यँ रँ लँ वँ शँ षँ सँ हँ लँ क्षँ अः अस्त्राय फट्।

इति ऊर्ध्वोर्ध्वं तालत्रयमिति पूर्ववद् दक्षिशो वध्नीयात्॥

ततो ध्यायेत्॥

ॐ पंचाशद्वर्णभेदैर्विहितवदनदोः पादयुक्तक्षिचक्षो

देशां भास्वत् कपर्दाकलितशशिकलामिन्दुखण्डा कपदाताम्।?

अक्षस्त्रक् कुंभचिन्ता लिखितवरकरां त्रीक्षणापद्मसंस्था

स्वछा कल्पामतु छस्तनजघनभरां भारतीतां नमामि॥ ११-३९०॥

एवं ध्यात्वा वर्णन्याशं कुर्यात्। तथा।

अं नमो ललाटे।

आं मुखवृत्ते।

इत्यादिकरणे मातृका न्यासं सं समाप्य स्वमन्त्रं ह्रीँ वीजं जपन्
प्राणायामं [-यायामं] कुर्यात्।

अथ ऋष्यादि न्यासः।

यथा हृदि हस्तं दत्वा अस्य मन्त्रस्य भैरवऋषि रुष्णिकछन्द ह्रीँ वीजम्।
हूँ शक्तिँ। क्रीँ कीलकम्। अनिरुद्धस्वरस्वती देवता कत्वैश्वर्यै विनियोगः॥

शिरसि भैरवाय ऋषये नमः।

मुखे उष्णिक च्छन्दसे नमः।

पादयोः ह्रीँ वीजाय नमः।

हूँ शक्तये नमः।

अथ पीठन्यासः॥

१६७ब्) आधारशक्तये नमः।

प्रत्येत्यै नमः।

मुखे उष्णिक् छन्दसे नमः।

पादयोः ह्रीँ वीजाय नमः।

कल्पवृक्षाय नमः।

ऊरुद्यानाय नमः।

स्वर्णवेदिकायै नमः।

श्मशानाय नमः।

चतुर्दिक्षुशिवायेभ्यो नमः।

इति हृदि॥

दक्षिणांसे धर्माय।

वामांसे ज्ञानाय।

वासोरौ वैराग्याय।

दक्षोरौ। ऐश्वर्या।

मुखे। अधर्माय।

वामपार्श्वे। अज्ञानाय।

अवैराग्याय।

दक्षपार्श्वे। अनैश्वर्याय।

मधेरत्नसिंहासनाय नमः।

आनन्दकन्दाय नमः।

संविन्नालाय नमः।

सर्वतत्वात्मकपद्मास नमः।

प्रकृतिमयपत्रोयो नमः।

विकारमय केसरेभ्यो नमः।

पंचाशद्वर्णवीजाद्य कर्णिकायै नमः।

अं सूर्यमण्डलाय द्वादशकलात्मने नमः।

ॐ सोममण्डलाय षोडशकलात्मने नमः।

मं वन्हिमण्डलाय दशकलात्मने नमः।

सं सत्वाय।

रं रजसे नमः।

अं अन्तरात्मने नमः।

पं परमात्मने नमः।

ह्रीँ ज्ञानात्मने नमः।

त्रिपंचारचक्राय नमः।

हृत्पद्मम्याष्टदलकेसरेषु। पूर्वादितः।

इच्छायैः। क्रियायै।

कामिन्यै कामदायै।

रत्यै। रतिप्रियै।

आनन्दायै नमः। मध्ये।

मनोन्मन्यै नमः।

ह्सौः सदाशिव महाप्रेतपद्मासनाय नमः।

इति पूजयेत्।

इती पीठन्यासः॥

ततोर्घपात्रं स्थापयेत्।

वामतो वह्निमण्डले त्रिपदिकामारोप्य तत्र वन्हिमण्डलाय पूर्ववत्।

इति संपूज्य कडिति शंखं प्रक्षाल्य तदुपरि सस्थाप्य अं
सूर्यमण्डलाय पूर्ववज्जले संपूज्य
१६८अ) क्रोमित्यंकुशमुद्रया सूर्यमडलागगेचति तीर्थमावाह्य वमिति
धेनुमुद्रयामृतीकृत्य मूलमन्त्रमष्टधा जप्त्वा
ह्रीँ हृदयाय नम इत्यादिषु षडङ्गानि विन्यस्य शङ्खमुद्रां प्रदर्श्य
हुमित्यवगुण्ठ्य मत्स्यमुद्रया छाद्य सन्निरोधनमुद्रया सन्निरुध्य सजले
प्रोक्षणपात्रे किंचिदर्श जलं निक्षिप्य मूलमुचार्य ते नैवोदेकेन
तैवात्मानं पूजोपकरणं चात् प्रक्षयेत्।

ततो कामित्यादिना अंगन्यासं कृत्वा ध्यायेत्॥ यथा॥

ॐ कारलवदनां घोरा मुक्तकेशां चतुर्भुजाम्।

कालिकां दक्षिणा दिव्यां मुण्डमाला विभूषिताम्॥ ११-३९१॥

सद्यं छिन्नशिरः खड्गं वामोर्ध्वाधः कराम्वुजाम्।

अभयं वरदं चैव दक्षिणाधोर्ध्वपाणिका॥ ११-३९२॥

महामेघसभाश्यामां तथा चैव दिगंवरीम्।

कण्ठा व सक्तमुण्डाली गलरुधिरचर्चिता॥ ११-३९३॥

कर्णावतंसतान्तीन शवयुग्मभयानकम्।

घोरदंष्ट्रां करालां च पीनोन्नतपयोधराम्॥ ११-३९४॥

शवानां करसंघातैः कृतकांची हसन्मुखीम्।

सृक्कद्वयगलद्रक्तधारा विस्फुरिताननाम्॥ ११-३९५॥

घोररावां महारौद्री श्मशानालयवासिनीम्।

दन्तुरां दक्षिणव्यापि मुक्तलंवकचोच्चयम्॥ ११-३९६॥

शवरूपम * देव हृदयोपरि संस्थिताम्।

शिवाभिर्घोररूपाभिः चतुर्दिक्षुसमन्वित॥ ११-३९७॥

महाकालेन च समं विपरितरतातुराम्।

मुखप्रसन्नवदनां स्मैराननसरोरुहात्।

एवं संचिन्त्य कालिं तु श्मशानालयवासिनीम्॥ ११-३९८॥

अथवा फेत्कारिणीतन्त्रे ध्यानमाह॥

ॐ नागयज्ञापवीतां च चन्द्रार्धकृतशेषराम्।

१६८ब) जटान्वितां च संचिन्त्य महाकालसमीपगाम्॥ ११-३९९॥

एवं संचिन्त्य देवी च रत्नपुष्पैसमर्चयेत्।

इति ध्यात्वा हृदयमानियमानसोपचारैराराध्य मुद्रां प्रदर्शयेत्।

॥ आत्मानं देवी रूपं विचिन्त्य यन्त्रमुद्धरेत्॥

तथा च कालीतन्त्रे॥

आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्बहिर्न्यसेत्॥ ११-४००॥

ततो वै विलिख्य विधिवल्लिखेत् पद्मं सलक्षणम्।

तथा तन्त्रान्तरे॥

आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्बहिन्यसेत्॥ ११-४०१॥

ततो वै विलिखेन् मन्त्री त्रिकोणत्रयमुत्तमम्।

वृत्तं विलिख्य विधिवल्लिखेत् पद्मं सलक्षणम्॥ ११-४०२॥

तथा च तन्त्रातरे।

त्रिकोणं विन्यसे द्वंद्वं पुनश्चापि त्रिकोणकम्।

षट्कोणं च पुनस्तत्र तन्मध्ये स्थापये छिवाम्॥ ११-४०३॥

तत्र कौमुघाम्॥

त्रिकोणं विन्यसेत् पूर्वं पुनश्चापि त्रिकोणकम्।

नवकोणं न्यसे तत्र तन्मध्ये स्थापये छिवाम्॥ ११-४०४॥

एवं पंचदशकोणं निर्माय यथोक्त पीठपूजां कुर्यात्।

आधारशक्तिमारभ्य शक्तिमारभ्य शिवाभ्यो नम इत्यन्तं मध्ये

संपूज्य आग्नेयादिकोणचतुष्टयेषु।

धर्मायनम इति ऐश्वर्याय मम इत्यन्तं संपूज्य।

पूर्वादिदिक्षु अधर्माय नमत्यादि पीठमनुपर्यन्तं संपूज्य।

पूर्वादिदिक्षु अधर्माय नमत्यादि पीठमनुपर्यन्तं संपूजयेत्।

ह्रामिति अंगन्यास कृत्वा करामलवदनामित्यादि ध्यात्वा पुष्पांजला

वानीय यन्त्रमध्ये संस्थाप्या प्राणप्रतिष्टां कुर्यात्।

यथा॥

आँ ह्रीँ क्रौँ यँ रँ लँ वँ सँ षँ शँ होँ हाँ सः देव्याः प्राणा इह प्राणा।

१६९अ) एवं आँ इत्यादि। (१३)

देव्या जीव इह स्थितः।

एवं आमित्यादि। (१३)

देवा सर्वेन्द्रियाणि वां मनश्चक्षुः श्रोतु घ्राणप्राणा इहागत्य सुखं चिरं तिष्टतु स्वाहा।

ततो मूलमुचार्य अमुक इहागछ इह तिष्ठेन्यावाह्यं संस्थापनमुद्रया संस्थाप्य सनिधानमुद्रया सनिधाथ सनिरोधनमुद्रया संनिधाप्य संनिरोध्य हुमित्पवसुंट्यवमिति धेनुमुद्रयामृती कृत्य परमीकरणमुद्रया परमीकृत्य देवतायाः षडङ्गेषु ह्राँ हृदयाय नम इत्यादिभिः षडङ्गं मन्त्रैः सकली कुर्यान्।

तत आसनाद्युपचारः॥

आसनं स्वागतं चार्यमिति षोडशोपचारै मूलमन्त्रमुच्चार्य कालिके इदमासनं मास्यताम्॥

मूलमुच्चार्य॥

कालिके स्वागतम्॥

प्रवरेव कुशलं मूलमुच्चार्य कालिके एषोर्घ्यं स्वधा एवं एतन् पाद्यं

नमः।

एवं माचमनीयं नमः॥ मूलम्॥

कालिके एष मधुपर्क स्वधा।

पुनराचमनीयं वं मूलमुचार्य इत्यन्ते स्नानादिकं दद्यात्।

ततो मूलेन पुष्पांजलि त्रयं दत्वा चरणान् पूजयेत्।

प्रथमत्रिकोणे॥

काल्यै नमः॥

कल्याल्यै नमः॥

कुल्लायै नमः॥

द्वितीय। तृतीये उग्रांउग्रप्रभां दीप्तां चतुर्थे नीलावलांवली कां
पंचमे मात्रा मुद्रां नित्यां चिन्त्ययेत् सर्वाश्यामा मुण्डमालाधरा

दक्षिणे वामे तर्ज्जनी धारयत्य चिन्त्ययेत्।

तादृ वहिर्ब्राह्मी नारायणी माहेश्वरी चामुण्डा कौमारी अपराजिता वाराहि
नारसिंहि एताः यथोक्तरूप चिन्तयेत्।

१६९ब्) मध्यकर्णिकायां पूर्वोक्तरूपां देवी महाकालं च चिन्तयेत्।

ततोर्घ्यपात्रमादाय पूर्वोक्तमन्त्रेणार्घ्यं दद्यात् ततो मूलेन
गंधादिना पुष्पाञ्जलि त्रयेत्।

यथाशक्ति मूलेन नैवेद्यम् दद्यात्।

ततोङ्ग पूजनं तद्यथा पूर्वलिखितं पंचदशकोणे ॐ काल्यै नमः।

ॐ कपालिन्यै नमः॥

ॐ कुल्यायै नमः॥

एवमपरत्रिकोणेषु यथा क्रमन्यस्तान् देवतां पूजयेत्।

तद्वहि मातृगणं न्यासक्रमेणार्चयेत्।

ततो देवी शिरसि मूलेन पुष्पचन्दनादिकं दत्वा सहस्त्रमष्टोत्तरशतं वा दशां वा मनुं जपेत्।

पुनर्देवी शिरसि पुष्पचन्दनं दत्वा विसर्जनमुद्रया विसर्जयेदिति संक्षेपः ॥

अथ काम्याति॥

नागयज्ञोपवीताश्च चन्द्रार्द्धकृतशेषरा।

जरामुक्तां च संचित्य महाकालसमीपगाम्॥ ११-४०५॥

कूर्चलज्जायुगं वीजं युगं तथैव च।

एवं संचिन्त्य देवीञ्च रक्तपुष्पै समचयेत्॥ ११-४०६॥

कामवानसमाविद्धा निर्लज्जा विह्वला स्त्रिया।

स्वं स्वं सत्यज्यभर्तारमलिङ्गन्ति सदैवतम्॥ ११-४०७॥

अन्ते दक्षिणकालिगे * * * ती सदैवतम्।

अन्ते दक्षिणकालि द्व इत्येति शेषः।

चकारादावपि।

लोहितां शूलहस्तानामेकां शूलं धरां पराम्॥ ११-४०८॥

महाकालाग्रसंस्था अध्यात्वा पुष्पैस्तु पीतकैः।

अभ्यर्च्यैकैकशश्चाद्ये तथैवान्तेपि यो जपेत्॥ ११-४०९॥

आकर्षणं भवेद् एवं सस्थावरण जङ्गमे।

पातालतलगंश्चापि किमन्यत् भूतल स्थितम्॥ ११-४१०॥

अकृष्टिमेति तत् सर्वं महाकाल वचो यथा।

१७०अ) एकैक शकुर्चादि वीजत्रयमितिः शेकः॥ ११-४११॥

कपिलां द्विभुजाकर्त्तीं कपालं मध्यदक्षिणे।

ध्यात्वा चैव हि सर्वस्य शेषे च द्वयमेव च॥ ११-४१२॥

एवं प्रजप्यपुष्पेन कृष्ननात्र प्रपूजयेत्।

भवेन् मावलने तेन द्यंदुदिश्च कृता क्रिया॥ ११-४१३॥

उच्चाटयमिति पङ्गाक्षी सन्नायति केकरा।

विद्रावयति मुक्ता स्या प्रोन्मत्तयति घूर्णिता॥ ११-४१४॥

विक्षोभयति संक्षुव धासंपातयति सन्नता।

संकोचयति संवद्धो रिपुवद्ध [रियु-] वा [धा] विरोधयेत्॥ ११-४१५॥

यं यं भावं जनोनेयस्तद् भावस्थां स्मरेदपि।

अत्र सर्वत्र कर्त्तव्यं भावमात्रस्य चित्तमम्॥ ११-४१६॥

तदघाटनाख्ये मे वात्रं सर्वत्रसुरतं मतम्।

स्नातशुक्रांवरधरः कृतकृत्य कृयोदि वा॥ ११-४१७॥

रात्रौ नगः शयानश्च मैथुने च व्यवस्थितः।

अथवा मुक्तकेशश्च ते सर्वार्थ प्रसिद्धयः॥ ११-४१८॥

स्तंभनं मोहनचैव वशीकरणमेव च।

नग्नां परस्त्रियं विक्ष्य प्रजपदेयुतं नरः॥ ११-४१९॥

सभवेत् सर्वविद्यानां पारगः सर्वदेव हि।

तस्य दर्सनमात्रेण वादितो निष्प्रभा मता॥ ११-४२०॥

गद्य पद्य मयी वाणी तस्य सर्वविधा भवेत्।

अथ मुक्तकेशश्च हविष्यं भक्षयेन्नरः॥ ११-४२१॥

प्रजपेद् अयुतं देव * * * प्रतिर्धिर्मतः।

अस्तोतरशतं जप्त्वा मुखमामत्रयत्नतः॥ ११-४२२॥

मुक्तास्यं यः प्रकुर्वीत धनधान्य सुतान्वितः।

सर्वविद्या रता श्रेष्टो भवे त्रैवात्रसंशयः॥ ११-४२३॥

ऋतुमस्या भगम्यश्यन् प्रजपेदयुतं नरः।

अनर्थिकापि तद् वाणी गद्यपद्यमयी भवेत्॥ ११-४२४॥

छन्दोवद्धा परन्तस्य वाणीरक्ता प्रजायते।

१७०ब)सुरतेत्यु च सप्तव्यं महापातक मुत्तये॥ ११-४२५॥

धनागमाय च तथा परा योषित् समागमेः।

यदि यो खिन्नसंसर्गे तदा रेतः प्रयत्नतः॥ ११-४२६॥

समुत्सार्य ततो जप्यं सर्वकामार्थसिद्धये।

श्मशानालयमागत्य मुक्तकेशो दिगंवरः॥ ११-४२७॥

जपेदयुतसंख्ययो सर्वकामार्थसिद्धय।

तत्रैव प्रातमाह्ययो जपेन् मत्रवित्तमः॥ ११-४२८॥

अयुतं मैथुना भूत्याविभीसत्व परायण।

सयाति परमां सिद्धि देवैरपि सुदुर्ल्लभम्॥ ११-४२९॥

आर्कर्सणं शिकारो वन्धनो चाटनादयः।

स्तंभनो मोहनश्चैव त्रसनं ह्वासनं तथा॥ ११-४३०॥

वाग्मित्वं च धनत्वं च वहुपुत्रं च मेव च।

वहुपुत्रभतां प्राप्य सर्वप्रियत्वमेव च॥ ११-४३१॥

सयाति खेचरत्वं च देवत्वमपि चैव हि।

नचरा नचरो गोवा नमृत्यु नचराभयम्॥ ११-४३२॥

नराप्रीति मनुप्यत्वे न च वाक्वायपातनम्।

अथवा सभवेन्नित्यं चतुर्विंशति सिद्धयः॥ ११-४३३॥

स्वदेहरुधिराक्तेन पवित्रेण सहस्रश।

श्मशानेभ्यर्च्य देविन्तु वागीशाममता व्रजेत्॥ ११-४३४॥

रत्तोयुक्तेन पत्रेण अभ्यर्चेहसहस्रश।

श्मशानेभ्यर्च्य देवी तु सर्वसिद्धि च विन्दति॥ ११-४३५॥

धनवान् वलवान् वाग्मि धर्मयो श्रियो भवेत्।

सुखी स्यान्न्पात्रसन्देहो महाकाल वचो यथा॥ ११-४३६॥

श्मशाने योषितं वीजं यद्यभ्यर्च्य सहस्रशः।

रक्तचन्दन पिङ्गाक्षी [पि * ङ्गी] रक्तपुष्पैरलंकृताम्॥ ११-४३७॥

तावपुष्पै वः * प्रोस्ये ततो ध्यायेन चण्डिकाम्।

ततो गत्वा भवेद्राज्यं यदि सा न पलायते॥ ११-४३८॥

श्मशान शयने चैव सरासनगतः पुनः।

१७१अ) असकृ च जपेन् मन्त्रं सर्वसिद्धि प्रदो भवेत्॥ ११-४३९॥

मेषमाहिषरक्तेन नवरक्तेन चैव हिः।

मृमार्जाररक्तेन वाग्मित्वं तस्य जायते॥ ११-४४०॥

चतोभिश्च तथा तद्वत् स्वकायिकमनेन च।

मैथुने नवयोखा या भगप्रक्षालने न च॥ ११-४४१॥

धनित्वं जायते तस्य सर्वा सिद्धिः प्रजायते।

वचसा सभवे जीवो धनेन च धनाधिपः॥ ११-४४२॥

आज्ञया देव राजासौ रूपे नैव मनोभवा।

वलेन पवनो ह्येष सर्वतत्त्वानुसाधकः॥ ११-४४३॥

साधिताधितं मांसं सास्थि दद्यात् सदावलिम्।

मृगमासं छागमासं मेषमाहिषमेव च॥ ११-४४४॥

सर्वं सास्थि प्रदातव्यं तथालोमसमान्वितम्।

जनखच्छिन्नसंजारं केशसमार्जनागतम्॥ ११-४४५॥

निवेदयेत् श्मशाने च सर्वसिद्धिप्रदं भवेत्।

नारीरजोयुतं दत्वा पर्णानां शतमुत्तमम्॥ ११-४४६॥

प्रत्येकं प्रजपेन्मन्त्रं ततस्तं होमयेद्वर।

युगानां मयुतं नं दक्षिणा पूजितो भवेत्॥ ११-४४७॥

सर्वसिद्धि भवेत्॥

सर्वसिद्धि भवे तस्य वाग्मीशश्य प्रजायते।

न तस्य दुर्ल्लभं किंचि पृथिव्यांयश्च विद्यते॥ ११-४४८॥

योनिरूपं च कुंडचै कृत्वा वितस्ति मानतः।

हस्तविस्तारितस्वैतै तं कृत्वा चापि तथाप्यथ॥ ११-४४९॥

तत्र कार्या हि तन्त्रेण वह्निस्थापिनि का क्रिया।

मश्रकालाय देवाय दद्यात् प्रथम माहतिम्॥ ११-४५०॥

धरं मांसेन चाज्येन रक्तेन च धरेन च।

कृष्नपुष्पे न साज्ये साजेन स्वरक्तेन विशेषतः॥ ११-४५१॥

आमिषादिभिरेप्येवं जुहुया श्मशानालये।

स्नातः शुक्रांवरधरः शुचिः प्रयतमानसः॥ ११-४५२॥

दिवा चैव प्रकर्त्तव्यं सर्वकामार्थसिद्धये।

१७१ब्) रात्रौ नग्नौ मुक्तकेशो मैथुनेपि व्यवस्थितम्॥ ११-४५३॥

द्विजानां चैव सर्वेषा द्विविधं चात्र कथ्यते।

शूद्राणां चैव सर्वेषां दिवारात्रौ महाव्रतम्॥ ११-४५४॥

महाकाले हुनेद्यत्नां पश्चादेवीं प्रयत्नतः।

त्रिधा विभज्यमन्त्राद्यै यत्नात् साधकसत्तमः॥ ११-४५५॥

मांसं रक्तं तिलं केशं नखं भक्तं च पायसम्।

आज्यं चेति प्रयत्नेन सर्वकामार्थसिद्धये॥ ११-४५६॥

एवं कृत्वा विधानेन भजन्ते सिद्धिमुत्तमम्।

यद्यत् प्रार्थयते तत्राद् आप्नोदाप्नोति नित्यशः॥ ११-४५७॥

दैवत्वं दानवत्त्वं च सिद्धिचारणता तथा।

सदा हुत्वा समाप्नोति नित्यमेव मतन्द्रितः॥ ११-४५८॥

इत्यलंविस्तरः॥

अथकाली सहस्रनाम॥

एतस्मिन्नेवकाले तु भृगुरामस्य पार्वती।

कार्त्तिवीर्यसुता सर्वे पितरं च क्षुद्रक्षणात्॥ ११-४५९॥

तच्छुत्वा रेण्डका वाक्यं जपदग्रेर्चिनाशनम्।

चक्रुर्भृगुश्च रामस्य कालान्तक यमोपमम्॥ ११-४६०॥

स्कन्दे परशुमादाय अतीवसुमनोहरम्।

पितुः शापोर्चितं कृत्वा व भ्रामजगतितले॥ ११-४६१॥

ततः कैलासमगमद्रामस्य परशुनासह।

तद्दृष्ट्वा साधकं श्रेष्टं शिवो वचनमब्रवीत्। ४६२॥

आगतोसि किमर्थत्वं कथयामासतत्त्वतः।

तस्य तद्वचनं श्रुत्वा रोषात् स्फुरितलोचनम्॥ ११-४६३॥

कथयामासतां सर्वः पितुशापोर्चितां क्रियाम्।

तदा मानसिसंकाय कालिकालविनाशिनी॥ ११-४६४॥

भृगुरामायतां विद्यां ददौ तस्मिन् सदाशिवः।

कथयामासकवचं क्षत्रियान्तकरं शुभम्॥ ११-४६५॥

१७२अ) यदा नामसहस्त्रं सः कथयामासतत्त्वतः।

यत् कल्या या पुरा प्रोक्तं स्वयं नामसहस्त्रकम्॥ ११-४६६॥

तत्सर्वं भृगुरामाय कथयामासशंकरः।

आराध्यदक्षिणा कालिं रामपरशुना सह॥ ११-४६७॥

पितुः शोकान्तदा देवी निक्षत्र्यामकरोम्यहम्।

त्रिसप्तकृत्वा कुपिता निक्षत्रादकरोन् महिम्॥ ११-४६८॥

स्यमं त पंचके चक्रे चक्रे शोणितो दानह्दास्ततः।

रक्तैर्मांसैस्तदा कालीं तपयामास तत्त्वत॥ ११-४६९॥

तदा भवति सन्तुष्टो देवी दानवनाशिनी।

शिव उवाच [उदाच]

कथितोयं माहामन्त्रः सर्वमन्त्रोत्तमोत्तमः॥ ११-४७०॥

या मासाद्य मया प्राप्तमैश्वर्यं पदमुत्तमम्।

संयुक्तः परया भक्त्या यथोक्तविधिना भवान्॥ ११-४७१॥

कुरातामर्चनं देव्या त्रैलोक्यविजिगीषया।

श्रीराम उवाच

प्रसनो यदि मे देव परमेश पुरा ततः॥ ११-४७२॥

रहस्यं परया देव्याः कृपया कथयप्रभो।

विनार्चनं विना होमं विना न्यासं विना वलिम्॥ ११-४७३॥

विना गन्धं विना पुष्पं विना नित्योदितां क्रियाम्।

प्राणायामं विना ध्यानं विभूतविशोधनम्॥ ११-४७४॥

विना जपं विना दानं यथा लि प्रसीदति।

श्रीशिव उवाच

पृष्टं त्वयोत्तमं प्राज्ञ भृगुवंशसमुद्भव॥ ११-४७५॥

भक्तानामभिभक्तोसि त्वमेव साधयिष्यसि।

देवी दानवकोटिघ्नी लीलाया रुधिरप्रियाम्॥ ११-४७६॥

सदा स्तोत्रं प्रियामुग्रां कामकौतुकलालसाम्।

सर्वदान हृदयामास वा सक्तमानसीम्॥ ११-४७७॥

माध्वी कमल्स्य मांसानुरागिणी वैष्णवी परा।

श्मशानवासिनी प्रेतगणमृत्युमहोत्सवाम्॥ ११-४७८॥

योगप्रभां योगिनीशां योगीं इ हृदयस्थिता।

तामुग्रकालिका नाम प्रसादयितु मर्हसि॥ ११-४७९॥

१७२ब्) तस्याः स्तोत्रं महापुण्यं स्वयं काल्या प्रकाशितः।

तव तत् कथयिष्यामि श्रुत्वा वत् सावधारय॥ ११-४८०॥

गोपनीयं प्रयत्नेन पठनीयात् परात्परम्।

यस्यैककालो पठनात् सर्वं विघ्नात् समाकुलाः॥ ११-४८१॥

नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः।

निशीथे मुक्तकेशास्तु नग्नशक्तिसमन्वितः॥ ११-४८२॥

मनसा चिन्तयेत् काली महाकाले न लालितम्।

पठेन् नामसहस्राक्षं स्तोत्रं मोक्षस्य साधनम्॥ ११-४८३॥

प्रसंना कालिका तस्य पुत्रत्वे नानुकंपते।

यथा ब्रह्मामृतैर्ब्रह्मा कुसुमैः पूजितैः पुरा॥ ११-४८४॥

प्रसीदति तथा तेन सदाकाली प्रसीदति।

अस्य श्रीदक्षिणकालिका स्तोत्रस्य महाकालभैरव-ऋषिः अनुष्टुप्छन्दः श्मशानकालिका देवता धर्मार्थकाममोक्षार्थै जपे विनियोगः।

ॐ नमः कालिकाभगवत्यै॥

श्मशानकालिकाकाली भद्रकाली कपालिनि॥ ११-४८५॥

गुह्यकाली महाकाली कुरु कुल्या विरोधिनी।

कालिका कालरात्रिश्च महाकालनितम्विनी॥ ११-४८६॥

कालभैरवनामा च कुलधर्मप्रकाशिनी।

कामदा कमिनी काम्या कमनीय स्वभाविनी॥ ११-४८७॥

कस्तूरी रसलोलाक्षी कुंजलेश्वरगामिनि।

ककारवर्णसर्वाङ्गी काकिनी कामसुन्दरी॥ ११-४८८॥

कामान्ता कामरूपा च कामधेनुः कलावती।

कान्ता कालस्वरूपा च कामाख्या कामपालिनी॥ ११-४८९॥

कुलीना कुलवत्यं वा दुर्गादुर्गतिनाशिनी।

कौमारी कुलजा कृष्णा कृष्णदेहा कृशोदरी॥ ११-४९०॥

कृशाङ्गी कुशलाङ्गी च क्ली काली कमला कला।

१७३अ) करालास्था कराली च कुलकान्ता पराजिता॥ ११-४९१॥

उग्रचोग्रतरा दीप्त विप्रचित्ता * * मना।

नीला घना मेघनादा महामुद्रामिता मिता॥ ११-४९२॥

ब्राह्मी नारायणी भद्रा सुभद्रा भक्तवत्सला।

माहेश्वरी च चामुण्डा वाराहि नारसिंहिका॥ ११-४९३॥

वज्राङ्गी वज्रवंकारी नृमुण्डा स्त्रविनाशिवा।

मालिनी नरमुण्डाली गलद्रक्तविभूषणा॥ ११-४९४॥

रक्तचन्दनक्ताद्गी सिन्दुरारुणमस्तका।

घोररूपा घोरदंष्ट्रा घोरघोरतरा युधा॥ ११-४९५॥

महादंष्ट्रा महामाया सुन्दरी युगदन्तुरा।

सुलोचना विरूपाक्षी विशाला त्रिलोचना॥ ११-४९६॥

शारदेन्दु प्रसन्ना स्यात् स्फरत् स्मरां व्रजेक्षणा।

अट्टहास्या प्रसन्ना स्यात् स्फुरत् स्मरांवुजेक्षणा॥ ११-४९७॥

अट्टहास्या प्रसन्नास्या स्मरवत्कामुभाषिणी।

प्रसन्नपद्मवदनाः सितास्या प्रियभाषिणी॥ ११-४९८॥

प्रसन्नपद्मवदनाः सितास्या प्रियभाषिणि।

कोटराक्षी कुलश्रेष्टा महति वहुभाषिणि॥ ११-४९९॥

सुमतिः कुमतिश्चण्डा चण्डातिवेगिनी * *।

प्रचण्डा चण्डिका चण्डि चर्चिका चण्डवेगिनी॥ ११-५००॥

सुवेशी मुक्तकेशी च दीर्घकेशी महाकचा।

प्रेतदेहकर्णपूरा प्रेतपाणिसुमेखला॥ ११-५०१॥

प्रेतासना प्रियप्रेता प्रेतभूमि कृता लया।

श्मशानवासिनी पुण्या पुण्यदा कुलमण्डिता॥ ११-५०२॥

पुण्यालया पुण्यदेहा पुण्यश्लोका यशस्विनी।

पूता पवित्रा परमा परा पुण्यविभूषणा॥ ११-५०३॥

पुण्यनाम्नीभीतिहरिवरदा खङ्गपालिनी।

नृमुण्डहस्ता मछस्त्रा छिन्नमस्ता सुतासिका॥ ११-५०४॥

द * * * *? सकलाश्यामा इतन्तापिनोन्नतस्तनी। (?)

१७३ब) दिगंवरा घोररावा सिक्तां तारक्तवाहिनि॥ ११-५०५॥

घोररावा शिवासंगी विसंगी मदनातुरा।

महाप्रमस्ता प्रमदा स्वधा सिन्धुर्निवासिनी॥ ११-५०६॥

अतिमत्त्वा महामत्ता सर्वकारणकारिणी।

गीतप्रिया वाद्यरता प्रेता नृत्य परायणा॥ ११-५०७॥

चतुर्भुजा दशभुजा अष्टादशभुजा तथा।

कात्यायनि जगन्माता जगती परमेश्वरी॥ ११-५०८॥

जगद्बंधुर्जगधात्रि जगदानन्दकारिणी।

जगजीवमयी हैमवती मायाहामहि॥ ११-५०९॥

नागयज्ञो पवीताङ्गि नागिनी नागदायिनी।

नागकन्या देवकन्या गान्धारिकिन्नरीश्वरि॥ ११-५१०॥

मोहरात्रिर्महारात्रि वारुणी भास्वरीस्वरी।

विद्याधरी वसुमति यक्षिणी योगिनीजरा॥ ११-५११॥

रक्षसी डाकिनी वेदमयी वेदविभूषणा।

श्रुतिस्मृति महाविद्या गुह्यविद्या पुरातनी॥ ११-५१२॥

चिन्त्या चिन्त्य स्वधा स्वाहा निद्रां तन्द्रा च पार्वती।

अर्पणा निश्चला लोला सर्वविद्या तपस्विनी॥ ११-५१३॥

गंगा काशी शचिसीना सतिसत्यपरायणा।

गीतिः स्वनीतिः स्वरूचिस्तुष्टिः पुष्टिर्धृतिः क्षमा॥ ११-५१४॥

वाणीवुद्धिर्महालक्ष्मी लक्ष्मी लीला सरस्वती।

स्त्रोतस्वती सारती मातङ्गी विजया जया॥ ११-५१५॥

नद्धा सिन्धु सर्वमयी तारा शून्यनिवासिनि।

श्रद्धा तरङ्गिनि मेधा डाकिनी वहुरूपिणि॥ ११-५१६॥

सुनन्दा नन्दिनिस्तुत्या स्तवनीय स्वरूपिणी।

रकिनी टंकिनि चित्रा विचित्राचित्रभूषणी॥ ११-५१७॥

पद्मा पद्मालया पद्ममुखी पद्मविभूषणा।

१७४अ) हाकिनी शाकिनी शान्ता राकिनी रुधिरप्रिया॥ ११-५१८॥

भ्रान्तिर्भवानि रुद्राणि स्वडानि शत्रुमर्द्धिनि।

उपेन्द्राणी महेशानि ज्योत्स्ना च चन्द्ररूपिणि॥ ११-५१९॥

सूर्यात्मिका रुद्रपत्नि रौद्रिस्त्री प्रकृति पुमान्।

शक्तिर्मुक्तिर्मुक्तिर्मतिमुक्तिः मुक्ति पतिव्रताः॥ ११-५२०॥

सर्वेश्वरी सर्वमाता शर्वाणी हरवल्लभा।

सर्वज्ञा सिद्धिदा सिद्धा भव्या भव्या भयापहा॥ ११-५२१॥

कर्त्त्री हर्त्ति पालयित्री शर्वरी नामसी दया।

तमिस्रा तामसीस्था तु स्थिरा धीरा तपश्विनी॥ ११-५२२॥

चाङ्गाङ्गी चंचला लोलजिह्वा चारुचरित्रिणी।

उपा उपावती लज्जा विलज्जा ह्रीरेजोमुखी॥ ११-५२३॥

सरस्वती धर्मनिष्टा श्रेष्टा निष्टरवादिनि।

गरिष्टा रुष्टसंहर्त्रि विशिष्टा श्रेयसी घृणा॥ ११-५२४॥

भीमा भयानका भीमनादिनिभीः प्रभावति।

वागीश्वर्यी श्रीर्यमुनायज्ञहर्त्ती यंजुपिया॥ ११-५२५॥

ऋक् सामर्थ व निलया रागिनिश्वेभनस्वरा।

कालकंठं कंवुकंठि वेणा परायणा॥ ११-५२६॥

वशिनी वैष्णवी स्वछा धरित्री जगदेश्वरी।

मधुमति कुडलिनि-ऋद्धि सिद्धिः शुविः स्मृता॥ ११-५२७॥

रंभार्वशी रतिरामा रोहिणिरेवति मघा।

शखिनी चक्रिणि हृष्टा गादिनि पद्मिनी तथा॥ ११-५२८॥

शूलिनी परिघास्त्रा च पाशिनी शार्ङ्गपालिनि।

पिनाकधारिणिधुम्रा शरभीषनमालिनी॥ ११-५२९॥

रथिनी समरे प्रीता वेगिनी रण पंचला।

जर्दिनी वज्रिनी नीला भवान्या वुद्धि चण्डिका॥ ११-५३०॥

वलिप्रिया महापूज्या पूर्णदैत्येन्द्रसाथिनी।

महिवा स्वरसंहत्री वशिनी रक्तदन्तिका॥ ११-५३१॥

१७४ब) रक्तया रुधिरक्ताङ्गी रक्तखर्परहस्तिनि।

रक्तप्रिया मांसरुचिरा सवासक्तमानसा॥ ११-५३२॥

गलच्छाणि न मुंडाली कण्ठमाला विभूषणा।

शवासना चितान्तस्था महिषि वृषवाहिनी॥ ११-५३३॥

व्याघ्रत्वगं वराचीनी वेरिणी सिंहवाहिनी।

वामदेवी महादेवी गौरी सर्वज्ञभाविनि॥ ११-५३४॥

वलिंकात्तरुणी वृद्धा वृद्धमाता जरातुरा।

सुभ्रर्विलासिनी ब्रह्मवादिनी ब्रह्मणीमहि॥ ११-५३५॥

स्वप्नावति चित्रलेखा लोपामुद्रा स्वरेश्वरी।

अमोघा रूधती तीक्ष्णा भोगवत्यु तु रागिनि॥ ११-५३६॥

मन्दाकिनि मदहा सा ज्वाला मुख्यस्वरान्तका।

मनदा मानती मान्या माननीया मदोद्धता॥ ११-५३७॥

मदिरामेदुरोन्मादा मेध्या माध्या प्रमादिनि।

सुमेध्या नंनगुणिनी सर्वलोकोत्तमोत्तमा॥ ११-५३८॥

जयदा जिन्त्वरा जैत्री जय श्रीर्जयशालिनी।

शुभदा सुखदा सत्या सदासंक्षोभकारिणी॥ ११-५३९॥

शिवादूती भीतिमति विभूतिभूषणानना।

कौमारी कुलजाकुन्ति कुलस्त्रा कुलपालिका॥ ११-५४०॥

कार्मिर्यशस्विनी भूषा भव्या भूतपति प्रिया।

सट्गुणानिगुणा वृष्टा निष्टा काष्टप्रतिष्टिता॥ ११-५४१॥

धनिष्टा धनदा धान्या वसुधा सुकाशिनि।

दुर्वी? गुर्वी गुरुश्रेष्टा निर्गुणं त्रिगुणात्मिका॥ ११-५४२॥

राजप्रजा महाप्रज्ञा षट्गुणानिर्गुणात्मिका।

महाकुलीना निष्कामा मुकामा कामजीविनी॥ ११-५४३॥

कामदेव कला रामाभिरामा शिवनर्त्तकी।

चिन्तामणिः कल्पलता जाग्रती दीनवत्सला॥ ११-५४४॥

कार्त्तिकी कृतिका कृत्या अयोध्या विषभासमा।

१७५अ) सुमन्त्रा मन्त्रिणी पूर्णा ह्लादिनी क्लेशनाशिनी॥ ११-५४५॥

त्रैलोक्यजननी कृष्ना निर्मांसा कालरूपिणी।

तडाकनिस्तजठरा शुष्कमांसास्थि मालिनी॥ ११-५४६॥

अवती मधुरा हृद्या त्रैलोक्य व्यापिनीश्वरि।

व्यक्ता व्यक्तानेकामूर्त्ति शरभी भीमनादिनी॥ ११-५४७॥

क्षेमंकरी शंकरी च सर्वसमोहकारिणी।

ऊर्द्धतेजस्विनि क्लिन्ना महातेजस्विनी तथा॥ ११-५४८॥

अध्वैतागिनी पूज्या सुभि * सर्वमङ्गला।

सर्वं प्रियंकरी भोग्या ध्रणी पिशिताशना॥ ११-५४९॥

भयंकरी पायहरा निष्कलंका व शंकरी।

आसा तृशा चंद्रकला तंरुणा वायुवेगिनी॥ ११-५५०॥

सहस्त्रसूर्यसंकाशा चन्द्रकोटिसमप्रभा

वह्निमण्डलमध्यस्था सर्वसन्त्व प्रतिष्ठिना॥ ११-५५१॥

सर्वाचारवती सर्वे देवकन्याति देवता।

दक्षकन्या दक्षयज्ञनाशिनि दुर्गा तारिणी॥ ११-५५२॥

इज्या पूज्या विभीर्भूति सत्कीर्त्ति व्रह्मरूपिणी।

रंभो रुचिकरा कारा जयति वरुणा कुहुः॥ ११-५५३॥

मनस्विनी वेदमाता यशस्या ब्रह्मचारिणी।

सिद्धिदा बुद्धिदा बुद्धिः सर्वाढ्या सर्वदायिनी॥ ११-५५४॥

अगाधरूपिणी धेया मूलाधारनिवासिनी।

आज्ञा प्रज्ञा पूर्णमनाश्चन्द्रमुख्यानुकुलिनि॥ ११-५५५॥

चावधूका निम्ननाभि सत्यसंधा दृढव्रता।

आन्विखिकी दण्डनीतित्रयी त्रिविधसुन्दरि॥ ११-५५६॥

ज्वलिनी ज्ञानिनी शैलतनया विंध्येवासिनी।

प्रत्यक्षा खेचरा धैर्या तुरीया विमला तुला॥ ११-५५७॥

प्रगल्भाषारूणी छाया वशिनी विस्फुलिङ्गिनी।

भुक्तिः सिद्धिः सदा प्राप्ति प्रकाम्या महिमाणिमा॥ ११-५५८॥

१७५ब्) इछासिद्धिर्वशित्वा च ईशिन्वोर्ध्वनिवासिनी।

लघ्रिमा चैव गायत्रि सावित्रि भुवनेश्वरी॥ ११-५५९॥

मनोहराविताद्व्यिा देवदारा मनोरमा।

पिंगला कपिला जिह्वा रसज्ञा रसिका सा॥ ११-५६०॥

सुषुम्णोटा योगवती गांधारी नरकान्तका।

पंचाली रूक्मिनी राधा राध्या भीमाधिकारिका॥ ११-५६१॥

अमृता तुलसी वृन्दा कैटभी कपटेश्वरी।

उग्रचण्डेश्वरी वीरजननी विरसुन्दरी॥ ११-५६२॥

उग्रतारायणी दक्षा देवकी देवमानिनी।

निरंजना चिता देवी क्रोधिनी कुलदीपिका॥ ११-५६३॥

कुलवागीश्वरी ज्वाला मातृका द्राविणी द्रवा।

योगिश्वरी महाभ्रामरी विदुरूपिणी॥ ११-५६४॥

दूती प्राणेश्वरी गुप्ता वहुत्वा भ्रमरी प्रभा।

कुब्जिका ज्ञानिनी ज्येष्ठा भुसुण्डी प्रकटाकृतिः॥ ११-५६५॥

द्राविणी गोपिनी माया कामवीजेश्वरी प्रिया।

शाकंवरी कोकनदामुसुला स्त्रा तिलोत्तमा॥ ११-५६६॥

अमीया विक्रमा क्रूरा संविछोला त्रिविक्रमा।

स्वस्तिहव्यवहा प्रीति उष्मा धूमा विरंगदा॥ ११-५६७॥

तपिणी तापिनी विश्वा भोगदा भोगधारिणी।

त्रिखण्डा वोधिनी वश्या सकलाशब्दरूपिणी॥ ११-५६८॥

वीजरूपा महामुद्रा वशिनी योगरूपिणी।

अनंगमदनानंग रेखानंगा कुसेश्वरी॥ ११-५६९॥

अनंगमालिनी कामेश्वरी सवार्थसाधका।

सर्वमन्त्रमयी मोहन्यरूपानंगरूपिणी॥ ११-५७०॥

वज्रेश्वरी च जपिनी सर्वद्वंद्वक्षयंकरी।

षडंगयोगयुवती युक्ता ज्वाला सुमालिनी॥ ११-५७१॥

दुराशया दुराचारा दुर्जया दुर्गरूपिणि।

१७६अ) दुरान्ता दुष्कृतिहरा उर्ध्ये या दुरतिक्रमा॥ ११-५७२॥

हंशेश्वरी त्रिकोणस्था नाकं भर्यानुकंपिनी।

त्रिकोणनिलया नित्या परमामृतरंजिता॥ ११-५७३॥

महाविश्वेश्वरी श्वेता भीरुण्डा कुलंसुन्दरी।

त्वरिता भक्तिसंयुक्ता भक्तिवश्या सनातनी॥ ११-५७४॥

भक्तानन्दमयी भक्त भविता भयशंकरी।

सर्वसौन्दर्यनिलया सर्वसौभाग्य शालिनि॥ ११-५७५॥

सर्वसंभोगभवना सर्वसौख्यैनिरूपिणी।

कुमारी पूजनरता कुमारी प्रेतदायिका॥ ११-५७६॥

कुमारी भक्तिसुखिनी कुमारी रूपधारिणी।

कुमारी पूजकप्रीता कुमारी प्रेतदा प्रिया॥ ११-५७७॥

कुमारी सेवका संवा कुमारि सेवकालया।

आनन्दभैरवी भालभैरवी वटुभैरवी॥ ११-५७८॥

श्मशानभैरवी कालभैरवी पुरभैरवी।

महाभैरव पत्नि च परमानन्दभैरवी॥ ११-५७९॥

सुरानन्दभिरवी च उन्मदानन्दभैरवी।

तथा सुकौलभैरवी ज्ञानानन्दसुभैरवी॥ ११-५८०॥

महाभयंकरी तीव्रतीव्रवेगातरस्विनी।

त्रिपुरा परमेशानी सुन्दरी पुरसन्दरि॥ ११-५८१॥

त्रिपुरशा पंचदशी पंचमी पुरवासिनी।

महासप्तादशी चैव षोडशी त्रिपुरेश्वरी॥ ११-५८२॥

महाकुशस्वरूपा च महाचक्रेश्वरी तथा।

नवचक्रेश्वरी चक्रेश्वरि त्रिपुरमालिनी॥ ११-५८३॥

राजराजेश्वरी धीरा महात्रिपुरसुन्दरी।

सिन्दूरापूररूचिरा श्रीमत्त्रिपुरसुन्दरि॥ ११-५८४॥

सर्वाङ्गसुन्दरी रक्तारक्तवस्त्रातरायणी।

यवायावक सिन्दूररक्तचन्दनधारिणी॥ ११-५८५॥

चामरी वारकज्ज्वलनिर्मलश्यामकेशिनी।

१७६ब) वज्रमौक्तिकरक्ताढ्या किरीटमुकुटोज्वला॥ ११-५८६॥

रक्तकुण्डलसंयुक्ता स्फुरचण्डा मनोरमा।

कुलेश्वरकुंभोक्ता मुक्ता रंजितनासिका॥ ११-५८७॥

मुक्ता विद्रुममाणिक्य हाराढ्या स्तनमण्डला।

सूर्यकातेन्दुकान्ताढ्या सुरश्मिकण्ठभूषणा॥ ११-५८८॥

वीजं पूरस्फुरत् पूरन्दती पंक्तिरनुत्तमा।

कामको चन्द्रकाभुग्न भुकटाक्षा प्रवर्षिणी॥ ११-५८९॥

मातङ्गकुंभवक्षो जालसत्कोकरदीक्षणा।

मनोजशं कुलीकर्णहंसगीति विद्रंविनि॥ ११-५९०॥

पद्मगंगाधरद्योत दोश्चतुक्य प्रकाशिनि।

नानामणिपरिस्फुर्ज छूद्धकांचनकंकिनि॥ ११-५९१॥

नागेन्द्रदन्तनिर्माण वलयान्ति न पाणिनी।

अंगुलियकचित्ताङ्गं विचित्रक्षुद्रघंटिका॥ ११-५९२॥

पयंवरपरीधाना कलमंजिररंजिता।

कर्पूरागुरुकस्तूरी कुंकुमद्रवलेपिता॥ ११-५९३॥

विचित्ररत्न पृथिवी कलुषा खातल स्थिता।

रत्नद्वीपा स्फुरद्रत्नसिंहा * न निवासिनी॥ ११-५९४॥

षड्वक्रभेदनकरी परमानन्दरूपिणी।

सहस्रदलपद्मान्तश्चन्द्रमण्डलवर्त्तिनी॥ ११-५९५॥

ब्रह्मविष्णुशिव क्रीडा नानासुखविलासिनि।

हरिविष्णुविरिं चन्द्रग्रहनायकसेविता॥ ११-५९६॥

आत्मयोनिर्जगद्योनि ब्रह्मयोनिरयोनिजा।

भगरूपा भगस्था त्रिभगिनि भगवासिनी॥ ११-५९७॥

भगात्मिका भगाधारा रूपिणी भगमालिनी।

लिंगाभिध्यापिनी लिंगप्रिया लिंगनिवासिनि॥ ११-५९८॥

लिंगस्था लिंगिनी लिंगरूपिणी लिंगसुन्दरी।

१७७अ) लिंगस्था लिंगिनिलिंगप्रिया लिंगमकांक्षिणाम्॥ ११-५९९॥

शिवा शैवी च रुद्राणी शिवी व शिव नादिनी।

मातंगी त्रमरी माता मालवानतमालिनी॥ ११-६००॥

डागिनी योगिनि चैव तथा योगिनमस्कृता।

माहेश्वरी वैष्णवी च भ्रामरी शिवरूपिणि॥ ११-६०१॥

अलं स्वधा वेगवति क्रोधरूपा सुमेखला।

गान्धारि गजजिह्वा च इन्द्रा चैव शुभंकरी॥ ११-६०२॥

पिंगला ब्रह्मदूति च सुषुम्ना चैव गंधिनी।

लिंगस्था चैव लिंगेशी त्रिपुराभैरवी तथा॥ ११-६०३॥

लिंगस्था लिंगनीतिश्च लिंगगीतिस्तथैव च।

लिंगमाला लिंगभवा लिंगलिंगाय पार्वती॥ ११-६०४॥

भगवति कौशिकी च प्रेमा चैव प्रियंवदा।

गृद्ध्रेशा शिवरूपा च चक्रेशी चक्ररूपधृक्॥ ११-६०५॥

लिंगगीतिर्महाप्रीति भगगीति मदारति।

लिंगनाम सदानन्दा भगनामा सदारति॥ ११-६०६॥

लिंगमालकठभूषा भगनामा सदारतिः।

लिंगमाला कण्ठभूषा भगमालाविभूषणा॥ ११-६०७॥

भगलिङ्गमृतप्रीता भगलिंगामृतात्मिका।

भगलिंग च न प्रीता भगलिंगामृतात्मिका॥ ११-६०८॥

भगलिंगार्चन पीता भगलिंगामृतात्मि *।

भगलिंगार्चन प्रीता भगलिंगस्वरूपिणि॥ ११-६०९॥

भगलिंगस्वरूपा च भगलिंगसुखावहा।

स्वयंभूः कुसुमप्रीता स्वयंभूः कुसुमार्चिता॥ ११-६१०॥

स्वयभू कुसुमप्राणा स्वयंभू कुसुमोत्थिता।

स्वयंभुकुसुममस्नात्वा स्वयंभूः कुसुमार्पिता॥ ११-६११॥

स्वयंभूः पुष्पघटितां स्वयंभूः पुष्पधारिणी।

१७७ब्) स्वयंभूः पुष्पतिलका स्वयंभूः पुष्पचर्चिता॥ ११-६१२॥

स्वयंभूः पुष्पनिरता स्वयभूः कुसुमग्रहा।

स्वयंभूः पुष्पयज्ञा शा स्वयंभुः कुसुमात्मिका॥ ११-६१३॥

स्वयंभूः पुष्पनिलया स्वयंभूः कुसुमप्रिया।

स्वयंभूः कुसुमाधारि लालसोन्मत्तमानसा॥ ११-६१४॥

स्वौंभूः कुसुमानन्द लहरिस्निग्धदेहिनि।

स्वयंभूः कुसुमाधारा स्वयंभूः कुसुमालया॥ ११-६१५॥

स्वयंभूः पुष्पनिलया स्वयंभूः पुष्पवासिनि।

स्वयंभू कुसुमास्निग्धा स्वयंभूः कुसुमोत्पुका॥ ११-६१६॥

स्वयंभूः पुष्पहारा च स्वयंभूः पुष्पमालिका।

स्वयंभूः कुसुमन्या सा स्वयंभूः कुसुमप्रभा॥ ११-६१७॥

स्वयंभू कुसुमज्ञाना स्वयंभूः कुसुमव्रता।

स्वयंभूः कुसुमध्याना स्वयंभू पुष्पभोगिनी॥ ११-६१८॥

स्वयंभूः कुसुमोल्लासा स्वयंभूः पुष्पवर्षिणी।

स्वयंभूः कुसुमोनादा स्वयंभू कुसुमव्यग्रा॥ ११-६१९॥

* * * * * * * * स्वयंभूः पुष्पपूजिता।

स्वयंभूः पूजक प्रज्ञा स्वयंभूः होतृमातृका॥ ११-६२०॥

स्वयंभू रुधिरकर्त्ति स्वयंभू भक्तिभाविना।

स्वयंभू पूजकग्रस्ता स्वयंभूः पूजकप्रिया॥ ११-६२१॥

स्वयंभूर्वदकाधारा स्वयंभूर्नदिकारका।

स्वयंभूः प्रद सर्वस्वा स्वयंभूः प्रद पुत्रिणी॥ ११-६२२॥

स्वयंभूः प्रद समेचा स्वयंभूः प्रद वैरिणी।

सर्वलिकोद्भव प्रेता सर्वकालोद्भवा * *॥ ११-६२३॥

कुण्डपुष्पे सदा प्रीतो गोलपुष्पसदा रतिः।

कुण्डगोलोद्भव प्रेता कुण्डगोलोद्भवात्मिका॥ ११-६२४॥

स्वयंभूर्वा शिवाधात्री पावनिलोकपावनि।

कीर्त्तिर्वशश्विनीमिधाशुक्सुन्दरी * * * *॥ ११-६२५॥ (?)

१७८अ) सुखदा मोक्षदा मोक्ष मोक्षदान्मप्रकाशिनि।

शुक्राधारा शुक्ररूपा शुक्लसिन्धुर्निवासिनी॥ ११-६२६॥ [शुक्राधारा शुक्ररूपा शुक्रसिन्धुर्निवासिनि।]

शुक्रालया शुक्रभोगा शुक्रपूजा सदा रतिः।

शुक्रपूज्या शुक्रहोमा सन्तुष्टा शुक्रवत्सला॥ ११-६२७॥

शुक्रमूर्त्तिः शुक्रकरी शुक्रपूजकपुत्रिदा।

शुक्रस्था शुक्रिणी शुक्रसंपुटा शुक्रसुन्दरि॥ ११-६२८॥

शुक्रस्नाता शुक्रदेहा शुक्रतुष्टाति शुक्रिणी।

महाशुक्राशुक्रभवा शुक्रवृष्टिर्विधायिनी॥ ११-६२९॥

शुक्राभिषेया शुक्राहा शुक्रकन्दरवर्जिता।

शुक्रानन्दकरी शुक्रा सदानन्दविधायिनी॥ ११-६३०॥

शुक्रोत्सवा सदा शुक्रा पूर्णा शुक्रमनोरमा।

शुक्रपूजकसर्वस्वा शुक्रनिन्दकनाशिनी॥ ११-६३१॥

शुक्रात्मिका शुक्रशंख छुक्रकर्षणकारिणी।

शारदा साधकप्राणा साधकासक्तमानसा॥ ११-६३२॥

साधकानन्दसन्तोषा साधकार्थिविनाशिनी।

साधकोत्तमसर्वस्वा साधकान्तकरी कृपा॥ ११-६३३॥

आत्मविद्या ब्रह्मविद्या परंब्रह्मकुटुंविनि।

त्रिकूटस्था पंचकूटा सर्वकूटा [सर्वकूटा] शरीरिणी [श * रिणी]॥ ११-
६३४॥

सर्ववर्णमयीवर्ण जपमाला विधायिनी।

१००० सहस्रनाम॥

श्रीशिव उवाच

इति श्रीकालिका नाम्नां सहस्रं शक्तिभाषितम्॥ ११-६३५॥

गुह्याद्गुह्यतरं मासान् महापातकनाशनम्।

पूजाकाले निशीथे च संध्येयोरूभयोरपि॥ ११-६३६॥

१७८ब) लभते गाणपत्यं स यः पठेत् साधकोत्तम।

यः पथेत् पाठयेद् वापि श्रृणोति श्रावयेदपि॥ ११-६३७॥

सर्वपापविनिर्मुक्तोः सयाति कालिकापदम्।

श्रद्धया श्रद्धया वापि यः कश्चिन् मानवः पठेत्॥ ११-६३८॥

दुर्गा दुर्गरतीत्वा देव्याः पार्श्ववरो भवेत्।

वंध्या वा काकवंध्या वा मृतवत् सा च याङ्गना॥ ११-६३९॥

श्रुत्वा स्तोत्रमिदं पुत्रां लभते चिरजीविनः।

यं यं कामयते कामं पठे स्तोत्रमनुत्तमम्॥ ११-६४०॥

देवी वरप्रसादेन तं तं प्राप्नोति नित्यशः।

स्वयंभूः कुसुमैः शुक्रैः सुगन्धिः कुसुमान्वितैः॥ ११-६४१॥

यवा यावकसिन्दूररक्तचन्दनसंयुतैः।

मत्स्यमासादिभिर्घोरं मधुमिः साज्यपायसैः॥ ११-६४२॥

भक्तौ पनीतै मन्त्रेण साधितैः मुक्तिभिः सहः।

पंचोपचारैर्नैवेद्यैर्वलिभिर्वकुशोणितैः॥ ११-६४३॥

दीपै धूपै महादेवी पूजयित्वा मनोरमैः।

जप्त्वा महामनुस्तोत्रं पठेद् भक्तिः समन्वितः॥ ११-६४४॥

अमन् पंचैता स्थिरधीर्मुक्तकेशो दिगंवरः।

शवारूढश्चित्तास्थे वा श्मशानालयमागतः॥ ११-६४५॥

शून्यालयगतो वापि शय्यस्थो वा शिवात्सुक।

सभवेत् कालिका पुत्र इति ख्यातिमुपागतः॥ ११-६४६॥

सर्वविद्यावतां श्रेष्ठो धने नवधनाधिप।

वायुतुल्यवलो लोके दुर्जयः शत्रुमर्दनः॥ ११-६४७॥

सर्वसंकटमुद्दीर्णः सर्वः सिद्धिः समन्वितः।

मधुमत्याः स्वयं देव्याः संव्यमानो स्मरोमः॥ ११-६४८॥

महेश इति योगेन्द्रः सर्वसत्वपुरश्कृता।

कामिनी मरूयोसौ सर्वमारीषुकर्षकः॥ ११-६४९॥

१७९अ) जलसूर्येन्दुवायुना स्तंभको राजवल्लभः।

यशस्वी सत्कृविधीर्मांसमत्री कोकिलस्वन॥ ११-६५०॥

वहुपुत्री गजाश्वानामीश्वरो धार्मिकः कृति।

मार्कडेय इवायुष्मान् जरापलितवर्जितः॥ ११-६५१॥

नवयौवनयुक्तः स्याद् अपिवर्षसहस्रवान्।

वहुकिंकथ्यतां तस्य पठतस्तव मुत्तमम्॥ ११-६५२॥

नकिंचिद्दुर्लभलोकं यद्यन्मनसिकल्पितम्।

ब्रह्महत्या [ब्रह्म*त्या] सुरापानं तेयं गुर्वंगनागमः॥ ११-६५३॥

सर्वमान् सुरत्येव स्तवस्यास्य प्रसादतः।

रजस्वला भगं पश्यन् जप्त्वा कालिं महामनुम्॥ ११-६५४॥

स्तवेनानेन संस्तुत्वा साधका किं न साधका।

रिरदारपरो वापि मनुं जप्त्वा पठे स्तवम्॥ ११-६५५॥

कुवेर इति विताढ्यो जायते मदनोपमः।

अष्टोत्तरशतं जप्त्वा योनिमामन्त्र्यसात्ववित्॥ ११-६५६॥

संगम्यपठनादस्य सर्वविद्याश्वरो भवेत्।

दिगंवरो मुक्तकेशः शर्यस्थो मिथुने नरः॥ ११-६५७॥

जप्त्वा स्तुत्वा महाकाली खेचरो जायते चिरात्।

यदि यो विदसंसर्गः तदा रेत प्रयत्नतः॥ ११-६५८॥

समुचार्य ततो जप्यन्ते नस्युः सर्वसिद्धये।

शुक्राचारणकाले व जपपूजा परायणः॥ ११-६५९॥

श्मशानकालिका स्तुत्वा वाणी चत् सकर्विभवे।

आलोकयश्चिन्तयत्वा विवस्त्रीं परयोविताम्॥ ११-६६०॥

जप्त्वा स्तुत्वा महाकालीं खेचरो जायते चिरात्।

सुरतेषु मनुं जप्त्वा स्तुत्वा भगवतिं शिवाम्॥ ११-६६१॥

सर्वपापपरित्यक्ता मानवः स्याच्छुकोपमः।

कुहुपूर्णेन्दु संक्रान्ति चतुर्दश्याष्टमिषु च॥ ११-६६२॥

१७९ब्) नवम्यां मङ्गलदिने पठेत् स्तोत्रं सुसाधकः।

भौमावस्या निशीथे व चतुष्पथगतो नरः॥ ११-६६३॥

मांसभक्तवलिं दत्वा सदुग्धामीनशौणितम्।

अष्टोत्तरशतं जप्त्वा पठेन्नामसहस्रकम्॥ ११-६६४॥

सौदर्शनो भवेदाशु देवगन्धर्वसेवितम्।

येनकेन प्रकारेण कालिभक्तिपरायण॥ ११-६६५॥

स्तंभयेदखिलां लोकान् राजानमपि मोहयेत्।

आकर्षये देवकन्या वशयेदपि केशरम्॥ ११-६६६॥

मानयेदखिलां लोकान् राजानमपि मोहयेत्।

आकर्षयेदेवकन्यां वरयेदपि केशवम्॥ ११-६६७॥

मारयेदखिलान् द्वेषानुच्चाटयति शास्त्रवान्।

नरं मार्जारमहिषछागमोषकशोणितैः॥ ११-६६८॥

सास्थिमासैः समधुभिः सामृतैर्दुग्धपायसैः।

योनिक्षालिनतोयेन भगलिङ्गामृते न च॥ ११-६६९॥

श्कैपूजा जपान्ते च काली सन्तर्पसाधकः।

सहस्त्रनामभिर्दिव्यैस्तौतिभक्तिपरायण॥ ११-६७०॥

मा तव कालिका तस्य सर्वत्रहितकारिणीम्।

परनिन्दा प्रद्रोह परवादपरायण॥ ११-६७१॥

खेलाय परतन्त्राय भ्रष्टाय साधकाय च।

शिवभक्तिय दुष्टाय दुषकाय दुरात्मन॥ ११-६७२॥

हरिभक्तिविहिनाय पररताय च * *।

पूजा जपविहीनाय परस्त्री निन्दकाय च॥ ११-६७३॥

नस्तवदर्शयर्दिव्यं सदृश्यं शिवहा भवेत्।

कुलीनाय महेछाय दुर्गाभक्तिपराय च॥ ११-६७४॥

वैष्नवाय विशुद्धाय भवभक्ताय मन्त्रिणे।

अद्वैतानन्दरूपाय निवेदितरताय च॥ ११-६७५॥

दद्यात्स्तोत्रं महाकाल्या साधकाय तदाज्ञया।

१८०अ) ब्रह्मविष्णुमहेशानामभेदन महेश्वरी॥ ११-६७६॥

समत्रा नाचयेन् मैत्री महोशो नात्रसंशयः।

यः शक्तः शिवभक्ताश्च स एव वैष्णवोत्तमः॥ ११-६७७॥

संपूज्यस्तौतियः काली मद्धैतभावना वहत्।

दिव्यानन्देन सानन्दा देवी भक्त्यै व भक्तिमान्॥ ११-६७८॥

स एव धन्या यस्यार्थे महेशो व्यग्रमानसः।

कामयित्वा यथा मस्तवमेनमुदीरयेत्॥ ११-६७९॥

सर्वरोगपरित्यक्तो जायते मदनोपमः।

चक्रं वास्तवमेनं वा धारयेदंगसंगतम्॥ ११-६८०॥

विलिख्य विधिवत् साधुः स एव कालिकातनुः।

देव्या निवेदिनं यन्नत् सर्वं भक्षयेन्नरः॥ ११-६८१॥

दिव्यदेहधरा भूत्वा देव्या पार्श्ववरो भवेत्।

नैवेद्यनिन्दकं दृष्ट्वा नृत्यन्ति योगिनिगणि॥ ११-६८२॥

रक्तपानोदिता सर्वा मांसास्थिचरणोद्यता।

तस्मा निवेदितं देव्यै दृष्ट्वा स्तुत्वा तु मानवः॥ ११-६८३॥

ननिन्देन् मनसा वाचा सर्वव्याधिपराङ्मुख।

आत्मानं कालिकात्मानं भावयत् सौति मानव॥ ११-६८४॥

शिवोपमं गुरुध्यात्वा स एवास्ति सदाशिवः।

यस्या लये तिष्ठति नुनमेतस्तोत्रं भवान्या लिखितं विधिज्ञैः।

गोरोचना रक्तकुकुंकुमाङ्ककर्पूरसिन्दूरमधुद्रवण।

नेत्रत्रचौरस्य भयं नदस्यो मनोरथो नासनवह्निभीति।

उत्पातवो यारपि नात्र शंकालक्ष्मी।

स्वयं तत्र वसेदलोला॥

स्तोत्रं पठेन्नै तदनन्तपुण्यं कालिपदांभोजपरामनुष्यः।

विधानपूजार्वस्य शेषे ठद्वयमेव च॥ ११-६८५॥

१८०ब्) एवं संपुज्य पुष्पेण कृष्णे नात्र प्रपूजयेत्।

भवेन् मारणमेतेन यमुद्दिश्य कृता क्रिया॥ ११-६८६॥

उच्चाटचति पिंगाक्षि सन्त्रासयति केकरा।

विद्रावयति मुक्तास्या प्रोन्मादति घूर्णिता॥ ११-६८७॥

संक्षोभयति सशुब्धा संवातयति सन्तनता।

संका च यति संयच्चा विप्रवुद्धा विवोधयेत्॥ ११-६८८॥

यं यं भावं जनोनेयस्तद् भावस्तां स्मरेदपि।

अत्र सर्वत्र कर्त्तव्यं भावमात्रस्य चिन्तनम्॥ ११-६८९॥

उद्धाटनाख्यमेवात्र सर्वत्र संमतं मतम्।

धनागमाय च तथा परयोषित्य भेदन॥ ११-६९०॥

श्मशानालयमागत्य मुक्तकेशो दिगंवरम्।

जपेदयुतसंख्यं तु सर्वकामार्थसिद्धये॥ ११-६९१॥

तत्रैव प्रेतमारुह्य यो जपेन् मन्त्रा वित्तमः।

अयुतं नियतो भूत्वा विभीः सन्त्वपरायण॥ ११-६९२॥

सयाति परमां सिद्धिं देवैरपि सदुर्लभाम्।

आकर्षणवशीकारवन्धनोच्चाटनादयः॥ ११-६९३॥

स्तम्भनं मोहनं चैव त्रासनं ह्रासनं तथा।

वाग्मि त्वं च धनित्वं च वहुपुत्रत्वमेव च॥ ११-६९४॥

सयाति खेचरत्वं च देवत्वमपि चैव हि।

नजरां न च रोगं वा न मृत्युर्न च वा भयम्॥ ११-६९५॥

न वा प्रीतिमनुष्येषु न च वाक्काय पातनम्।

अथवा सभवे छ्रेष्टश्चतुर्विंशति सिद्धिषु॥ ११-६९६॥

अथ वारप्रकरणम्॥

यस्मिन् मण्डेय आचारस्तत्र धर्मस्तुता दृशः।

कृतार्थ तेन जायन्ते स्वर्गं वा मुक्तिमेव वा॥ ११-६९७॥

भ्रान्तिस्तत्र न कर्त्तव्य सिद्धि [सिङ्कि] हानिस्तु जायते।

विशुद्धचितो * * * * * * * * * * * * ॥ ११-६९८॥

१८१-८२ इस् मिस्सिन्ग्

१८३अ) * * * * * त्रभवेत् सिद्धि स्यां दय वर्गदा।

एतच्च तत्क्षणात् सिद्धिर्विस्मयं नास्ति वा पर॥ ११-६९९॥

विस्मिता विलयं याति पशवः स्त्रमोहिता।

कुलस्त्री विरनिन्दां च त द्रव्यमपहारणम्॥ ११-७००॥

स्त्रीषुरोषं प्रहारं च वर्जन्मतिमान् सदा।

स्त्रीमयं च जगत्सर्वं स्वयं ताव तथा भवेत्॥ ११-७०१॥

पेयं चव्यं तथा चोव्यं भक्ष्यं भोक्ष्यं गृहं सुखम्।

सर्वं च युवतिरूपं भावयेद् यत मानसः॥ ११-७०२॥

कुलं तां युवतीविक्ष्यं नमस्कुर्यात् समाहितः।

तदेव मानसी पूजां तत्र तासां प्रकल्पयेत्॥ ११-७०३॥

वालां व यौवनोन्मत्तां वृद्धां वा सुन्दरी तथा।

कुत्सितां वा महाभक्ता नमस्कृत्य विभाव *॥ ११-७०४॥

कृमां शुक्रां कृष्नवर्णां कुमारिं च कृशोदरिम्।

मनोहरां यौवनस्थामर्चयेद् देवता धिया॥ ११-७०५॥

तां सां प्रहासं निन्दां च कौटिल्यमप्रियम् तथा।

सर्वं न च कर्त्तव्यं मन्यथा सिद्धिरोधकृत्॥ ११-७०६॥

त्रियो देवास्त्रिय प्राणास्त्रिय एव विभूषणाम्।

स्त्रीसंगिना सदाभाव्यमन्यथा विधि॥ ११-७०७॥

दिवा न नियमो नादुस्थित्यादिनियमः क्वचित्।

न जापकालनियमो नार्चादिषु वलिष्वपि॥ ११-७०८॥

स्वेछा नियमडस्तोत्र महामन्त्रस्य साधने।

वस्त्राशनस्था नगदेहस्पर्शादि वारिणः॥ ११-७०९॥

शुद्धिं न चाचरे तत्र निर्विकल्पं मनश्चरेत्।

सुगन्धश्वेतलौहित्य कुसुमैरचयेत् फलैः॥ ११-७१०॥

वित्वैर्मरुवकाद्यैश्च तुलसी वर्जितैः शुभैः।

नाधर्मो विद्यते चात्र किंचिद् धर्मो महां भवेत्॥ ११-७११॥

स्वेच्छाचारोऽगदितः प्रचरे दुष्टमानसः।

१८३ब्) इत्याचारपरः श्रीमान् जपपूजा परायणः।

अनिमाद्यष्टसिद्धिनामाश्रयः साधको भवेत्॥ ११-७१२॥

इति ३या प्रकरणं समाप्तम्॥

इति श्रीयदुनाथविरचिता यामागमकल्पलतायां एकादशः [तृतीयः] पटलः
॥ ११॥ [३]

अथ नीलसरस्वती मन्त्र॥

फेत्कारिणितन्त्रे।

कैलासशिखरासीनं चन्द्रखण्डविराजितम्।

वक्षस्थले समासीन अपृछन्तं नगात्मजा॥ १२-१॥

अथमीशान सर्वज्ञ प्रभवन्ते तयोधनम्।

कां विद्यां प्राप्यकवयोभारनादीन् प्रचक्रिरे॥ १२-२॥

श्रुत्वा नगात्मजा वाक्यं विहस्यपरमेश्वरः।

प्राह प्रियां परिष्वज्य साधु साध्विति पूजयन्॥ १२-३॥

शृणु साध्वि महाविद्यां अज्ञानं धननाशिनीम्।

यामवाप्यमहान्मानो धर्मकामार्थ मुक्तिषु॥ १२-४॥

नासाद्ध्यं मेनिरेर्किंचि कवयशुद्धवुद्धय।

मन्त्रस्य ज्ञानमात्रेण जपात् सर्वज्ञतां नयेत्॥ १२-५॥

जिह्वायां न्यसनाद् एव पूकोपि सुकविर्भवेत्।

मधुना त्रिदिनादर्वा गर्भकजिह्वासु विन्यसेन् मंनुंमन्त्रि।

यदि पठति पण्डितो [पंठितो] सान चेनोमूर्खयाति॥

अथवा मधुनाज्याभ्यां जिह्वायां वालक सा तु नाडी छेदाद्यथा
पूर्वं लिखेद्धेमशराकया।

मूलमन्त्रं लिखेन् मन्त्री यद्वोष्टे श्वेतदूर्वया॥ १२-६॥

वागुचारणतो वाग्मि वालोद्भूतकविर्भवेत्।

यद्वौष्टे यद् वा द्रोष्टे यथा पूर्वपूर्वलिखितक्रमेण हेमशलाकपातधूनज्याभ्यां नाडिछेदाभ्यन्तरे वालकजिह्वायां मन्त्रलिखेत्।

१८४अ) श्वेतदूर्वया तदोष्ते वा लिखेदेवं वाक्यो चारणमारभ्य द्रुतकविर्भवेद् इत्यर्थ॥

मतस्य सुक्ते॥

पितुर्भ्राता लिखेन् मन्त्रं मातुर्धाताथवा पुनः॥ १२-७॥

पिता वाथ लिखेन् मन्त्रं नान्यन्तत्र कदाचन।

मन्त्रोद्धारमाह मत्स्यसूक्ते।

विरूपाक्षा उवाच

अथ भेदान् प्रवक्ष्यामि तारिण्य सर्वसिद्धिदाम्॥ १२-८॥

तेषां विज्ञानमात्रेण [-मोत्रेण] जीवन्मुक्तश्च साधकः।

तदौ संप्रदाय सीधार्थ सर्वविद्यानामाद्यां पक्षरीवृणोमि।

मायावीजं समुद्धृत्य डंकारं वह्निसंयुतम्।

मायाविन्द्वीश्वरयुतं द्वितीयं विजमुत्तमम्॥ १२-९॥

मायानादः वुन्दुरनुस्वारः तद्युतं तेन त्रीं भवति।

कूर्चवीजं द्वितीयं तु कङ्कारं तदनन्तरम्।

स्ंपूर्णसिद्धिमन्त्रं तु रश्मिपंचकप्राणव॥ १२-१०॥

मित्यर्थ तेन अकार उकारा नादविन्दवः।

तत्र चूडामणौ॥

अनुत्तरं समुद्धृत्य मायोत्तरशमुद्धृत्य मायोत्तरमतपरम्।

पपंचसमायुक्तः पंचरश्मिः प्रकीर्त्तितः॥ १२-११॥

नुत्तरं अकारमित्यर्थः।

मायोत्तरं माया ईकारस्तदुत्तर उकारः पपंचमोमकार तेन ॐत्यर्थः।

तारास्त्ररहिता त्र्यर्णा महानीलसरस्वती।

कुल्लुकयं समाख्याता केचिदिछन्ति तान्त्रिकाः॥ १२-१२॥

ताराद्याः पंचवर्णो यं श्रीमंनीलसरस्वती।

सर्वभाषामयी शुद्धा सर्वाम्नायै नमस्कृता॥ १२-१३॥

श्रीविजाया यदा विद्यास्तदा श्री सर्वतोमुखी।

१८४ब्) यवै व हि महाविद्या मायाद्याः सकलेष्टदा॥ १२-१४॥

वाग्भवाद्या महावाशुपा सर्वपाङ्मुयी।

एषा क्रमगता प्राप्तामतिभद्रा जन्मयी एकवीकल्प॥

मायावीजं वधूवीजं कूर्चवीजं तथा हि फट्॥ १२-१५॥

एषा पंचाक्षरीविद्या पंचभूत प्रकाशिनी।

वधूवीजं मध्यवीजं डंकारं केवलडकारं तथा

भगवताचार्यैणोक्तम्।

मध्यषोडशफलिते शुद्धं केवल उकारं विद्रोषस्तु? अत्र मध्यवीजे

गुप्तामृतवीजमविं अतिगुप्तत्वानोद्धृतम्।

तेन सचन्द्रं मध्यवीजमिति सिद्धैर्जेयम्।

तत्र कारणमाह॥

तारार्णवे।

वशिष्ठाराधिता चोग्रा तत्त्वं शीघ्रफलायन॥ १२-१६॥

अनस्ते नापि सुनिनाशायो दत्त सुदारुणः।

तत प्रभृति विद्ययं वधूरि व यशस्विनि॥ १२-१७॥

फलिनी सर्वविद्यानां जयिनी जयकांक्षिणाम्।

विषक्षयकरी विद्यां अमृतत्वं प्रदायिनी॥ १२-१८॥

मन्त्रस्य ज्ञानमात्रेण विजयी भुवि जायते।

तारा चोग्रा महोग्रा च वज्रकाली सरस्वति॥ १२-१९॥

कामेश्वरी भद्रकाली इत्यष्टौ तारिणी स्मृताः।

फत्कारिणीतन्त्रे [-तत्रे]॥

नीलसरस्वती मन्त्रोद्धारमाह।

प्रथमं सपरं दत्वा चतुर्थस्वरभूषितम्॥ १२-२०॥

रेफारूढस्फुरदीप्तं इन्दुविन्दुसमन्वितम्।

त्रंकारं च ततो दद्यात् संपूर्णसिद्धमन्त्रकम्॥ १२-२१॥

प्रथममिति सपरं हकार चतुर्थस्वरः ईकारः विन्दुरर्धचन्द्र
विन्दुरनुस्वारः तेन ह्रीँ इति वीजत्रंकारं इति वर्गस्य प्रथमाक्षरं

कानुस्वारयुक्तमित्यर्थः चतुर्थेन स्वरेण ईकारेणत्यर्थः तेन त्रीमिति वीजम्।

१८५अ) दीर्घेति अर्घेशयुक्तं हंकारं अर्घेश ऊकारस्तद्युक्तं हूँकार
तेन हूँ मिति वीजं तेन ह्रीँ त्रीँ हूँ इति नीलसारस्वतो मन्त्रः॥

सठम्व? फडन्तथेत्।?

एकजटामन्त्र॥

ॐकारादि फडन्तः॥

तारामन्त्र॥

अत एवोत्तम्॥

त्र्यक्षरोसौ महामन्त्र फड्कारान्तो हृ * स्थिति।

पञ्चरश्मि समायुक्तो य्पज्ञाने धनहा हक इति।

त्र्यक्षरमुपकम्प फतकारानाद्यभिधानेन मन्त्र भेदात्।

फडन्तो या ज्ञाननाशकः पञ्चरश्मि समायुक्तो पीत्यर्थात्।

पञ्चरश्मिः प्रणवः।

उक्तं च श्रीक्रमे तन्त्रचूडामणावपि।

ह्रिया नववधूः शब्दो यथागः क्रियते प्रिये॥ १२-२२॥

तथैवे यं महाविद्यान कदा कुलगोचरा।

अस्त्रान्ते यं महाविद्या जटो युगवधारिणी॥ १२-२३॥

देवादि मुखयुक्तो चे तारा भुवनतारिणी।

ह्रीय लजया तेन ह्रीँ वीजमुक्तं वधूशब्दं स्त्रीवीजमित्यर्थः।

यथा आगः कुरुते यथा क्रोधं व्यनक्तितेन।

ह्रीँ वीजमिति मेत्रोद्धोरः।

एवं वधूवीजेन सकारोपि लभ्यते।

तदुक्तं मत्स्यसुक्ते।

सकारे हीनं वीजमुत्कावसिष्टे नास्य मुनिनासा द्यो?दत्तः सुदारुणः ततः प्रभृति विद्येयं फलदात्री न कस्यचित्।

शक्तिवीजं जपान्तस्थ वीजोपरिनियोजतम्॥ १२-२४॥

ततः प्रभृति विद्येयं वधुरिवयश्श्चिती।

ताराकल्पे।

लज्जायुगं वधूवीजं ततो दीर्घान्तनुछदाम्॥ १२-२५॥

सारस्वतो परोमन्त्रः संप्रोक्तश्चतुरक्षर [-चतु * क्षर]।

ह्रीँ ह्रीँ स्त्रीँ हूँ इति मन्त्र [मत्र]॥

१८५ब्) लजा ह्रीँ वधूवीजं स्त्रीँ तद् वाचकत्वात्।

तेन॥

ह्रीँ स्त्रीँ हूँ।

इति मन्त्र। फडन्तः पञ्चाक्षरः। तथा॥

ताराशक्तिवधूवीजान्यं ते दीर्घतनुछदाम्॥ १२-२६॥

अस्त्रमग्निवधूरन्ते मनुः सप्ताक्षरो भवेत्।

ॐ ह्रीँ स्त्रीँ हूँ फट् स्वाहा।

इति सप्तक्षरो मन्त्र।

मन्त्रशास्त्रेषु संप्रोक्तस्तथा दीर्घेणवर्मणा॥ १२-२७॥

पुटितं च वधूवीजमपरो सौगुणाक्षरः।

गुणशक्षेन त्रिगुणमुच्यते।

तेन त्र्यक्षरमन्त्रे भवति। तेन।

हूँ स्त्रीँ हूँ। इति मन्त्र।

तार ॐ शक्तिः ह्रीँ वधूवीजं स्त्रीँ दीर्घतनुछदं हुम्।

अग्निवधू स्वाहा। तेन। ॐ ह्रीँ स्त्रीँ हूँ फट् स्वाहा। इति मन्त्र॥

एदानिमुग्रतारिण्या जगन्मातु प्रयत्नतः॥ १२-२८॥

पूजाविधिं प्रवक्ष्यामि मन्त्रिणां सिद्धिदायिनी।

ब्रह्मे मूहूर्त्ते वोत्थायेति पूर्ववत्।

प्रातः शिरसीत्यादि इति स्मृत्वा मानसोपचारैराराध्य देवी ध्यायेत्॥

यथा कुलकुण्डलिनी सूप्रस्त्वा वर्मना षड्चक्रभेदक्रमेण परमशिवे नीत्वा ऐक्यं विभाव्यमनसाराध्य मूलादि ब्रह्मरन्ध्रान्ता विसतन्तु तनीयसीम्।

मूलमन्त्रमयी साक्षाद् अमृतानन्दरूपिणीम्॥ १२-२९॥

तत् प्रभा पटलव्याप्त शरीरं परिचिन्तयेत्।

आत्मानन्तद्रुपं विभाव्य यं हिर्गछेत्।

तत्त्वो वहिर्निगत्य प्रातः कृत्यं समाप्य स्नानार्थं नद्यादौ गत्वा यवौक्तनिधिना स्नात्वा वासशिवारधायाचम्य।

श्रीमद्रूग्रतारायै विद्मेहे नीलसरस्वत्यै धीमहि तन्नस्तारा प्रचोदयात्।

१८६अ) पूजामण्डपमागत्य पूजां कुर्यात्।

ॐ वज्रोदके हूँ फट् स्वाहेति जलमधिष्ठाय।

ॐ ह्रीँ स्वाहेति हस्तौ पादौ प्रक्षाल्य।

ॐ ह्रीँ विशुद्धधर्मसर्वपापानि सम्लस्तारा प्रचोदयात्।

मया शेषविकल्पा नय नय स्वाहेत्याचमनम्।

ॐ मणिधरि वज्रिणि सर्ववशंकरि हूँ फडिति शिख्वा वन्धनम्।

ॐ रक्ष रक्ष हूँ फट् स्वाहेति जलाभिषेकाद् भूमिशोधनम्।

ॐ सर्वविघ्नानुत्सारय हूँ फट् स्वाहेति अक्षनाम्विकीर्य नारा च मुद्रया
त्रिविधं विघ्नानुसारयेत्।

ॐ पवित्रं वज्रभूमे हूँ फडिति भूमिमभिमन्त्र्य ॐ आः सुरेखे वज्ररेखे
हूँ फट् मन्त्रलमभ्यर्च्य।

ॐ आधारशक्ति कमलासनाय नम इत्यासनं संपूज्य स्वस्तिकादिकं वद्ध्या उपविश्य।

ॐ मणिधरि वज्रिणि महाप्रतिसरभै रक्ष रक्ष मां हूँ फट् स्वाहेति वस्त्रान्तिके ग्रन्थि वद्भ्रियात्।

ॐ अः फट् स्वाहेति पुष्पाभिमन्त्रणं ततः सुवर्णादिपीठे रक्तचन्दनकुंकुमादिना

ॐ आः सुरेखे वज्ररेखे हूँ फडिति षट्कोणगर्भं अष्टदलपद्मं चतुरश्रं चतुर्द्वारसमीतं यन्त्रं लिखित्वा पद्मस्य पूर्वदले मायां ह्रीँ याम्ये स्त्रीँ उत्तरे फे पश्चिमे फट् मध्ये हूँ विलिह्य॥

अग्रपीठोपरियन्त्रं स्थापयेत्।

अथभूतशुद्धि।

स्वक्रोत्रे उत्तमा हस्तौ निधाय।

सोहमिति मन्त्रेण हृदया जीवात्मानं कुण्डलिनी च षट्चक्रभेदक्रमेण

सहस्रदलकर्णिकांतर्गतरमात्मनि संयोज्व मायावीजं रक्तवर्णं नाभौ ध्यात्वा तदुद्भूतेन वह्नि नाया प पुरुषेण सहदग्धं विचिन्त्यस्त्रं वीजं पीतवर्णं हृदि विचिन्त्य तनुद्भूते नवायुनाभस्मप्रोत्सार्य हूँकारं श्वेतवर्णं ललाटे विचिन्त्य तदुद्भूते नामृतरसेन सकलं शरीरं परिप्लुतं विचिन्त्यात्मानं निर्मलं दवतामयं चिन्तयेत्। इति॥

हंस इति मन्त्रेण जीवात्मानं हृदयं कुलकुण्डलिनी च मूलाधार स्थापयेत्।

अथ मातृकान्यासः।

ऋष्यादि करन्यासानन्तरं वर्णन्यासं कृत्वा मातृकां ध्यायेत्।

अथ प्राणायामः।

हूँ इति चतुर्वा च जप्तेन इ उ पा वायुमापूर्यनासापुटौ धृत्वा हूँ इति षोडशवारं जप्त्व मध्यनाडिं कुंभयित्वाष्टवार जप्तेन दक्षिणनासा वायुं रेचरेत्।

एवं वा त्रयं कुर्यात्।

अक्षोभ्य ऋषिः वृहती छन्दः।

श्रीमदेकटा देवता हूँकारो वीजम्।

फट्कारशक्तिः कविन्व पाण्डित्यादि सिद्धि विनियोगः।

शिरसि अक्षोभ्य ऋषये नमः।

मुखे वृहति छन्दसे नमः।

हृदि एकजटा देवतायै नमः।

अथ मत्रम्य कराङ्गन्यासः।

ह्रौं अखिलवाग्रूपिण्यै अंगुष्टाभ्यां नम अंगुष्टयोः।

ह्रीँ अखण्डवाग्रूपिण्यै तर्जनीभ्यां स्वाहा।

हूँ ब्रह्मवाग्रूपिण्यै मध्यमाभ्या वौषट्।

हैँ विष्णु वाग्रूपिण्यै अनामिकाभ्याँ हूँ।

हौँ रुद्रवाग्रूपिण्यै कनिष्ठाभ्यां वौषट्।

हः सर्ववाग्रूपिण्यै करतलष्टपृष्टाभ्यां फट्।

हाँ अखिलवाग्रूणिण्यै हृदयाय नमः।

इत्यादि अंगन्यासवत्।

व्यभ्ययहस्ताभ्यां स्कन्धद्युरूपर्यन्त।

१८७अ) हौँ रुद्रवाग्रूपिण्यै नेत्रत्रयाय वौषट्।

तर्जनी मध्यमानामिकाभिर्नेत्रत्रये।

हः सर्ववाग्रूपिण्यै अस्त्राय फट्।

इति जर्ध्वं तालत्रयं पूर्ववदिग्वंधनं कुर्यात्।

ध्यानमाह॥

विश्वव्यापके वारिणि आकाराद्रक्तं पंकजं विचिन्त्य तदुपरिटाः।

काराच्छूतपद्मं ध्यात्वा तदुपरि नीलीरसछायां हूँकारं विचिन्त्य
तदुद्भूतां वीजभूतां मातृकां विभाव्य तदुपरि देवी ध्यायेत्।

यथा।

ॐ प्रत्पालीटपदार्पिताद् व्रिशवहृद्धोराट्टहासा परात्य-
अङ्गेन्दीवर कर्तृ खर्परभूजा हूँकारवीजोद्भवा।

खर्वा नीलविशालपिंगलजटाजूटोग्रनादैर्युता
जायं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्॥ १२-३०॥

प्रत्पालिटेति पश्चात् कृत सव्यापसव्य वरणद्वयेत्यर्थः अर्पितेति शवहृदयेर्पितो दक्षिणचरणापरचरण शिवपादद्वयो परिय्था तादृशीत्यर्थः।

श च पदारूढवामपादं तहोनुखिमिति तत्र चूडामणिवनात्।

अत्र वोधका भावात्।

एतेन शववासनत्वमुक्तं घोरेति भीमा अट्टहासेन रवः शब्दो यस्यास्तथेत्यर्थः खङ्गेति दक्षिणहस्तद्वयेदुधाधः क्रमेण खङ्गकर्भृकां च वामहस्तद्वयेध ऊर्द्धक्रमेण खर्पर तिदिचरंवहस्तेषु यस्येत्यर्थः।

खङ्गेन दक्षिणस्योर्ध्व शोमिवां वीरनादिनी।

तदधस्ता द्विजवृतं कर्तृकालं कृता वरा॥ १२-३१॥

वामोर्ध्वरक्तनालेन विकस्वरमनोहरम्।

दधतीं नीलपद्मं च तदधस्तात् करांवुजमिति तन्त्रचूडामणि वचनात्।

१८७ब्) हूँकारेति हूँकारवीज जाता कर्तृका तदुपरिजातेत्यर्थः।

शब्दा देवजातेत्यर्थ खर्वेति खर्चा हुस्वा ईशन्निला श्यामा विसाला या जटा तस्या जूटः समूहस्तथेत्यर्थ यद् वा खर्वेति पृथक् पदं स्रा? नागैस्तक्षकादितिरलंकारमेखला रजुविशेषैर्युता अन्यत् सर्वसुगमप्रिति कृत्वा नोक्तम्।

अथैकजटा ध्यानम्।

खर्वामट्टाट्टहासामभिनवजलधरनीलां लंवोदरीं व्याघ्रचर्मा
कृत कटिं पिनोन्नतपयोधरां
चर्तुलरक्तत्रिनेत्रां ललजिह्वां दंष्ट्राकरालवदनां पिंगोग्रैकजतां

पार्श्वद्वयेलं व माननीलोत्पलमालां मतिनीलनागकृत जटा जूटां

ललाटे श्वेतास्थि पट्टिका संयुक्त कपालपंचतयां

जपाकुसुमसंकाश तक्षकनाग कृत कुण्डलां अति धवलश्वेत नाग कृत

हारां दूर्वादलश्यामलकौशिकनाग कृत यज्ञोपवीतां

चतुर्भुजां तदुपरि दक्षिणे

सरक्तमांसखण्डमण्डितमुष्टिनिविष्टजटाजूटसंलग्नाग्रखङ्गविभू।

सितकरां उपरिवामरक्तनागकिंचिद् विकस्वरलीलोत्पलं करां अधस्तो

दक्षिणवीजभूषितविन्तकर्तृका भूषितकरां अधस्ताद् वा

मत्रिजगज्जाद्यसमतशुभ्रकपालमण्डितकरांभुजचतुष्टयै

धूम्राभना कृत केयूरां कनकाभनागकृतं कणां

शुक्रवर्णशवाधिरूढां निर्भरयन्त्रणामिप्रायण शव हृदि

संकुचिनदक्षिणचरणां शवपादद्वयावस्थित प्रसारितचामचरणाम्॥

१८८अ) कुंडाभनागकृत कटिसूत्रां ईषद्रक्तनागकृत नूपुरां

सद्य कृन्जगलवुधिरान्यो न्येकेशग्रथिता पादपद्मलंवितपंचाशन्तय

नृमृण्डमालां

प्रजवलद् अललविता मध्यस्थां द्वीपचर्मोपरिवस्त्रां

योषिदशेषालंकारभूषितां मौलावक्षौत्यभूषितां

स्यवेशस्ये राननां भवति मोडे।

अथ श्रीनीलस्वरस्वती ध्यान॥

ॐ प्रत्यालीढ पदां घोरां मुण्डमाला विभूषिताम्॥ १२-३२॥

खर्वा लंवोदरी भीमां व्याघ्रचर्मावृताकृटौ।

नवयौवनसंपन्नां पंचमुद्रा विभूषिताम्॥ १२-३३॥

चतुर्भुजा ललजिह्वा महाभीमां वरप्रदाम्।

खङ्गकर्तृ समायुक्ता सव्यतरनुजान्तयीम्॥ १२-३४॥

कपालोल्यलसंयुक्त सव्यपाणियुतान्विताम्।

पिंगोग्रैकजटां ध्यायेत् मौला वक्षौभ्यभूषिता॥ १२-३५॥

सव्यतरभुजद्वयां दक्षिणभूजद्वयाम्।

सव्यपाणियुगान्वितामिति।

ललाटे श्वेतास्थिपट्टिका युक्त कपालपंचतयान्विताम्।

श्रीशंकराचार्य भगवताप्योक्तं विचिन्त्यास्थि माला कपालं करालं
ललाटे च पंचान्वितं धारयन्तीमिति।

सुमुखं चतुरश्रं च वृत्तं गोमुखेमेव च।

योनिमुद्रेति विख्याताः पंचमुद्राः प्रकीर्त्तिता॥ १२-३६॥

मौलावक्षोभ्य भूषितमिति॥

मौलौ मस्तके अक्षोभ्यः कविनाशचन्द्रकलाति शिवदीक्षा टीकाकारः तनुः चन्द्रावतंसामिति सर्वध्याने प्रयुक्तत्वाम्।

अथवा अक्षोभ्यो वासुकिनागरूपः।

भावचूडामणौ॥

अक्षोभ्ये दिवीमूर्त्ति नागरूपधृक्।

१८८ब) अत एव मूर्द्धनि गुरुव्ये यो नागगूप इति मन्त्रभेदेन यथा योग्यां ध्यात्वा देवीं देवीं रूपमात्मानं विभाव्यमानुसोपचारैराराध्य स्वशिरसि पुष्पं दत्वा योनिमुद्रां प्रदर्शयेत्।

ततो वाह्य पूजार्थं शंखं स्थापयेत्।

यथा स्ववामे त्रिकोणचतुरश्रमण्डलं कृत्वा तत्र साधारं पात्रं निधाय।

मं वह्निमण्डलायेति पूर्ववत्।

अं सूर्यमण्डलायेति च इति पात्रसंपूज्य मूलं जपन्।

शुद्धजलमापूर्य॥

ॐ सोममण्डलाय [सो*म-] पूर्ववदिति जलं संपूज्य।

तस्मिन् जले गन्धपुष्पाक्षतादीन्निक्षिप्य॥

ह्रामखिलवाग्रूपिण्यै हृदयाय नमः।

ह्रा अखण्डवाग्रूपिण्यै शिरसे स्वाहा।

ह्रू ब्रह्मवाग्रूपिण्यै शिखायै वौषट्।

ह्रौ विष्णुवाग्रूपिण्यै कवचाय हूँ।

ह्रौँ रुद्रवाग्रूपिण्यै नेत्रत्रयाय वौषट्।

ह्रः सर्ववाग्रूपिण्यै अस्त्राय फडिति पूर्ववत् तालत्रयं दत्वा दिग्वन्धन
कुर्यात्।

अग्नि शा सुरवायुषु मध्ये च दिक्षुषडंगानि विन्यस्य मूलमन्त्रं दशधा जप्त्वा

ॐ गंगे च यमुने चैव चेत्यादि कुंशं मुद्रर्या सूर्यमण्डला तीर्थयावाह्य मन्त्रमयं जलं विचिन्त्य तज्जलं चित्प्रोक्षणानि क्षिप्यते नोदकेनात्मानं पूजोपकरणं च वारत्रयं प्रोक्षयेत्।

अथ पीठपूजा॥

वामे गुरुभ्यो नमः।

दक्षिणे गणेशाय नमः।

मध्ये श्रीमदेकजटायै नमः।

श्मशानाय।

कल्पवृक्षाय।

मणिपीठाय।

ॐ नानालंकारेभ्य।

ॐ मुनिभ्यः।

ॐ देवेभ्यो।

ॐ रक्तमांसास्थिमोदमानसिवाभ्यो नमः।

१८९अ) चतुदिक्षु। पूर्वे।

शवेभ्या दक्षिणे।

मुण्डेभ्यः। पश्चिमे।

चित्गारेभ्यः। उत्तरे।

अस्थिभ्यः। ततोष्टदलेषुः। पूर्वे।

ॐ लक्ष्म्यै। दक्षिणे।

ॐ सरस्वत्यै। पश्चिमे।

ॐ रत्यै। उत्तरे।

ॐ प्रीत्यै नमः। अग्निकोणे।

ॐ कीर्त्यै नमः। नैरृत्ये।

ॐ शान्त्यै नमः। वायुकोणे।

ॐ पुष्टै नमः। ईशाने।

ॐ तुष्ट्यै नमः।

एवं मुत्तरोत्तरमभ्यर्च्य। ह्सौः। सदाशिव महाप्रेतपद्मासनाय नमः।

इति मध्ये पूजयेत्।

ततः कुसुमांजलौ देवी ध्यात्वा मूलेन मूर्त्ति संकल्पा वाहयेत्।

पुन ध्यानं कुर्यात्।

प्रत्यालीढेत्यादिना एवं ध्यात्वा हृदयान् मूलमन्त्रं तेजोमयी शुद्धज्ञानचैतन्यरूपा मानंदमयी वामनासापुटेन अंजला वा नीयमूर्त्तौ समावाहयेत्।

देवेशि भक्तिसुलभे परिवारसमन्विते।

यावत्यां पूजयिष्यामि नावत्वं सुस्थिराभव।

श्रीमदेकजटे इहागगछे इह तिष्ट २ इह सन्निधे हि २ इत्यंगुष्टमुष्टिकाभ्यां इह संनिरुद्ध स्व २ इत्यावाह्य ततो देव्यामंगे षडंगं विन्यस्य।

आँ ह्रीँ क्रौँ स्वाहा।

इति प्राणान् प्रतिष्ठाप्य मूलमुच्चार्य।

श्रीमदेकजेटे वज्रपुष्पं प्रतिछ।

हुँ फट् स्वाहा।

पाद्यं नमः।

इति पादांवुजे दद्यात्।

अर्घं नमः शिरसि।

आचमनीयं मुखे खर्धति।

एषं गन्धो नमः।

एतत् पुष्पं नमः।

एष धूपो नमः।

एष दीपो नमः।

नैवेद्यं जलेनाभ्युक्ष्य तर्जनीभ्यामवगुव्य धेनुमुद्रयामृती कृत्य मूलमुच्चार्य श्रीमदेकजटे वज्रपुष्पं प्रतिछ स्वाहा।

१८९ब्) एतन् नैवेद्यं नमः।

निवेदयामि भगवत्यै जुषाने देहर्विदेवि।

इति निवेद्य तंवूलं दत्वा श्रीमदेकजटे वज्रपुष्पं प्रतिछ स्वाहेति।

इति पुष्पांजलि त्रयं दद्यात्।

वायव्या सूर्यं ध्यात्वा पूजयेत्।

नैऋत्याम्।

गणकाख्य ऋषिरिवृछन्दः अग्निघ्नो देवता दृष्वा दृष्टफला वाप्तये विनियोगः।

शिरसि।

गणक ऋषये नमः।

मुखे निवृछन्दसे।

हृदि अविघ्नाय देवतायै नमः।

गाँ गीँ गूँ गैँ गौँ गः।

एते कराङ्गन्यासमन्त्रा।

ततो ध्यात्वा पूजयत्।

आग्नेयां महादेवं ध्यात्वा।

ऐशान्यां गोपालं पूजयेत्।

तदुक्तं ताराकल्पे।

पूर्वे गणपतिं चेष्ट्वा दक्षिणे वटुकं तथा।

क्षेत्रपालं यजेत् पश्चाद् योगिनी चोत्तरे यजेत्॥ १२-३७॥

इति वायुजा क्रम।

अग्निकोणे।

अखिलवाग्रूपिण्यै हृदयाय नमः। इशाने।

अखण्डचागिति। शिरसे स्वाहा। नैऋत्ये।

व्रह्मचागिति शिखायै वौषट्। वायुकोणे।

विष्णुवाग्रूपिणै कवचाय हुम्।

मध्ये रुद्रवागिनि नेत्रत्रयाय वौषट्।

पूर्वादि चतुर्दिक्षु पूर्वदक्षिणपश्चिमोत्तरेषु।

सर्ववाग्रूपिण्यै अस्त्राय फट्।

अग्रे दिव्यौघ गुरुभ्यो नम।

सिद्धौघ गुरुभ्यो नमः।

मानवौघ गुरुभ्यो नमः।

देव्या मौलौ।

अक्षोभ्य वज्रपुष्पं प्रतीछ स्वाहा।

ततः पूर्वाद्यष्टदलषु। पूर्वे ।

भैवौरोचनपुष्पं प्रतिछ हुं फट् स्वाहा। दक्षिणे।

शंखपाण्डुरवज्रपुष्पं पूर्ववत्। पश्चिमे।

पद्मनाभवज्रपुष्पम्। उत्तरे।

१९०अ) ॐ अमिताभवज्रपुष्पं अग्नेये।

ॐ नामकवज्रपुष्पम्। नैऋत्ये।

ॐ मामकवज्रपुष्पम्। वायव्ये।

ॐ पाण्डुरवज्रपुष्पम्। ईशानदले।

ॐ तारे वज्रपुष्पं प्रतीछ हुं फट् स्वाहा। पूर्वद्वारे।

ॐ पद्मान्तकाय नमः। दक्षिणद्वारे।

ॐ यं यमान्तकाय। पश्चिमद्वारे।

ॐ विं विघ्नान्तकाय नमः। उत्तरद्वारे।

ॐ नं नरान्तकाय नम

इति संपूज्य वामे त्रिकोणवृत्तचतुरश्रमण्डलं कृत्वा मूलेन
पुष्पैरभ्यर्च्य तत्र विहित वलिपात्रसहित वलिद्रव्यं निधायाद् भुषा

नामिकाभ्यां स्पृष्ट्वा।

ॐ एकजटायै महायक्षाधिपायै उपनीतं वलिं गृह्ण २ गृह्णापय मम सर्वशान्ति कुरु कुरु परविद्या कृष्य त्रुट त्रुट त्रुट छिन्दि छिन्दि ह्रीँ स्वाहा।

इति वलिं दत्वा माला माधाय मूलविद्यां यथाशक्ति शक्ति जप्त्वा जपान्ते गुह्याति गुह्येत्यादिना अल्पजलेन देव्या वामकरेण जपं समर्थस्तुत्वा पुनराचमनीयं दत्वा योनिमुद्रां प्रदर्श्य संहारमुद्रया तेजामयी स्वहृदि समानीयान्मनेनद्रूपं विभाव्यनिर्माल्यं शिरसि धृत्वा नैवेद्यं स्वीकृत्य यथा सुखं विहरेत्।

इति श्रीतारा एकजटा पूजापद्धतिः समाप्तः।

अथोग्रतारा कवचम्।

अथोग्र तारा कवचं वक्ष्यामि सर्वसिद्धिये।

श्रीभैरव्युवाच

तारा पूजा श्रूता नाथ विद्याश्च सकलास्तथा।

सांप्रतं श्रोतुमुछामि कवचं मन्त्रविग्रहम्॥ १२-३८॥

त्रैलोक्य मोहनम्।

१९०ब्) त्रैलोक्यमोहनं नाम सर्वापदनिवारणम् [-पद्वि-]।

पुरैव सूचितं नाथ कृपया मे प्रकाशयः॥ १२-३९॥

श्रीभैरव उवाच

देवदानव विद्यात्र पूजिते प्राणवल्लभ [-वल्ल]।

त्रैलोक्यमोहनं नाम कवचं श्रुयतां परम्॥ १२-४०॥

सर्वविद्यामयं देवि सर्वमन्त्रमधु * वम्।

सर्वरक्षाकरं सर्वसिद्धिविद्या प्रदायकम्॥ १२-४१॥

व्द्व्यासोपि यद् धृत्वा सर्वज्ञः पठनाद्यतः।

यद् धृत्वा पठनाद् ईश त्रैलोक्य विजयि प्रभुः॥ १२-४२॥

धनाधिप कुवेरोपि देवे गोभूछ्चीपति।

पठनाद् धारणात् सत्यं यतः सर्वदिगीश्वरा॥ १२-४३॥

सर्वैश्वर्ययुतः सते? सर्वसिद्धिमवाप्नुयात्।

यस्य भ्रसादाद् ईशोहं भैरवाणां सुरेश्वरि॥ १२-४४॥

क्रोधाधिपो महाभीमो देवषु प्रतितः प्रभुः।

नदद्यात् परशिष्यभ्यो देयं शिष्यभ्य एव च॥ १२-४५॥

अभक्तेभ्योपि पुत्रेभ्यो दत्वा मृत्युमवाप्नुयात्।

त्रैलोक्यमोहनम् यापि कवचस्य ऋषि शिवः॥ १२-४६॥

छन्दो विराट् देवताग्रतारा प्रकीर्त्तिताः।

चतुर्वर्गेषु [-वेर्गेषु] विद्यायां विजयेषु प्रकीर्त्तितः॥ १२-४७॥

ॐ ह्री स्त्रीँ मे शिरः पातु हूँ फट् पातु ललाटकम्।

सार्धपञ्चाक्षरी तारा पायात्रेत्रयुगं मम॥ १२-४८॥

ॐ ह्रीँ स्त्रीँ हुँ श्रुते पायान् नमश्च पातु नासिकाम्।

तारा षडक्षरी पायाद् वदनं मुण्डभीषणा॥ १२-४९॥

ह्रीँ स्त्रीँ हूँ फट् गलं पातु जिह्वां या यान् महेश्वरी।

ह्रीँ स्त्रीँ हूँ गण्डयुगलं पातु नीलसरस्वती॥ १२-५०॥

स्त्रीँ कन्धौ पातु नियतं तारैकाक्षररूपिणि।

हूँ घाट्यां मे सदा तु वीजैकाक्षररूपिनि॥ १२-५१॥

ऐँ ह्रीँ स्त्रीँ हुँ फट् पायाद् वाक् तारा मे भुजद्वयः।

श्रीँ ह्रीँ स्त्रीँ हूँ च पाया छ्रीँ तारामेव स्तनद्वयम्॥ १२-५२॥

१९१अ) ह्रीँ ह्रीँ स्त्रीँ हूँ फट् पायान् माया तारा हृदयं ममः।

ॐ हूँ ह्रीँ स्त्रीँ हूँ फट् वीजं तारा पृष्टं सदाव तु॥ १२-५३॥

क्लीँ ह्रीँ स्त्रीँ हूँ फट् च पायात् पार्श्वौ कामस्वरूपिणि।

ॐ ह्रीँ हूँ हूँ नमः पायात् कुक्षिं महाषडक्षीरो॥ १२-५४॥

ऐँ सौः ॐ ऐँ क्लीँ फट् स्वाहा कटिदेशं सदावतु।

अष्टाक्षरी महाविद्या साक्षा व्रह्मरूपिणी॥ १२-५५॥

खँ हूँ हौँ ॐ ऐँ श्रीँ ह्रीँ सा गुह्यदेशं सदाव तु।

सप्ताक्षरी चोग्रतारा मूलविद्या स्वरूपिणी॥ १२-५६॥

ॐ ह्रीँ हाँ हूँ नमस्तारायै सकलपदं ततः दुस्तरं तारयदं ताराय प्रणवद्वयम्।

स्वाहेति च महाविद्या जानुनी सर्वदाव तु।

ऐँ सौँ ॐ ऐँ ह्रीँ फट् स्वाहा जंघपानु परात्मिका॥ १२-५७॥

ॐ ह्रीँ स्त्रीँ हूँ च फट् तारा हंसाद्यं ता नवाक्षरी।

महोग्रतारा पादौ मे पातु नित्यं महेश्वरी॥ १२-५८॥

ऐँ ह्रीँ श्रीँ ह्सौँ सौँ सौँ वेदवदवाग्वादिनीति च।

कामवीजत्रयं नीलसरस्वती स्वरूपकम्॥ १२-५९॥

ऐँ ऐँ ऐँ कति कति क्लँ री स्वाहेति च पार्वतीति चतचतुस्त्रिंशल्लिपिमयी पातु तारखिलं वपु।

इद्रो वामाक्षियुक् पृथ्वी सरस्वत्यनलप्रिया।

कूर्चाद्यंना पातु चोर्द्धं मूलविद्या दशाक्षरी॥ १२-६०॥

तारं मायावधूः कूर्चकाली कामकला ततः।

उग्रतारे मगं काम परालक्ष्मी शिवाङ्कुसौ॥ १२-६१॥

सा महाषोडसी प्रोक्ता तारा देव्या मयाधुना।

विधिवद्ग्रहणी देव मृत्युं पथं न यत्॥ १२-६२॥

एष विद्या महागुप्ता तत्रादि यामलेषु वः।

सांप्रतं कथिता तुभ्यं कववाद्गतया प्रियः॥ १२-६३॥

इति त कथितं देवी गुह्याद्गुह्यतरं परम्।

त्रैलोक्यमोहनं नाम कवचं मन्त्रविग्रहम्॥ १२-६४॥

१९१ब्) ब्रह्मविद्यामयभद्रे केवलं ब्रह्मरूपिणम्।

ब्रह्मविद्या मय चैव तत् कवचं सन्मुखादितम्॥ १२-६५॥

गुरुमध्येर्व्यभिधिवत् कवच प्रपठेद् यदि।

त्रिसः कृद् वा यथा ज्ञानभैरवंस्तत्क्षणाद् भवेत्॥ १२-६६॥

सर्वपापै विनिर्मुक्तः कुलकोटि समुद्धरेत्।

गुरुः स्यात् सर्वविद्यासु अधिकारी जपादिषु॥ १२-६७॥

शतमष्टोत्तरं चास्य पुरश्चर्या विधिः स्मृतः। [शतमष्टोत्तरं चास्य पुरश्चर्या विधिः स्मृतः।]

शतमष्टोत्तरं जप्त्वा भवेद् भूमिपुरन्दरः॥ १२-६८॥

त्रैलोक्यविचरेद् वीरो गणनाथो यथाग्रह।

गद्यपद्यमयी वाणी [-शी] भवेद् गंगा प्रवाहवत्॥ १२-६९॥

पुष्पांजल्यष्टकं दत्वा मूले नैव पठेत् सकृत्।

पंचवर्षसहस्राणां पूजायाः फलमाप्नुयात्॥ १२-७०॥

भूर्जे विलिख्य गुटिकां स्वस्थां धारंये यदि।

पुरुषो दक्षिणो वाहौ योषिद् वामभुजे तथा॥ १२-७१॥

वहुपुत्रवती नारी पुरुषो वरपुत्रवान्।

सर्वसिद्धियुतो भूत्वा विचरेद् भैरवो यथा॥ १२-७२॥

उद्गात्रं प्राप्य शस्त्रा व्रह्मादीनितैरपि।

माल्यानि कुसुमान्येव भवंति सुखदानि च॥ १२-७३॥

तस्य गेहे चिरं लक्ष्मीर्वाणावक्ते वसेद्ध्रुवम्।

इदं कवचमज्ञात्वा तारीयो भजतेधमः॥ १२-७४॥

स्वल्पायुर्निधनो मुर्खो भवत्येव न संशयः।

इति श्रीभैरवभरवी संवादे ताराकल्पे श्रीताराकवच समाप्तमिति भद्रम्।

अथ तारासहस्त्रनामम्।

ॐ कैलासशिखरे रम्य देव दवं महेश्वरम्॥ १२-७५॥

भवानि रहस्य प्रित्याय वरदायक।

श्रीदेव्युवाच

कथमीशान सर्वज्ञ लभते शक्तिमुत्तमम्॥ १२-७६॥

१९२अ) साधकाय प्रसादेन तन्मे कथयसुप्रभो।

श्रीशङ्करो वाच

विना पूजा विना ध्यानं विना जाप्यं विना वलिम्॥ १२-७७॥

लभते यानि कल्पाणि तन्मे निगदितः श्रृणु।

नाम्ना सहस्त्रं तारा कथयामि विशेषतः॥ १२-७८॥

श्रृणुदेवि सदा भक्त्या भक्तानां परमं हितम्।

विना पूजोपचारेण विना जाप्येन यत्फलम्॥ १२-७९॥

तत्फलं सकलं देवि कथयामिनत श्रृणु।

अस्य श्रीतारा देव्या भक्तिकुलसर्वस्वनास्तस्तोत्रस्य शिव ऋषि वृहती छन्दः।
श्रीमदुग्रतारा एकजटा नीलसरस्वती देवता सर्वकामार्थे नेपे विनियोगः।

ॐ ताररा त्रिमहात्रिकालरात्रि कपालिनी॥ १२-८०॥

कालिका कामदा माया महामाया महोत्सवा।

महादानरता यज्ञ यज्ञोत्सवविभूषिता॥ १२-८१॥

चन्द्रवत् कोत्रकोराशी चारुनेत्रा सुलोचना।

त्रिनेत्रा कुलपद्माक्षी * * * * मनोहरा॥ १२-८२॥

ब्राह्मी नारायणी ज्योत्स्ना चारुकेशी सुलोचना।

वाराहि वारूणी विद्या महाविद्या महेश्वरी॥ १२-८३॥

पिंगकुचः पिंगकेशी च महायज्ञस्वरूपिणि।

गौरि चंपकवर्णा च कृशाङ्गी कुत पूजिता॥ १२-८४॥

सर्वानन्दस्वरूपा च सर्वानन्दकरा परा।

सर्वानन्दा मुनिर्वाधा सर्वसंकटतारिणी॥ १२-८५॥

नित्यानन्दमयी देह भद्रानीलसरस्वती।

गायत्री सुचरि च कौलव्रत परायणा॥ १२-८६॥

हिरण्यमर्मा भूगर्भा विश्वगर्भा यशश्विनी।

हिमवाहनया देव्यां वरविभूषणा॥ १२-८७॥

जगन्मात जगद्धात्रि जगतामुपकारिणी।

ऐँन्द्रीँ सौँम्या तथा याम्या वारूणी [वा] वायवी तथा॥ १२-८८॥

१९२ब्) आग्नेये नैर्ऋती चैव ऐशानी चान्तकांविकाम्।

सुमेरुं हरया विद्या सर्वेषामुपकारिणी॥ १२-८९॥

ललिजीह्वा सरोजाक्षी मुण्ड-अजविभूषणा।

सर्वानन्द महासर्वा सर्वानन्दस्वरूपिणि॥ १२-९०॥

धृतिर्मेधा तथा लक्ष्मी श्रद्धापन्नगणायिनी।

रुक्मिणिजानकी दुर्गा सत्या सत्यवतीरति॥ १२-९१॥

कामाक्षो क्षुदानन्ता नारसिंहा सरस्वति।

महादेव रता चण्डि चण्डदुर्यावडिनी (?)॥ १२-९२॥

दीर्घकेशी सुकेशी सुकेशी च पिंगकेशी महाकचा।

भवानी भवपत्नि च भवभीतिहरा सची॥ १२-९३॥

पौरन्दरी तथा विष्णुर्जया माहेश्वरी परा।

सर्वेषां जननी नित्यार्चावाद्दिदैत्यनाशिनी॥ १२-९४॥

घोररूपा महेशानि कामिनी वरवर्णिनी।

महाविद्या महामाया महामेघा महोत्सवा॥ १२-९५॥

विरूपा विश्वरूपा च मृडानी मृडवल्लभा।

कोटिचन्द्रप्रतीकाश शतसूर्यसमप्रभा॥ १२-९६॥

जन्हुकन्या मनोज्ञा च पार्वतीहरवल्लभा।

कामरूपा महेशानि नित्यात् सा ह्मनषिनी॥ १२-९७॥

वैकुण्ठनाथपत्नी च तथा शंकरवल्लभा।

काशपी कमला कृत्स्ना कंजपत्र(?)यतेक्षणाः॥ १२-९८॥

माहेश्वरी वृषारूढा पूर्णचन्द्रनिभानना।

माल्या सा मालती धन्या कन्या हिमगिरिस्तथा॥ १२-९९॥

श्रपर्णा पद्मपत्राक्षी नागयज्ञोपवीतिनी।

महाशंखधरा कान्ता कामिनी यानगात्मजा॥ १२-१००॥

ब्राह्माणी वैष्णवी शंभो जया गङ्गा जनेश्वरी।

भागीरथी मनोवुद्धि नित्यानन्दमयी सदा॥ १२-१०१॥

हरिप्रिया गिरिसुता हरपत्नी तपश्चिनि।

महाव्याधीहरा देवी सुरासुरविनाशिनी॥ १२-१०२॥

महान्यराप प्रदा भीमा मधुकैटभनाशिनि।

१९३अ) चक्रिणी खङ्गिनी धात्रि हस्ते पुस्तकधारिणी॥ १२-१०३॥

चामुण्डा चपला तुंगा भद्रैत्यान्विकृन्तिनी।

शान्तिर्निद्रा कोटिनिद्रा * * * * च रेणुका॥ १२-१०४॥

कौमारी कुलताकुन्ती कौलवृतपरायणाः।

वनदुर्गा वनाचारा द्रौपती द्रुपदात्मजा॥ १२-१०५॥

यशस्विनी यशस्या च वशोदात्री यशप्रदा।

सृष्टिस्थित्वं न कालिनानि सुंभप्राणा नाशिनि॥ १२-१०६॥

पद्मिनी वसुधा पृथ्वी रोहिरोहिनिविन्ध्यवासिनि।

शिवाशक्तिर्महाशक्ति शंकरिशक्ति दुर्ल्लभा॥ १२-१०७॥

दैत्य प्राणहरा दात्रि दायादात्मादर प्रिया।

शान्तिक्षेमकरि वुद्धिः सौधासारपरायण॥ १२-१०८॥

श्रीविद्या भैरवी भव्या भारती भयनाशिनी।

तापसी तारिणीत्क्ष्णा तीक्ष्णदैत्यविनाशिनी॥ १२-१०९॥

दात्री दानपरा दात्री दुर्गा दैलकन्यका।

सुरमा च सुरश्रेष्टा ज्येष्टा प्राणेश्वरी स्थिता॥ १२-११०॥

तमोघ्नी ध्वान्तसहर्ती प्रयतात्मप्रतिव्रता।

प्रद्योतनीरथरुदा सर्वलोकप्रकाशिनी॥ १२-१११॥

मेधाविणि महावीर्या हंसी संयोरतारिणि।

प्राणतः प्राणिनामास्ति हारिणी दैत्यनाशिनी॥ १२-११२॥

चद्रानना महोग्रा च चारुमूर्द्धजशोभिता।

मनोज्ञा माधवी धन्या माननीया महद्गुणा॥ १२-११३॥

ज्येष्टा श्रेष्टा मधा पुष्पा निधनिष्टा पूर्वफाल्गुणि।

रक्तवीजारिहत्री च रक्तवीजविनाशिनी॥ १२-११४॥

चण्डमुण्डारि हं हत्री चण्डमुण्डविनाशिनी।

कर्त्ति हर्त्ति च सुकत्री विमलां कुलवाहनि॥ १२-११५॥

निर्मला भास्करा भीमा महिषासुरघातिनी।

कालिन्दी यमुना वृन्दा युवती वालिका तथा॥ १२-११६॥

कौशल्या कौमुदी मात्री रूधती चाप्य रून्धती।

१९३ब) पुरारि गृहिणी पूर्णा पूर्णकर्मा यशश्विनी॥ १२-११७॥

संपूर्णचन्द्रवदना वालचन्द्रसमप्रभा।

रेवती रमणीचित्रा विचित्राकारभूषणा॥ १२-११८॥

शीलवर्त्तिनी सुविद्या यशोदा च यशश्विनी।

करपुष्पसमुद्भूता नरपुष्पात् समुद्भवः॥ १२-११९॥

नरपुष्पप्रजा माला माल्याभूषणभूषिता।

नरपुष्पसमाप्राणा नरपुष्पसमुत्सुका॥ १२-१२०॥

नरपुष्पात्मिका पुष्पा पुष्पश्रवणभूषणा।

नरपुष्पगुणोपेता नरपुष्प य शोभिता॥ १२-१२१॥

नरपुष्पप्रिया प्रीता प्रेतमण्डलमध्यगा।

कुलशास्त्रप्रदीपा च कुलमार्गप्रवर्धनी॥ १२-१२२॥

श्मशानभैरवी कालभैरवी भैरव प्रिया।

भैरवी भैरवप्राणा भरवानन्दवर्द्धिनी॥ १२-१२३॥

गुणानन्दभैरवी च भैरवीपुरभैरवी।

माया च भैरवी शौम्या भैरवी लोकभैरवी॥ १२-१२४॥

विद्या च भैरवीनिति भैरवी गुणत्यविनाशिनी।

पद्मा पद्मवती कृत्स्ना तुष्टा पुष्टतथोर्वशी॥ १२-१२५॥

वज्रिणी वज्रहस्ता च तथा नारायणी शिवा।

शंखिनी शंखहस्ता च कर्तृखर्परधारिणी॥ १२-१२६॥

देवाङ्गना देवकृन्या * * * * पुरोमजा।

शंखिनी सुखदात्री च सर्वसौख्यविवर्द्धिनी॥ १२-१२७॥

शीलाशीलवती सूक्ष्मा सूक्ष्माकरा वरप्रदा।

वरेणां वरदा वाणी ज्ञानिना ज्ञानदामला॥ १२-१२८॥

उग्रतारा यशोदाक्षी पाद्वी वनवासिनी।

उग्रकाली महाकाली भद्रकालि च दक्षिणा॥ १२-१२९॥

भृगुवंससमुद्भूता भार्गवी भृगुवल्लभा।

शूलिनी शुलहस्ता च मयूरवरवाहिनी॥ १२-१३०॥

महामांसरता रक्ता रक्तखर्परहस्तिनी।

१९४अ) रक्तासुरवरारामा रमणी सुरनायका॥ १२-१३१॥

परानन्दा पराज्येष्टा योगिनीगणसेविता।

अर्धजांववती सत्या सत्यभामा नगात्मजा॥ १२-१३२॥

रौद्रा रौद्रस्वतारौद्रा रौद्रदैत्यविनाशिनी।

कौमारी कौशिकि विद्या कालदैत्यविनाशिनी॥ १२-१३३॥

संभुपत्नी संभुरता संभुजाया महोदरि।

शिवपत्नि शिवरवा शिवजाया च शूलिनी॥ १२-१३४॥

हरपत्नी हरता हरजायांविका तथा।

मदनाका च कान्ता च मदनान्तकवल्लभा॥ १२-१३५॥

गिरिजा गिरिकन्या च गिरिशस्य च वल्लभा।

भूताभवा सृष्टा पावनापरिपालिनी॥ १२-१३६॥

अदृश्या व्यक्तरूपा च रवेष्टप्रवर्त्तिनी।

अच्युता प्रच्युता पुण्या प्राणदा वसवेश्वरी॥ १२-१३७॥

अपानिधि समुद्भूता धारिणी व प्रतिष्ठिता।

उद्भवा क्षोभनीक्षोभा श्रीगर्भा परमेश्वरी॥ १२-१३८॥

कारिणः पुष्टदेहा च कारिणी कंजलाचना।

शरण्या कमला प्रीता विमलानन्दवर्द्धिनी॥ १२-१३९॥

उदीवीभूषणमन्या सुरसेना सुरेश्वरी।

कल्पिनी च कल्पलता सुमतानन्दवर्धनी॥ १२-१४०॥

श्रीमति शक्तिराकान्ता शशिरा च भैरवी।

संमोह भैरवी पुष्टि भैरवी पुष्टिभैरवी॥ १२-१४१॥

सृष्टिस्थिति भैरवी व भैरवी स्थितिभैरवी।

पुण्डरीकाक्षगृहणी पुण्डरीकाक्षवल्लभा॥ १२-१४२॥

आवन्दसुन्दरी वीरसुन्दरी वितसुन्दरि।

गुणानन्म्दसुन्दरी कालसुन्दरी पुरन्दरी॥ १२-१४३॥

माया च सुन्दरी शौम्यसुन्दरी लोकसुन्दरी।

विद्या च सुन्दरी नीति सुन्दरि गुणसुन्दरि॥ १२-१४४॥

मल्लिकाहाररमिका मल्लिकाहारशोभिता।

१९४ब्) नवचंपवण्डीभानाराकेशरशोभिता॥ १२-१४५॥

जवाकुसुमसंकाशा जवाकुसुमशोभिता।

गुणाश्रया गुणवती गुणगौरवसुन्दरी॥ १२-१४६॥

लसत्तारापति प्रख्याना टंकद्वय शोभिता।

कुमुद्वती कुमुदनी कुमुदा कुमुदाकरा॥ १२-१४७॥

कौसंभपुष्परुचिरा कौशुंभारणमस्तका।

वृक्षमूलस्थिता देवि वृक्षशाखोपरिस्थिता॥ १२-१४८॥

वृक्षे मेदाग्रतिलया वृक्षमध्यनिवासिनी।

गुणशीलालिवनिता रूपयौवनशोभिता॥ १२-१४९॥

स्वयंभूः पुष्पसंकाशा स्वयंभूः पुष्पधारिणी।

स्वयंभूः पुष्पसरसीमग्रा ध्यानवती सदा॥ १२-१५०॥

शुक्रप्रिया शुक्ररता शुक्रमजन तत्परा।

पर्णिपर्णा सुपर्णा च निःपर्णा पापनाशिनि॥ १२-१५१॥

मदिरामोदसंपन्ना मदिरामोदधारिणी।

सर्वाश्रया सर्वगुणानन्दकवंवधारिणी॥ १२-१५२॥

नारीपुष्पसमप्राण नारिपुष्पसमुत्सुका।

नारीपुष्पो च तथ वा नारी पुष्परता सृती॥ १२-१५३॥

चतुर्भुजा दशभुजा अष्टादशभुजा तथा।

द्विभुजा च षट्भुजा च पंकजोपरिशोभिता॥ १२-१५४॥

कौवेरि कैरवीकुल्ल्या कुरुकुल्ला कपालिनी।

विपरितकदली जंघा रंभाना वामवल्लभा॥ १२-१५५॥

निशाचरी महामूर्त्तिर्निशाचन्द्रं समप्रभा।

स्त्रोतसुती स्त्रोतवनी सर्वस्तु गीर्त्तिनाशिनी॥ १२-१५६॥

सर्वाधारमयां सर्व सर्वानन्दप्रवर्धनी।

सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी सदा॥ १२-१५७॥

सहस्त्रमयना प्राण सहस्त्रनयन प्रिया।

सहस्रशीर्षा सुसमादन्ता सर्वभाषिता॥ १२-१५८॥

षष्टिका षष्टचक्रस्था षड्वर्गफलदायिनी।

षड्विंशपद्ममध्यस्था षड्विंशदलमध्यगा॥ १२-१५९॥

हकारपत्रनिलया हकाराक्षर भूषिता।

तारिणी तारयनि ताहाराहीरकशोभिता॥ १२-१६०॥

त्रिकारविश्वरहिता त्रिकारेक च शोभिता।

१९५अ) कदंवस्य कलाकल्प कौलिनीकुलतर्पिता॥ १२-१६१॥

केतकी कुसुमा प्रीता केतकीपरिभूषिता।

कर्पूरपूवचदना कलानाथ समप्रभा॥ १२-१६२॥

खड्वां च खंजनद्वन्द्व लोचना खगभूषणः।

कलौ प्रिया च कीनाश कदंवकुसुमोत्सुका॥ १२-१६३॥

कादंविनिकरिगंति कुंजरे श्वरगामिनी।

खद्योत इव दुर्लक्षा खद्योत इव चंचला॥ १२-१६४॥

गया गदा गुणप्रीगीतवाद्य प्रिया गति।

गणेश्वरी गणेज्या च गणपूज्या गणप्रदा॥ १२-१६५॥

गुणागुणसंपति गुणदात्री गुणात्मिका।

गुर्विगुरुतरागौरी गणपत्य फलप्रदा॥ १२-१६६॥

धर्मसुग्राहिणी धर्मा धर्माधर्मनिवासिनि।

घर्घराघोरवदना घोरदैत्यविनाशिनी॥ १२-१६७॥

घोरा घोरवती घूर्णा घोरपुत्री घनालया।

चर्चरी चारुनयना चारुरक्तचतुर्गुणा॥ १२-१६८॥

चतुर्वेदमयी चन्द्रा चन्द्रस्या चतुरानना।

वलचकोरनयना चलङ्खंजनलोचन॥ १२-१६९॥

चलदंभोजनयना चलदंभोज लोचना।

छत्री छत्रप्रिया छत्रा छत्रचामरशोभिता॥ १२-१७०॥

छिन्नछिद्रः छिन्नशिरः छिन्ननासा फलान्विता।

चलाद्या चलमन्त्रस्ता छलनाया छलाछिया॥ १२-१७१॥

छकारवत्रनिलया छकाराढ्या छलप्रिया।

छद्मिनी छद्मनिरता छलछद्मनिवासिनी॥ १२-१७२॥

जगनाथ प्रिया जीवा जगन्नाथ प्रिया जरा।

जीर्णजीमुतवनिता जीर्णमुर्त्तकशोभिता॥ १२-१७३॥

नामातृ वरदा जृंभा जयमलार्जुनधारिणी।

जवान्विता जवाजंभा जंभरामिवरप्रदा॥ १२-१७४॥

जिता जयत्री जयदा जयदात्री जयप्रदा।

ऋल्लरालिल्लती लिल्ली ऋरि ऋल्लरिका तथा॥ १२-१७५॥

टंकारकारिणी टीका टंकारटंकधारिणी।

टकाराघाटकारी तु तुलसी तालभक्षिका॥ १२-१७६॥

तुला तौलिनिकातीर्णा तारातारलिका तथा।

१९५ब्) तन्त्रविज्ञ तन्त्ररता तन्त्रविज्ञा च तन्त्रदा॥ १२-१७७॥

तत्रीकातन्त्रयोग च तन्त्रसारा च तन्त्रया।

तन्त्रधारी तन्त्रकारी तन्त्रनारी तरान्तरा॥ १२-१७८॥

तपः प्रभाततपज्ञा तन्त्रसारफलप्रदा।

तपस्या तौलिनी तीर्णा ह्यत्रया सुरभूषिता [-भूषि]॥ १२-१७९॥

तुषारकरपूर्णा स्या तुषारकरमण्डिता।

तुहिनां सुसमानास्था तुहिना सुसमप्रभा॥ १२-१८०॥

तुषारकरगुल्याङ्गी तुषारकरसुन्दरी।

तुषारधामतुल्या स्या तुषारसुसमप्रभा॥ १२-१८१॥

तुहिनादि सुतातर्पा तालांगी तालवर्जिता।

तारा सुरेणसहिता तारा सुरविभूषिता॥ १२-१८२॥

षकारषटनिलया षकाराक्षा विभूषिता।

दयावती दीनरता दुःखदारिद्रनाशिनी॥ १२-१८३॥

दौर्भाग्यदुःखदरिनी दौर्भाग्ययद नाशिनी।

दुहिता दीनवन्धश्च दानवेन्द्रविनाशिनि॥ १२-१८४॥

दानदात्री दानपरा दानसंमानदोषिता।

धान्यादि सेविता दाता दामोदरपरायण॥ १२-१८५॥

दधिची प्रवदात्वख्या दानवेन्द्रिविनाशिनि।

दीर्घनेत्रा दिर्घकचा दीर्घनासा च दीर्घिका॥ १२-१८६॥

दारिद्रदुःखशमनी दुःखासुररिपुदरि।

दंभिका दंभतादंभा दानवेन्द्रविनाशिनि॥ १२-१८७॥

धनधान्य प्रदा धन्या धनेश्वरधनप्रदा।

धर्मिणिधर्मिका धर्मा धर्मधर्मप्रवर्धनी॥ १२-१८८॥

धनेश्वरी धर्मधात्री धर्मानन्द् प्रवर्धनी।

धनाध्यक्षा धनप्रीता धनाढ्याधनतोषिता॥ १२-१८९॥

धीराधैर्यवती धृष्या धनदा भोजजसनिभा।

धरित्री धारिणी धात्री धुरिणा धवलाष्पदा॥ १२-१९०॥

धर्मिका धर्मसहिता धर्मनिन्दकवर्जिता।

नवीना नीरजातीस्रा निम्नदानी नगेश्वरी॥ १२-१९१॥

नूतनां भोजनयना नूतनांभोजसुन्दरि।

नागिनी नागराज्येज्या नागराजसुरालया॥ १२-१९२॥

१९६अ) नागराजगगती उग्रा नागमाल्या विभूषिता।

भागीश्वरी नगारूढा नागराजकुजेश्वरी॥ १२-१९३॥

मवीनैककलानन्दी नन्दिकेश्वरवल्लभा।

नीरजा नीरजाक्षी च नीरजद्वंद्वलोचना॥ १२-१९४॥

नीरप्रसूता नीरभवानी रभवानीरनिर्मलदोहिनि।

नागयज्ञोपवीताढ्या नागयज्ञपवीतिनी॥ १२-१९५॥

नागकेसरसन्तुष्टा नागकेशरमालिनी।

नवीततकीकुन्द मकरन्दामभूषिता॥ १२-१९६॥

नायिका नायिका प्रीता नायिका प्रीत तोषिता।

नायिका प्रेतसहिता नायिका प्रेम तोषिता॥ १२-१९७॥

नायिकानन्दनिलया नायिका नाचकारिणी।

नाकर्मरतानिद्रा नकर्मपरायण॥ १२-१९८॥

नर्मकप्रियनाम्नी च नर्मधर्मपरायणा।

नर्मप्रीता नर्मरता धर्मध्यानपरायणा॥ १२-१९९॥

नर्मकर्मैकसहिता नर्मकर्मैकपालिनि।

नरनारी गुणप्रीता नरनारी वरप्रदा॥ १२-२००॥

नारायण परानिष्का निकवर्णा नकारता।

पुष्प प्रिया पुष्परता पुष्पियान परायणा॥ १२-२०१॥

पुष्पप्रिया च पुष्पैज्या पुष्पदामविभूषिता।

पुण्यदा पूर्णिमा पुण्या पुण्यकोटि फलप्रदा॥ १२-२०२॥

पुराणा गर्भवेद्या च पुराणागमगोपिता।

पुराणागमगोप्या च पुराणागमतोषिता॥ १२-२०३॥

पुराणा गोचरा पूर्वा प्रौढविनाशिनि।

प्रह्लादहृदया हेला गिहिनी पुण्यचारिणि॥ १२-२०४॥

फल्गुनी फाल्गुणप्रीता फल्गुणप्रेतधारिणी।

फलदात्री कलासक्ता फलाभरणभूषिता॥ १२-२०५॥

फकारकूटसर्वाङ्गी फाल्गुणानन्दवर्द्धिनी।

वासुदेव रता विज्ञा विज्ञानकारिणी॥ १२-२०६॥

वीणावती वलकेन्द्री वा वीयूषसमादिष्या।

वाला व सुमती वन्द्या विद्याहारविभूषिता॥ १२-२०७॥

विद्यावती वैद्यपदा पीता वैवसुतीवलि।

१९६ब) खानिविलासकारिणी वरांगस्था वरानना॥ १२-२०८॥

विश्रोर्वहुस्थला स्थूला पार्वती विन्ध्यवासिनि।

वाणी च वरुसंस्था च वाणीरंगसमुत्सुका॥ १२-२०९॥

भीतिहा भयहा भानुरंशुजालसमप्रभा।

भार्गवेज्या भृगुः पूज्या भारद्वाजनमस्कृता॥ १२-२१०॥

भीतिहा भयसपन्न भीमाकारा च सुन्दरी।

मायाधारी * * * * मानसंमान तत्परः॥ १२-२११॥

माधवानन्ददामाध्वी मदिरामदिरेक्षणा।

महोत्साहगुणोपेता सतती मदनोद्भुता॥ १२-२१२॥

मदिरामोदवनिता मदिरा मजने रता।

यशोधरी यशो विद्या यशोदानन्दवर्धनीः॥ १२-२१३॥

यशः कपूरधवला यशोदामविभूषिता।

यमस्वसायोगमार्गा योगनन्दप्रवर्द्धनी॥ १२-२१४॥

आनन्दकारिणी यादवानन्द प्रवर्द्धनी।

यज्ञप्रीता यज्ञमयी यज्ञे कर्मविभूषणा॥ १२-२१५॥

रामप्रिया रामरता रामतोषन तत्परा।

यज्ञे राज्यकुलेज्या च राजराज्येश्वरी रमा॥ १२-२१६॥

रामारामीमणिरम्या रामानन्दप्रवर्द्धनी।

रजनिकरपुत्रास्या रक्तोत्पलविलोचना॥ १२-२१७॥

लांगली प्रेममन्दस्या लांगली प्रणयप्रिया।

लाक्षारूणा च ललिना लीलावती * * लया॥ १२-२१८॥

लंकेश्वरगुणप्रेता लेकशावरदायनी।

वाता विवस्थित गृहनिर्विवस्वत प्रेमधारिणी॥ १२-२१९॥

सरलासरलागण्या शरेण्या श्रीशरवल्लभा।

षड्कोणमध्यपद्मस्था संपदात्रिविशोभिता॥ १२-२२०॥

क्षेम्या वा च तथाज्ञा च द्धद्ध ईकारवल्लभा।

अग्राख्या च तथा चेणी इकारादि सुरोद्भवा॥ १२-२२१॥

ऋकारवर्णकुटस्था ऋकारस्वरभूषिता।

एषा चैष्या तथा चोष्या ॐकाराक्षरधारिणी॥ १२-२२२॥

अशः अकारनिता सर्वागमसुगोपिता १०००॥

यदुदं पठति स्तोत्रं प्रत्यहं भक्तिसंयुतम्॥ १२-२२३॥

दिवारात्रौ तथा सन्ध्या समयी समयेश्वरः।

स्तवमात्रस्य पाठेन राजा किंकरवामियात्॥ १२-२२४॥

१९७अ) सर्वागमेसु संपूज्या सर्वतन्त्र स्वयं नरः।

शिवस्थाने व शय्यायां शून्यागारे च चतुष्पथे॥ १२-२२५॥

यः पठेच्छृणुयाद् वापि सयोगिनात्र संशयः।

यानि नामानि सत्यस्मि प्रसंगादति वैरिणा॥ १२-२२६॥

संग्राख्यातानि नामानि वान्यानि च सदाशिव।

हररसगृह्णीयसस्पृशे तुलसीदलम्।

नान्यचिन्ता प्रकर्त्तव्या नान्य निन्द्यं कदाचन॥ १२-२२७॥

वातस्तंभं जलस्तंभं मतिस्तंविश्वग्वत।

वह्वः शैन्यं करोत्येव सुवश्यां शेवकीर्त्तनात्॥ १२-२२८॥

श्रीयकरं पठेत् पूर्णा मरी नदी तेह धारय।

मोहयद् रादामास्युर्देवात्रयि वशनं येत्॥ १२-२२९॥

यः पठे श्रृणुयाद् वापि एकचित्तेन सर्वदा।

सदीर्घायु सुखीचारमीर्वाशीतस्य वशंकरी॥ १२-२३०॥

ससर्वतीर्थाभिषेकेन गयोश्राद्धेन यत्फलम्।

तत्फलं सकलं तस्य यः पठेद् एकचित्ततः॥ १२-२३१॥

येषामाराधये श्रद्धा ये साद्यतमुद्यतः।

तेषां कृतार्थः सर्वत्र गतिर्देव पदालयः॥ १२-२३२॥

सतुसुकुलमता मध्ये स्थित्वा दण्डन तादयेत्।

जप्त्वा स्तुत्वा महाकाली गच्छेद्वैतरिकां पदम्॥ १२-२३३॥

अष्टम्यां च चतुर्दश्यां नवम्यां सनिवासरे।

संक्रान्तौ मंगले रात्रौ अमावास्यां [व-] च योर्चयेत्॥ १२-२३४॥

हर्षव्याघात देवेशि तस्य धीनं च संधपः।

मृतपुत्रा च या नारी दौर्भाग्यं पदपीडिता॥ १२-२३५॥

वंध्या वा काकवंध्या वा मृतपुत्रा च यांगना।

धनधान्यविहिनादि रोगशोकाकुला च या॥ १२-२३६॥

तातिरेव महादेवि भूर्जपत्रेपि लिख्यते।

सद्योभुजे च वध्नीयात् सर्वसौख्यवती भवेत्॥ १२-२३७॥

एवं पुमात्रपि प्राप्तो दुःखेन परिपिडितः।

सभा या व्यसने घोरे विवादे शत्रुसंकटे॥ १२-२३८॥

चासुरंगे महायुद्धे सर्वत्रपादपीडिते।

स्मरणाद् एव कल्यानि संक्षयं याति दूरतः॥ १२-२३९॥

पूजनीया प्रयत्नेन शून्यागारे शिवालये [वि-]।

१९७ब) विल्ववृक्षतटे देवि सर्वदा कुलमण्डपे॥ १२-२४०॥

अपूपपिष्टसंयुक्तै नैवेद्यं च तथोदितैः।

नैवेद्यतस्तुय देव्यै भक्त * वावधानतः॥ १२-२४१॥

तं न चेद् भुज्यते महाद्भक्ति तस्य शिवे स्वयम्।

अनेनैव विधानेन योर्चयेत् परमेश्वरीम्॥ १२-२४२॥

सभूमिवलये देवि साक्षा दर्शन संशयः।

महाशंखेन कल्पाणि कुर्वं कार्यजपादिकम्॥ १२-२४३॥

कुलसर्वस्वकस्यैव प्रभवो वर्चितं स्वया।

नशक्यते सममातं कवर्षकोटिशतैरपि॥ १२-२४४॥

किंचिन् मया तु चापल्पा कथितं परमेश्वरीम्।

जन्मान्तरसहस्रेण वर्णितो नैव शक्यते॥ १२-२४५॥

कुलीनाय प्रदातव्यं तव भक्तिपराय च।

नदेयं देवदेवेशि गोप्यं सर्वागमे सदा॥ १२-२४६॥

पठनीयं सदा देवि सर्वागमे * * सदा।

पठनीयं सदा देवि सर्वावस्था सुदुर्लभा॥ १२-२४७॥

इति श्रीनीलतन्त्रे तारानीलसरस्वती सहस्रनामसमाप्तम्॥

अथ तारास्तोत्रम्॥

ॐ घोररूपे महारावे सर्वशत्रु क्षयंकरि।

भक्तेभ्यो वरदे देहि त्राहि मां शरणागतम् (१)॥ १२-२४८॥

सुरासुरार्चिते देवि सिद्धगन्धर्व सेविते।

जाद्य पापहरे देवि त्राहि मां शरणागतम् (२)॥ १२-२४९॥

जटाजूटसमायुक्ते लोलजिह्वानुकारिणि।

द्रुतवुद्धि करि देवि त्राहि मां शरणागतम् (३)॥ १२-२५०॥

सौम्यरूपे क्रूररूपे चण्डरूपे नमोस्तु ते।

सृष्टिरूपे नमोस्तुभ्यं त्राहि मां शरणागतम् (४)॥ १२-२५१॥

जडानां जडता हंसि भक्तानां भक्तवत्सवल।

मूढतां हर देवेशि त्राहि मां शरणागतम् (५)॥ १२-२५२॥

हूँ हूँकारमये देवि वलिहोम प्रिये नमः।

उग्रतारे नमो नित्यं त्राहि मां शरणागतम् (६)॥ १२-२५३॥

वुद्धिं देहि यशो देहि कवित्वं देहि देहि मे।

मूढत्वं हर देवेशि त्राहि मां सरणागतम् (७)॥ १२-२५४॥

दुद्रादिदिविषदुवृन्दं वन्दिते करुणामयि।

तारे ताराधिनाथास्ये त्राहि मां शरणागतम् (८)॥ १२-२५५॥

१९८अ) अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः।

षण्मासैः [षणासैः] सिद्धिमाप्नोति नात्रकार्या विचारणा (९)॥ १२-२५६॥

मोक्षार्थी लभते मोक्षं धनार्थी लभते धनम्।

विद्यार्थि लभते विद्या तर्कध्या करणादिकाम्॥ १२-२५७॥

इद [इदं] स्तोत्र पठेद् यस्तु सततं लभते नरः।

तस्य शत्रु क्षयं याति महाप्रज्ञा च जायते (१०)॥ १२-२५८॥

पिडायां वापि संग्रामे महोत्पाते तथा भये।

यदुद पठते स्तोत्रं शुभं तस्य नसंशयः (१२)॥ १२-२५९॥

इति ताराकल्पे महोग्रतारा स्तवराजः समाप्त इति भद्रम्॥

मातर्नीलसरस्वती प्रणमतां सौभाग्य संपत् प्रदे प्रत्यालीढ पद स्थिते
शव हृदिं स्मेराननां भोरुहे।

फुल्लेदीवरलोचने त्रिनयने कर्तृकपालोत्पले खड्गचादधतीं सुरासुरप्रियं
त्वामीश्वरीमाश्रय (१)॥ १२-२६०॥

वाचामीश्वरि भक्ति कल्पलतिके सर्वार्थसिद्धिश्वरी गद्य प्राकृति पद्य
जातवछने सर्वज्ञ सिद्धिप्रदम्।

निलस्निग्धविलोचन त्रययुते कार्येणा वारां निधे सौभाग्यामृतवर्षणे न
कृपया सिंचत्वमः स्मद्दशम् (२)॥ १२-२६१॥

खर्वा सर्वसमूह पूरित ततो सर्वांगवेशोत्वले व्याघ्रत्वकुपरिवितं सुदरि
कटिव्या

धूतघण्टाकिते सद्यः कर्भृगलद्रजपरिमिलन् मुद्रत्रयी मूर्षजे
ग्रन्थश्रेणि नृमुण्डदामललितेर्भामे भयनाशयः (३)॥ १२-२६२॥

माया न गविकार वह्नि कमले विन्दुर्धचन्द्रात्मिके हूँ फत्कारमपि त्वमेव

शरणं मन्त्रात्मिके मादृश।

मूर्त्तिस्त्रेजननित्रिधामघटिताम् वुजाति सूक्ष्मा परा वेदानां न हि गोच

कथमपि प्राप्तानतामाश्रये (४)॥ १२-२६३॥

मातस्त्वन्यद् असेवया सुकृति नागछन्ति संपूज्यता तस्य श्रीपरमेश्वरी

त्रिनयने ब्रह्मादि मात्र्यात्मनः।

संसारा वुद्धिमज्जना पहतनू देवेन्द्रमुख्या स्वरामातस्वत् पदसेवने हि

विमुखा किं मदधी सेवते (५)॥ १२-२६४॥

१९८ब) मातस्त्वत् पदपंकजद्वय रजोमुद्रां ककोटिरिणस्ते देवासुरसंगरे

विजयि नोनिःशंकमन्तर्गता।

देवस्ते भुवने मेसम इति स्यर्द्धा वहन्तः परै वाहुल्याति यनं यथा

शुचिरविनाशं व्रजन्ति स्वयः (६)॥ १२-२६५॥

त्वन्नामस्मरणात् पलायत परादृष्टं च शक्तानता भूतप्रेतपिशाच-

राक्षसगणा यक्षश्च नागाधिपाः।

दैत्या दानवपुंगवाश्च खचरा व्याघ्रादिका जंतवो

डाकिन्यकुपितान्तकाश्च मनुजं मातक्षणं भूतले (७)॥ १२-२६६॥

लक्ष्मीः सिद्धिगणाश्च पादुकमुखाः सिद्धिस्तथा वारिणां स्तंभस्वापि

रणाङ्गते गजघटास्तंभे तथा मोहनम्।

मातस्त्वत् पदसे वया खलुनृणां सिध्यन्तिते ते गुणाः कान्ति कान्ति

मनोभवस्य भवति छिद्रोपि वाचस्पति (८)॥ १२-२६७॥

उग्रताष्टकमिदं भक्तिमान्यः पठेन् नरः।

प्रातर्मध्याह्नकाले च सा पर्वनियतः शुर्चिः॥ १२-२६८॥

लभते कवितां दिव्यां सर्वशास्त्रर्थविद्भवेत्।

लक्ष्मी मनसितां प्राप्य भुक्त्वा भोगान् पथे स्थितान् (९)॥ १२-२६९॥

कीर्त्तिशान्तिं च नैरूज्यं सर्वेषां प्रेयतां तथा।

विख्यातिं चैव लोकेषु प्राप्तान्ते मोक्षमाप्नुयात्॥ १२-२७०॥

इति श्री-उग्रताराष्टकं समाप्तम्। नक्षत्रे विद्या नविकृत्य।

मनुर्विसृष्य दातव्यो ज्येष्टस्यापि विनीतताम्।

पुत्रस्य किमुतान्यस्यै विगोत्राय स्वपौरुषम्॥ १२-२७१॥

ज्येष्टस्यापि पुत्रस्य विनयं ज्ञात्वा दातवः।

तथा च॥ १२-

पितु दीक्षायते दीक्षा दीक्षा च धनवासिनः॥ १२-२७२॥

अताश्रमिणां दीक्षा सा दीक्षा धननाशिनी।

इति वचनम्।

कौलिकदीक्षा रिक्तदीक्षा निषिद्धपरं किमुतान्यस्मै भिन्नगोत्राय स्वपौरुषं यश दद्यादिति संवन्धः।

तथा च॥

सर्वदा गोपदे मनुं स्वगुरुमेव च।

१९९अ) तेन वीर्यवती विद्या निर्वियार्या स्यात् प्रकाशकः॥ १२-२७३॥

उत्वादक ब्रह्मधात्रोर्गरियात् ब्रह्मदपिता।

तस्मान् मन्येतसततं पितुरप्यधिकं गुरुन्॥ १२-२७४॥

तथा॥

उपदेशाद् अंगमन्त्रो वलिमन्त्रस्तथैव च।

ज्ञातव्यो विदुःखः सिद्धिरस्य मन्त्रस्य लाभतः॥ १२-२७५॥

अंगमन्त्रो जलाधिष्टानादिमन्त्र। तथा॥

उयांशूः स्या छतगुणः सहस्त्रो मानसो जप।

अचिराद् आगतः सिद्धिर्महाशंखस्य मालया॥ १२-२७६॥

इति वलिमन्त्रपूजापद्धता वुक्तः॥

तदुक्तं च मत्स्यसूक्ते॥

लीलया वाक् प्रदा चेति ततो नीलसरस्वती।

तारत्वा स्मृता तारा भुक्तिमुक्तिप्रदायिनि॥ १२-२७७॥

उग्राय त्तारिणी यस्माद् उग्रतारा प्रकीर्त्तिता।

तारा चैकजटा चैषा महामुक्ति करी मताम्॥ १२-२७८॥

कुब्जिकातन्त्रे॥

यस्मिन् मन्त्रे य आचारस्तत्र धर्मो पिता दृशा।

कृतार्थस्तेन जायेत स्वर्गं वा मोक्षमेव वा॥ १२-२७९॥

त्रांतिस्तत्र नकर्त्तव्या सिद्धिहानिः प्रजायते।

विशुद्धचित्तोत्र भवेत् सिद्धि स्यादःपवर्गदा॥ १२-२८०॥

महाचीनक्रमां नत्वा तारां त्रिभुवतारिणी।

तत् साधनमहं वक्ष्ये श्रृणु सार्वज्ञकारणम्॥ १२-२८१॥

महाचीनो देशविशेषः तत्र वौद्धा निवसन्ति न यथा चारेण

तामाराधयन्ति ते नैवाचारेण तामाराध्य शीघ्रं फलमाप्नोति।

तत्रक्रमश्च।

पूजनं मानसं दिव्यं मानसतर्पणादिकम्।

सर्वत्रैव शुभः कालो नाशुभो विद्यते क्वचित्॥ १२-२८२॥

नविशेषो दिवा रात्रौ नसन्ध्यायां महानिशि।

वस्त्रासनस्था नगेहदेह स्पर्शादि वारिण॥ १२-२८३॥

शुद्धिं न चाचरेत् तत्र निर्विकल्पं मनश्चरेत्।

सर्वदा पूजये देवी स्नात कृत भोजन॥

अस्नातो जलस्वानरहितः॥

तदुक्तं गौतमी तन्त्रै॥

मात्रं भौमं तथाग्रे यं वायव्यं दिव्यमेव च॥ १२-२८४॥

वारुणं मानसं चैवा स्नानं सप्तविवं स्मृत।

१९९ब्) आपो हिष्टेति मन्त्रमित्यादि॥

इति केचित् तच्चिन्त्यम्॥

महानिशि शुचौ देशे वलिमन्त्रेण दापयेत्॥ १२-२८५॥

स्त्रीद्वेषा नैव कर्त्तव्या विशेषात् पूजनं स्त्रिया।

जयस्थाने महाशंखं निवेद्योर्ध्वं जयं चरेत्॥ १२-२८६॥

भक्षणं तांवूलमन्यार्भं भक्ष्य द्रव्यान्यथा रूवीन्।

मांसमत्स्य दधिक्षौद्र पयः सा कल्पमैक्षवम्।

भक्त्याय शेषद्रव्याणि दत्वा पूज्यचरे जपम्॥ १२-२८७॥

दिगादिनियमो नात्र स्थित्यादि नियमो न च।

जपेन कालनियमो नार्चादिषु वलिष्वपि॥ १२-२८८॥

स्वेछा नियम दुक्तोत्र महामन्त्र स्वसाधने।

नाधर्मोजायते तेन कश्चि धर्मः प्रजायते॥ १२-२८९॥

स्वेच्छा वारोत्र गदितः प्रचरे छुद्धमानसः।

कृतार्थं मत्यमानस्तुभ्यं तुष्टो निजमानसे॥ १२-२९०॥

मत्स्यसूक्ते।

एतत् साधक निन्दां वा एतन् मन्त्रस्य वा पुनः।

महाभूतगणैः सार्द्धं तस्य जीवं हराम्यहम्॥ १२-२९१॥

अत्र मन्त्रस्यापासनायां स्थानमाह।

एकलिंगे श्मशाने वा शून्यागारे चतुष्पथे।

तत्रस्थः साधयेद्योगी तारां त्रिभुवसाक्षिणी॥ १२-२९२॥

एकलिंगं पंचक्रोसां तरे लिंगशून्य। तदुक्तम्॥

पंचक्रोशांतरे यत्र नलिंगान्तरमीक्षते।

तदेकलिंगमाख्यातं तत्र सिद्धिरनुत्तमा॥ १२-२९३॥

यस्तु संपूजये दुर्गां महाष्टम्यां प्रयत्नत।

त्रिजन्मनार्जितं पापं तत्क्षणाद् एव नाशयेत्॥ १२-२९४॥

मत्स्यसूक्ते॥

तारिणी यत्र पीठे च शिला रूपा व तिष्ठति।

तत्र यत्नेन कर्त्तव्यं कलिसंख्या न विद्यते॥ १२-२९५॥

कलौ संख्या चतुर्गुणा इति॥

संख्यानुवर्त्ततेत्यर्थः।

लक्षत्रयं जपेन् मन्त्रं तारिणि यत्र तिष्ठति।

निस्पृहस्थि च पितेन पूजो कृत्वा विशेषतः॥ १२-२९६॥

२००अ) सुगन्धश्वेतलौहित्य कुसुमैरर्चयेदलै।

मधुना पायसं चैव क्षीरमाज्यं च शर्कराम्॥ १२-२९७॥

दलैः पत्रैः।

वलिं दद्या च गोधां वै भक्ति चैव विशिष्यते।

नीलतन्त्रे। आसवमाह॥

ब्रह्मणैस्तु सुरा देया गुडा ईकरसेन तु॥ १२-२९८॥

नक्रं वा सगुडं दद्यात् सर्वकामार्थ सिद्धये।

नारिकेलोदकं कांस्ये ताम्रे वा विसृजेन्मधु॥ १२-२९९॥

रंभाफलं सालमत्स्यं जुहुयान् मन्त्रवित्तम।

सर्वां सिद्धिमनुक्रम्य अन्ते मोक्षमवाप्नुयाम्॥ १२-३००॥

तन्त्रान्तरे।

सर्वेषां जीवहीनां नाजंभूनां वीरसाधने।

ब्राह्मणं गोमयं त्यत्का साधयेद् वीरसाधनम्॥ १२-३०१॥

ब्राह्मणं च स्त्रियं त्यत्का साधयेद् वीरसाधनम्।

क्षुद्रा प्रयोग कर्तृणां प्रशस्ता सर्वसिद्धये॥ १२-३०२॥

शून्यागारं व शून्यं विर्जन वा गृहं पुन।

तदुक्तम्॥

देवागारे देवशून्ये निर्जनैकान्त वेश्मति॥ १२-३०३॥

उज्ञठे पर्वते वापि तिर्जने वा चतुष्पथि।

मन्त्रप्राप्तौ कर्त्तव्यमाह।

अवाप्य मन्त्रं विधिवत् परितोष्य तथा गुरुम्॥ १२-३०४॥

मृदुकंवलमासीने ष्टन्येषु कंवलेषु वा।

विष्टरेषु समाश्रित्य साधयेत् सिद्धिमुत्तमाम्॥ १२-३०५॥

तथा चोक्तम्।

ब्रह्मणा पूर्वमस्मभ्यं मया तुभ्यं तगात्मजे।

नीलसारस्वते मन्त्रो कविता विता विघ्नकारिणी॥ १२-३०६॥

अनास्था तु द्वितीयं तु न किंचि विघ्नकारणम्।

कवितेति कविता भवत्येव अनास्था विघ्नकारणं नेत्रत्यर्थ। इति कश्चित्॥

वस्तु नस्तु न किंचिदपि पाठः तेन वाग्भवपदे वि ---------------------------

श्रीगणेशाय नमः॥

अज्ञानतिमिरंध्वंसि संसारोद्धारकारकम्॥ १२-३०७॥

आतन्दकं दमवता दनर्क्यं त्रैपुरं मह।

२००ब्) वाराहीतन्त्रे॥

आद्या कृतयुगे शस्त्रा या वालेति निगद्यते॥ १२-३०८॥

त्रेतायां ललिता शस्ता पंचकुटा तु द्वारे।

षट्कुटा च कलौ शास्ता सर्वतन्त्रेषु गोपिता॥ १२-३०९॥

सर्वकाले सर्वयुगे सुन्दरी परमेश्वरी।

षड्कुटा च मायावीज युक्ता तत्रैव वाराहितन्त्रावतारात्।

ज्ञानार्णवे॥

त्रिपुरा त्रिविधा देवि वाला तु प्रथमं श्रृणु॥ १२-३१०॥

यस्य विज्ञानमात्रेण साक्षात् सुरगुरुर्भवेत्।

यथा॥

सूर्यस्वरं समुचार्य विन्दुनादकलात्मकम्॥ १२-३११॥

स्वरान्तं पृथिवीस्थं तुर्यस्वरविभूषितम्।

विन्दुनादकलाक्रान्तं सर्गवान् भृगुरव्यय॥ १२-३१२॥

शक्रस्वरसमोपेता विद्येय त्र्यक्षरी मता।

सूर्यस्वर ऐँकारः स्वरान्तः ककारः पृथिवीलकारः।

तुर्यस्वरः ईकारः शक्रश्वर औकार।

तेन। ऐ क्लीँ सौँ। इति मन्त्रा।

अधरो विन्दुमालाढ्यो व्रह्मीन्द्रः शशियुतः॥ १२-३१३॥

द्वितीयो भृगुसर्गाढ्यो मनुस्तार्तीयमीरितम्।

एषां वालेति विख्याता त्रैलोक्य वशकारिणि॥ १२-३१४॥

अधरः ऐँकारविन्दुरनुस्वार॥

ब्रह्माककारः इन्द्रो लकारः शशी विन्दु॥

ईयुतः भृगुः सकारः सर्गाद्यो विसर्गाढ्य मनु औकार।

ऐँ क्लीँ सौ इति मन्त्र।

गंगा तरंगकल्लाल स्फुरद् वा कुपददायिनी।

महासौभाग्यजननी महासौख्य प्रदा भवेत्॥ १२-३१५॥

महासौन्दर्य शुभगा महामृत्यु विनाशिनी।

२०१अ) सर्वतीर्थमयी देवी स्वर्णरत्नादिदा भवेत्॥ १२-३१६॥

महामोक्ष प्रदा नित्यं महाभोग प्रदायिनी।

वग्भवेन न्दुसहसा वागीशत्व प्रदायिनी॥ १२-३१७॥

कामराजेन वीजेन शरगोप स्फुरत्विषा।

त्रैलोक्यं मोहयन्तीय शक्तिवीजेन सुव्रते॥ १२-३१८॥

सुवर्णवर्णवर्णान सौभाग्यं तस्य मन्दिर।

तथा दक्षिणामूर्तितन्त्रे॥

आदिमाचिंच मध्यं च मध्यं मध्यं तथातिम
अत्यं मत्यं तथात्यं च सैवशीघ्रफला भवेत्।

नवर्णा त्रिपुरेशानि प्रणवेन दशाक्षरी।

आदिः ऐंकारः पुनरपि स एव। ऐँ ऐँ भवति मध्यं कामवीजं क्लीँ पुनरपि
वारद्वयं तदेव।

एवम्॥

क्लीँ क्लीँ क्लीँ अन्त्यं सौः पुनरपि वारद्वायं देव।

सौँ सौँ सौँ॥

इति भवति। तदा हि वीजं ऐँ मण्डा ते देयम्।

तथा। ऐँ ऐँ क्लीँ क्लीँ सौ सौः सौः ऐँ इति मन्त्र।

एतस्यादौ प्रणवे दत्ते दसाक्षरो भवेत्।

यथा।

ॐ ऐँ ऐँ क्लीँ क्लीँ सौः सौः सौः(ँ) ऐँ। इति मन्त्र॥

अस्य पूजादिके यं यत् प्रदाये पूजावत्।

ज्ञानार्णवेपि।

सिंहासवगता देवी कथं शा त्रिपुरा शुभा॥ १२-३१९॥

कथयस्व महेशान कथं सिंहासनं भवेत्।

शिवचन्द्रौ वह्निसंस्थौ वाग्भवं नन्दनन्तरम्॥ १२-३२०॥

शिवो हकार चन्द्रसकार वह्निरस्तवाम्भव ऐँकार तेन हसैँ इत्येव भवति।

कामवीजं तथा देवि शिव चन्द्रान्वितं ततः।

२०१ब) पृथ्वी वीजं तु वह्न्याद्यं तार्तीयं श्रृणु वल्लभे॥ १२-३२१॥

कामवीजं ककारः।

शिवो हकार चन्द्रसकारः।

पृथ्वी वीजं लकार।

वह्निरेःफ वामाक्षि विन्दुयुक्।

तेन। हसकलरी। इति भवति। कुमार्य परमेशानि हित्वा गर्भ तु वैन्दवम्।

शक्तिवीजं महेशानि शिव * ह्नि नियोजयेत्।

त्रिपुरा भैरवी देवी महासंपत् प्रदायिनि॥ १२-३२२॥

कुमार्यस्तृतीयवीजे स्थितं विसर्गं दुरी कृत्य विन्दुयुक्तं कुर्यात्।

तेन सौ शिवो हकार वह्नि रेफः तेन हसरौ इति भवति।

तथा च।

हसरै हसकलरी हसरौ इति मन्त्र। तत्र विशेषमाह।

पृथ्वी वीजमिति हित्वेनि तादृशं कृत्वा सर्गं दूरी कृत्य विन्दुं योजयेद्
इत्यर्थः।

अत एव तन्त्रान्तरे।

संपत् प्रदा भैरवी यं तत्रार्तीय वीजक।

भिन्नं हित्वा नतः सर्ग निक्षिपे सुन्दरीत् यत्र विदौः सहजिकस्य परित्याजित्व मुक्तं तृतीय वीजे हकारो नास्त्यवेति केचित्।

वियद् भृगुहुताशस्था भौतिको विन्दुशेखरः।

वियत् तदादि केन्द्राग्नि स्थित वामाक्षि विन्दुमत्॥ १२-३२३॥

आकाश भृगुवह्निस्थो मनुः सर्गेन्दु खण्डवान्।

वाग्भवं प्रथमं वीजं कामराजद्वितीयकम्॥ १२-३२४॥

तृतीयं शक्तिवीजाख्यं त्रिभिर्वीजैरुदाहृता।

पंचकूटात्मिका विद्या त्रिपुरभैरवी * *॥ १२-३२५॥

पंचकूटात्मिकेति पंचकूटमन्त्रवर्णघटितेत्यर्थ।

दीक्षां प्राप्य विशिष्टलक्ष युज सत्संपत् प्रदायाद् गुरो लब्धा
मन्त्रमनुं जपेत् सुनियतं तत्त्वा व लक्षावधि।
स्वाद्वक्तैश्च न चैः पलाशकुसुमैः सम्यक् समिद्धे नले मन्त्री भानु
सहस्त्रकं प्रति हुनेदश्वारि सूनैरपि।

अश्वारिसूनै करवीरपुष्पै।

देव्या दशतत्त्वानि द्वादशतत्त्वानि वा।

विशुद्धदेहो देवेशि ततो न्यासं समाचरेत्।

ऋषिरस्य महेशानि दक्षिणामूर्त्तिरव्यय॥ १२-३२६॥

२०२अ) न्यसे क्षिरसि पूज्यत्वात् पक्तिछन्दो मुखे प्रिये।

देवता हृदये वाला त्रिपुरा परमेश्वरी॥ १२-३२७॥

वीजवाग्भवमित्युक्तं शक्तिस्तास्तीय मूहयेत्।

नाभेराचरणं न्यस्य गलदा नाभि चापरम्॥ १२-३२८॥

मूर्धादि गलपर्यन्तं त्र्यक्षरं विन्यसेत् क्रमात्। एवम्॥

नाभे वा चयणं सेद् वाग्भवं मन्त्रवित्तम॥ १२-३२९॥

हृदया नाभिपर्यन्तं कामवीजं प्रविन्यसेत्।

इत्यादि निवन्धेषु वाग्भवादि पदेन परिभाषणा च।

उन्मूले त्वे नैव भैरव्यादीनामपि तथा ह्वेताम्।

एवं वीजैस्त्रिभिरिति प्रपंचसारोथे तत्पर एव साधारण अब्दात् [शक्ष्यत]?।

यत्र वामं द्रपेद् वीजं तत्परं वाग्भवादि पंकम विशाषात्।

वामे पाणितले चैकं दक्षिपाणि तले तथा॥ १२-३३०॥

उभयोः संपुटे विद्या त्रिवीजं विन्यसे छेवे। एवम्॥

चाद्यं द्वितीयं करयोस्तास्तीयमुभयो न्यसेत्॥ १२-३३१॥

मूर्द्धाधारे हृदि न्यस्य भूयो वीजत्रयं क्रमात्।

इति निवन्धे व्ययमेव क्रमोद्धव्य।

एकवाक्यता वलान्।

तथा प्रमाणकौमुद्याम्।

विद्या न्यासं तत कुर्या त्रिभिर्वीज क्रमा छिवे॥ १२-३३२॥

करयो विन्यसेद् आदौ मणिवन्धे तले ग्रके।

दक्षे वामे च विन्यस्य कक्षकूर्परपाणिषु॥ १२-३३३॥

पुनर्दक्ष तु वामे तु पादयोश्च तथा न्यसेत्।

नादान्ते हृदये लिंगे न्यस देवि ततः परम्॥ १२-३३४॥

एते संगेषु देवेशि संहारक्रमतो न्यसेत्।

विद्या सृष्टिक्रमेणैव जानी हि परमेश्वरि॥ १२-३३५॥

नवयोन्यात्मके न्यासं कुर्याद् वीजैस्त्रिभिस्ततः।

कर्णयोश्चिवुके भूयो गण्डयोर्वदने पुनः॥ १२-३३६॥

नेत्रयो नसि विन्य्सेद् वाहुयुग्मे हृदंवुजे।

ततः पूर्परयोः क्षौजानुनोर्ध्वजमूर्धनि॥ १२-३३७॥

पादयो गुह्यदेशे च पार्श्वयो हृ स्तनद्वये।

कठे च तव योन्याख्यं न्यसेद् वीजत्रयं क्रमात्॥ १२-३३८॥

वाहुयुगा इत्यत्र अंसयोर्जठरे पुनरिति निवेधेषु पाठ।

२०२ब) कर्णादौ वामदक्षिणक्रमेण न्यास।

हस्त न्यासे तथा प्राग्दर्शनात्।

वीजैस्त्रिभिर्न्यसेद् वस्ततले च शत्र्यदक्षद्वयं द्वितमष्युभयो तृतीयमिति प्रपंचेष्ध्यभिधान्तन्।

एकत्र निर्णित इति न्यायात्।

किं च अत्रापि न्यासे सव्ये क्षणयो ललाटे ततो वुधः कर्णयुगे चक्रे चेति त्रिपुरा साराभिधानात्।

सव्यपदस्य दक्षेपि न्यासेक्ता त्वात्।

दक्षादिरेवात्र क्रम इति प्रांच।

अथ यन्त्रोद्धार।

ततो तर्यजनं कृत्वा वाह्यन्हपूजां समाचरेत्।

तत्र प्राङ्मुख श्रासीनो यन्त्रोद्धारं प्रकल्पयेत्॥ १२-३३९॥

इशानादग्नि पर्यन्तं ऋजुरेखा समालिखेत्।

इशादग्नेस्तदग्राभ्यां रेखे आकृष्य दैशिकः॥ १२-३४०॥

एकी कृत्य च वारुण्यां शक्तिरेखा पराशिवे।

त्रिकोणाकार फुकपं तु शक्तिद्वयमिदं शिवे॥ १२-३४१॥

पूर्वशक्यग्रभावे तु मणियष्टिवदालिखेत्।

रेखान्तु परमेशानि वायुराक्षसकोणगात्॥ १२-३४२॥

सन्धिभेदक्रमेणैव तयोः शक्रोस्ततः परम्।

रेखे आकृष्य कोशाभ्यां उदयात् पूर्वगान् कुरु॥ १२-३४३॥

वह्निमण्डलमेतत् स्यात् पूर्वोग्रं सुरवन्दिते।

नवयोनिविशोभाढ्यं चतुरश्रं लिखे छिवे॥ १२-३४४॥

चतुर्द्वारविशोभाढ्यं सर्वानन्दकरं सदा।

विलिख्य पूजयेद् यन्त्रं हमरूप्यादि यद्दके॥ १२-३४५॥

भूमौ चन्दनपीठेषु कुंकुमागुरुवन्दनै।

सिन्दूररजसा वापि कस्तूरी घुसृणादिभिः॥ १२-३४६॥

सुवर्णरत्नरेखे न्या कल्पितं मृणमयेथवा।

विलिख्य यन्त्रं देवेशि पूजा द्रव्याणि साधयेत्॥ १२-३४७॥

अथ पूजां विधिं वक्ष्ये सर्वतन्त्रेषु गोपिताम्।

ब्राह्मे मुहूर्त्ते चोत्थाय खशिरसि गुरुं ध्यायेत्॥ १२-३४८॥

२०३अ) प्रातः शिरसि शुक्रेब्जे द्विनेत्रं द्विभुजं गुरुम्।

वराभयकरं शान्तं स्मरेतन्नामपूर्वकम्॥ १२-३४९॥

मानसौपचारैराराध्य मूलविद्यां यथाशक्ति जापत्वा पूर्ववत्
सन्ध्याकर्म कृत्वा क्रामित्यं कुशमुद्रयाम्।

व्रह्माण्डोद्रतीर्थानिकरैः सृष्टानितेरके।

तेन सत्ये नमे देव तीर्थं देहि दिवाकरः॥ १२-३५०॥

ॐ गंगे च यमुने चेत्यादि सविभृमण्डलान् तीर्थमावाह्य त्रिर्निमक्ष्योत्थाय
मूलमन्त्रजपन् कुंभमुद्रया श्रीत्रिपुरभैरवीमभिषंचामि नम इति

वारत्रयं मूर्ध्नि दत्वाचमेत्।

प्रथमकूटमुचार्यात्मतत्वाय स्वाहा।

द्वितियकूटमुच्चार्य विद्यातत्त्वाय स्वाहा।

तृतीयकूटमुचार्य शिवतत्त्वाय स्वाहा।

इत्याचम्य यथा स्थानानि स्पृष्ट्वा निमज्योत्थाय मार्जनं कृत्वा संध्या पृ। तृतर्पणं कृत्वा मूलमुच्चरन्।

श्रीत्रिपुरभैरवी तर्पयामि स्वाहा।

इति त्रिःसन्तर्प्य जलादुत्थाय वाससी परिधायो पविश्याचम्य मूलविद्यां जपन्।

कुशाग्रेण वारत्रयमूर्ध्नि जलं दत्वा गायत्री जपेत्।

जपं समाप्यररक्तं चन्दनाक्षतजले कुसुमैस्ताम्रपात्रमापूर्य

हस्ताभ्या गृहित्वा ललाटं स्पृशन् ह्रीँ ह्रीँ शः कुलमार्ताडभैरवाय प्रकाशशक्तिसहिताय स्वाहा नमश्च इति सूर्याय नमस्कुर्यात्।

तस्मिन् जले भैरवीचक्रं ध्यात्वा हस्ताभ्यां गृहीत्वा ललाटं स्पृशन्।

ऐँ त्रिपुरायै विद्महे भैरव्यै धीमहि तन्नो देवी प्रचोदयात् (३)॥

इति जपन्॥

पूर्ववदर्घं देव्यै दद्यात्।

मन्त्रोद्धार माह।

२०३ब) त्रिपुरा च तथा ङेन्तं विद्महे पदमुद्धरेत्।

भैरव्यैश्च ततश्चोक्त्वा धीमहिति ततो वदेत्॥ १२-३५१॥

ततो देवी पदं चोक्त्वा प्रचोदयाद् उदीरयेत्।

गायत्रीपुरी ख्याता वागाद्येन समुद्धरेत्॥ १२-३५२॥

ततो मौनी।

अयोगा संभाषण पराङ्मुखः वाढ्यां गछेत्।

ताम्रपात्रे सामान्यार्घ्यं संस्थाप्यार्घजलेन द्वारं प्रोक्ष्य।

द्वारदक्षिणे गणेशाय नमः।

वाम क्षेत्रपालाय नमः।

तयोः पार्श्वयुगे गंगायै नमः।

यमुनायै नमः द्रपरिद्वार श्रीयै नमः।

अधो देव्यै नमः।

ततोद्गमं कोच्य गृहं प्रविश्यार्घजले न प्रोक्ष्य गृहाभ्यन्तरम्।

ॐ ब्रह्मेणे नमः।

ॐ वास्तु पुरुषाय नमः।

इति संऊज्य भूमौ त्रिकोणं विलिख्य ह्रीँ इति पृथिवी संशोध्य कंवला या सनमास्तीर्यर्घ्यजले न प्रोक्ष्य ध्यात्वा पठेत्।

मेरुपृष्ट ऋषिरित्यादि पृथ्वित्वयेति ह्रीँ माधारशक्ति कमलासनाय नमः।

इत्यासनं पूज्य प्राङ्मुख उदङ्मुखो चा उपविशेत्।

परावीजं समुचार्य ततश्चाधारपूरकम्।

शक्तिति पद्मालिख्य कमलासनमालिखेत्।

ॐ तं नमः पदं चोक्ता आसनस्य मनुः प्रिये।

अक्षतमादाय अपसर्प तु इति पठित्वाक्षतान्विकीर्य अस्त्राय फट् इति वामपादेद्यते नभौ तालत्रयं णान्तरिक्षगान् वा लया समुदं

विनवक्रं ऊर्ध्वं ठष्ठ्या दिव्यान् इति त्रिविधविघ्नान् निरस्य वामे गुरुभ्यो नमः।

दक्षिणे गणेशाय नमः।

मध्य त्रिपुरभैरव्यै नमः।

इत्युर्धोर्ध्वं तालत्रयं पूर्वोक्तवत्।

२०४अ) गन्धपुष्पाभ्यां करौ संशोध्य कृताजलि।

अस्य भैरवी मन्त्रस्य दक्षिणामूर्त्ति ऋषिपक्तिः छन्दः त्रिपुरभैरवी देवता आद्यं वीजं अत्यंशक्तिः रेफः कीलकं विद्यादिभीष्टसिद्धौ विनियोगः।

शिरसि दक्षिणामूति ऋषये नमः।

मुखे पक्तिछन्दसे।

हृदि त्रिपुरभैरव्यै नः।

कृतांजलि मम विद्याद्यभीष्टसिद्ध्यर्थे विनियोगः।

ततो भूतशुद्धिं कुर्यात्।

शरीराकारभूतानां भूतानां यद् विशोधनम्।

अद्वय ब्रह्मसंयोगा भूतशुद्धिरियं मता।

त्वाङ्क उत्तानहस्तौ कृत्वा सोहमिति मन्त्रण प्रदीपकलिकाकारं हृदयस्थं
जीवात्मानं मूलाधारस्थं कुडलिन्या सह सिरस्थ सहस्त्रदलकमल
कर्णिकान्तर्गत परमात्मनिलीनं विभाव्य पृथिवी मन्मुनौ वह्नौ वह्नि
वायौ समीरणं प्रविलाप्य तथा काशे आकाशं प्रकृतौ ततः॥

अपरंब्रह्मरूपां तां मायाशक्ति परात्मनि।

इति समस्तदेहामि प्रपंचं परमात्मनि प्रविलाप्य पुरुषाकार भागनादि
भव संचितं ब्रह्महत्या शिरस्कमित्यादि पूर्वोक्तवन्।

तत इडा वक्रे वा मनसि धूम्रवर्णं यमिति वायुवीज षोडशवारं
वामनासापुट न वायुनादेहमापुर्य पुनर्व्यमिति चतुः षष्टिवारं

कुंभकुर्वन् देहं संशोध्य पुनर्यमिति द्वात्रिंशद्वारं
दक्षनाटापुटेन वायुं रेचये।

ततोरुण वायु संवद्धे नरमिति वह्नि वीजेन षोडशवार जप्तेन
दक्षनासापुटेन देहमापूये चतुः षष्टिवारजप्तेन कुंभकं कुर्वन्।

२०४ब) तद् वशीभूतमिति विचिन्त्य रैमिति द्वात्रिंशद्वारं जपन् वामनासया
भस्मना सह वायु रेचयेत्।

तत ठ इति चन्द्रवीजं प्रकृत्यात्मकं वामनासापुटेन पुरुषात्मकललाट
चन्द्रं षोडशवारे जपन् न येत्।

ततो व मिति पूर्वोक्तवत्।

ललाट चन्द्रा दादिक्षान्तमक्षरमयी वृष्टिं निपात्य तया देव्यापासन
योग्यं सकलं वपुः कुर्वन्।

लमिति द्वात्रिंशद्वारं जपन् सकशरीरं दृढीभूतं विचिन्त्य
दक्षिणासापुटेन वायुं रेचयेत्।

पुनरुत्पादये देहमिति आरभ्य भुतशुद्धिरिहोदिता।

इति यावत् पूर्वोक्तक्रमेण नासापुटो धृत्वा वायुमवष्टत्यहं स इति सोहमवतर २ प्रज्वल २ हंसं सोहं स्वाहा॥

ततः पृथिव्यादीनि तत्त्वानि इति यथा।

आं सोहं मम प्राणा इति।

यथा। सोह मम प्राणा इह प्राणा। इति।

आ सोहं मम जीवा इति।

एवं मम सर्वेन्द्रियाणि वाङ्मन इति सुखं तिष्टं तु स्वाहा।

इति वीजं न्यसेत्।

प्राणप्रतिष्टा मन्त्रो यथा।

मुखवृत्तं समुच्चार्य हंसश्च विपरीततः।

उच्चरेभ्यदमीशानि विद्येय आक्षरी भवेत्॥ १२-३५३॥

प्राणप्रतिष्टामन्त्रो ये सर्वकर्मणो साधयेत्।

मुखवृत्तिमाकार॥

सविन्दुरिति प्रांचः तेन आं विपरितं सोहमित्यर्थः।

तेन आ सोहमिति मन्त्र।

एतत् करणा शक्रानां एतत् पाठमात्रेणैव भूतशुद्धिः स्यात्।

इति ततः प्राणायामं कुर्यात्॥

मूलमन्त्रेण वा लया वा कुर्यात्।

यथा॥

मूलमन्त्रं षोडशवारं चतुषष्टिवारं पूर्वोक्तक्रमेणेति।

अथान्तर्मातृका न्यासः।

व्यष्टयत्वांवुजे कण्ठे खरान् षोडशविन्यसेत्॥ १२-३५४॥

२०५अ) द्वादशछद् हृत्पद्मे कादीन् द्वादश विन्यसेत्।

दशपत्रांवुजे नाभौ उकारादीन्त्रसे दश॥ १२-३५५॥

षट् षत्ने लिंगमध्यस्थे वकारादी न्यसेत् षट्।

आधारे चतुरो वर्णान् उलादीसे चतुर्दले॥ १२-३५६॥

भक्षौ भुमध्ये गेपद्मे द्विदले विन्यसे छिवे।

इत्यन्तर्मातृकां न्यस्य सर्वाङ्गन्यासमाचरेत्॥ १२-३५७॥

अथ मातृकान्यास।

मूर्धा च मुखवृत्तं च नेत्रकण्ठेषु पार्वति।

नासागण्डोष्टदन्तेषु मूर्द्धास्येषु प्रविन्यसेत्॥ १२-३५८॥

पाणिपादयुगस्यान्तः सन्ध्याग्रषु तथा शिवे।

पार्श्वद्वये पृष्टनाभिजठरेषु क्रमा न्यसेत्॥ १२-३५९॥

यादीन् सधा तु कान् प्राणजीवब्रह्माणि ता सेत्।

हृदये वाहुमूले च तथा परगले शिवे॥ १२-३६०॥

कक्षायां हृदय प्रान्ते पाणिपादयुगे तथा।

जपरातलयोर्देवि व्यापकं चक्रं मान्यसेत्॥ १२-३६१॥

व्याचकमिति हृदयमारभ्य उत्तमाङ्गव्यापकमित्यर्थ।

हृदयप्रान्ते याण्यादि विशेषणम्।

प्र वाहुलाभाय एवं हृदयामारभ्य पाणिपादयुगते ततः।

इति तदेयमेवार्थः। यथा॥

अं नमो ललाटे। इं चक्षुषि। ईं वामचक्षुषि। उँ दक्षकर्णे।

ऊँ वामे। ऋँ दक्षनासायाम्। ॠँ वामनासायाम्। लृँ दक्षगण्डे।

ॡँ वामगण्डे। एँ ओष्टे। ऐँ अधरे। ओँ ऊर्ध्वदन्ते। औँ अधोदन्ते।

अं मूर्ध्निः। अ मुखे। कं नमो दक्षवाहु मूले। खँ कूर्परे।

गँ मणिवन्धे। घँ मगुलिमूले। ङँ मंगुल्यग्रे। चँ वामवाहुमूले।

छँ कूर्परे। जँ मणिवन्धे। झँ अंगुलिमूले। ञँ मंगुल्यग्रे।

टँ दक्षोरुमूले।

२०५ब) ठं जानुनि। डं गुल्फे। ढँ मँगुलिमूले। णँ अँगुल्यग्रे।

तँ वामोरुमूले। थँ जानुनि। दँ गुल्फे। धँ अंगुलिमूले। नँ मङ्गुल्यग्रे।

पँ दक्षपाश्वे। फँ नमो वामपार्श्वे। वँ पृष्टे। भँ उदरे।

यँ त्वगामिनि हृदय। रँ असृगात्मनि दक्षवाहुमूले।

लँ मांसात्मनि घाटायाम्। वँ मेदात्मने वामकुमूले।

शँ अस्थात्मने हृदयादि। दक्षिणाकरे। षँ हृद्यादि वामकरे।

सँ शुक्रात्मने हृदयादि दक्षे पादे। हँ नमः प्राणात्मने हृदयादि
वामपादे।

लँ जीवात्मने हृदयाद्युदरे। क्षँ नमः परमात्मने हृदयादि मुखे।

अथ श्रीकण्ठादि न्यासः।

श्रीवासुदेव ऋषिः पक्तिछन्द ईशानो देवता न्यासकर्मणि विनियोगः।

ह्राँ हृदजैः त्रिभिर्न्यसेत् स्थानेष्टेषु विशेषत। मूलाधारे।

ऐँ रत्यै नमः हृदि। क्लीँ प्रीत्यैं नमः। भ्रुवोर्मध्येः

सौँ मनोद्भवायै। अमृतेशी च योगेशीँ विश्वयोँनिक्रमादिमा।

विलोमवीजैर्विन्यस्य मूर्त्तिन्यसे समाचरेत्।

विलिमविजैरिति सौ आदिवासा वीजैरित्यर्थ।

मूलाधारे सौँ अमृतेश्यै नमः। हृदि।

क्लीँ योगेश्यै नमः। भ्रूमध्ये।

ऐँ विश्वयोन्यै नमः।

ततो मूर्त्तिन्यासं कुर्यात्।

मस्तक। सहरों ईशानाय नमो मनोभवसहिताय नमः।

हृदि। सहरूँ अघोराय कुमारकन्दर्पसहिताय हृद्ये।

साहरिं वामदेवाय मनोभव सहिताय।

पादयो सहरुं सद्योजाताय कामदेव सहिताय।

ऊर्ध्वप्राग्दक्षिणोदी पश्चिमेषु मुखेषु तात्।

२०६अ) प्रविन्यसेद् यथा पूर्वं भृगुव्योमाग्नि संयुते।

सत्यादि पंचह्रस्वाद्यो वीजमेषां समीरितम्॥ १२-३६२॥

भृगुः सकारः व्योमहकार।

अग्निरेःफ सत्य ओकारः तदादि चंकम्।

उ ए ऊ ई अंकार स्वरूपं स्वस्ववीजेति सहरौ सहरे सहरूं सहरिं सहरम्।

ऊर्द्धमुखे महरों ईशानाय मनोभव सहिताय नमः पूर्वमुख सहरै
तत् पुरुषाय मकरध्वजाय पूर्ववत्।

दक्षिणमुखं सहरूं उत्तरमुखे सहरिं पश्चिममुखे सहरम्।

इति दिक्कतुपेषु चतुर्मुख न्यासः।

अथकरन्यासः।

वद् दीर्घयुक्ते नाद्येन वीजेनाद्ग क्रिया मता।

ह्स्त्रौं अंगुष्टाभ्यां नम आरभ्य।

ह्स्त्रौं ह्स्त्रूँ ह्स्त्रैं ह्स्त्रं(ः) करतलपृष्टाभ्यां नमः। तावत्।

करन्यास। एवं प्रकारेणाङ्गन्यासः।

ह्स्रौँ हृदयाय नमः इत्यादि अस्त्राय फट्।

तालत्रयं पूर्ववदत्वा दशदिशो वध्नियात्।

अथं पंचवानन्यासः।

पंचवाणा क्रमेणैव कराङ्गुलिषु वि हृदयाय नमः।

इत्यादि अस्त्राय फट्।

तालत्रयं पूर्ववदन्त्वा दशदिशो वध्नीयात्।

अथ पंचवाण न्यासः।

पंचवाणा क्रमेणैव कराङ्गुलिषु विन्यसेत्।

अंगुष्टादिकनिष्टान्तं क्रमेण परमेश्वरी॥ १२-३६३॥

चार्वाङ्गी च त्रिणाभान्ता अदिति सत्यवादिनि॥ १५-१६२॥

स्थूला सूक्ष्मातरा सर्वकल्याणकारिणि।

परमात्मा स्वरूपा च चिदानन्दस्वरूपिणी॥ १५-१६३॥

कलकठी कंवुकण्ठी रागिनिशोभनस्वरा।

वागीश्वरी वशिनी च विशिष्टाशिष्टवत्सरा॥ १५-१६४॥

स्वस्था शोभान्विता शोभा सुभद्रा भक्तवत्सला।

भक्तानन्दकरी भक्तिर्भक्तसंपत् प्रपूरणि॥ १५-१६५॥

सुस्मिता मदनोल्लासा कामवीजस्वरूपिणी।

सत्ववती धर्मनिष्ठा वागीशी च प्रभावति॥ १५-१६६॥

लोकवश्य प्रदा वश्या वशिनी व्यासपूजिता।

त्रैलोक्य जननी तुष्टा सर्वतुष्टि विवर्द्धिनी॥ १५-१६७॥

शिव तुष्टिकरि शान्ता शत्याङ्कखण्डभूषिता।

मनस्विनी कल्पलता मंगलादीनवत्सला॥ १५-१६८॥

सर्वदेवमयी धन्या धनदा शिवनर्तकी।

२४६ब) चिन्तामणिश्चिन्तनीयां जाग्रती दीनवत्सरा॥ १५-१६९॥

व्यक्ता व्यक्तानेकमूर्त्तिः स्त्रैलोक्यपावनेश्वरी।

सर्वसंमोहनरिपु सर्वमंगलदायिनि॥ १५-१७०॥

सर्वाचारवती सर्वदेवकन्याधिदेवता।

इक्ष्या पूज्या विभा भूतिर्यणम्या ब्रह्मवादिनी॥ १५-१७१॥

चन्द्रानना चकोराक्षी चारुनेत्रा सुलोचना।

त्रिनेत्रपद्मपत्राक्षि पद्मत्राक्षी पद्मगर्भसमद्युति॥ १५-१७२॥

आन्विक्षिकी प्रभाभूति कुरंगाक्षी मनोहरा।

वाराहि सुचरित्रा च विश्वगर्भा सनातनि॥ १५-१७३॥

हिरण्यगर्भा गर्भदुःखविमोचनी।

सौम्या याम्या वायवी च अग्नेयी नैऋते तथा॥ १५-१७४॥

शताक्षी च सहस्राक्षी शुद्धा शोशी धृतिर्धरा।

रुक्मिनी जानकी सीता सत्यलोकनिवासिनि॥ १५-१७५॥

पुराणगोचरा पूर्वा महभक्ति विधायिनि।

विष्णुमाहामेधा अहल्या विश्वपूरिणी॥ १५-१७६॥

मनोहरा मनुज्ञा च माहेशी वरवर्णिनी।

महास्मृति कामरूपा विश्वरूपा महोमति॥ १५-१७७॥

भागीरथी काशपी च कमनीयानगात्मजा।

हरिप्रिया गिरिसुता क्षीरार्णवसमुद्भवा॥ १५-१७८॥

विन्ध्यस्था विन्ध्यनिलया दिव्यस्थाननिवासिनि।

पद्मावती चन्द्रकला कमली या कलावति॥ १५-१७९॥

ज्ञानेश्वरी ज्ञानदात्री ज्ञानदाज्ञानदायिनि।

भद्रकालि विशालाक्षी वहुला त्रिकुटा तिथि॥ १५-१८०॥

पारिजातहरा वाग्मि तुरीया तुरितालका।

पाशाङ्कुशधरा वण्या सर्ववश्यवियिनी॥ १५-१८१॥

हरधांगहराह्या हृदयंभोजवासिनी।

शरण्या शरणा श्यामा शारवेन्दु समप्रभा॥ १५-१८२॥

श्रीमति विमला प्रीता शिशीरा चलकन्यका।

२४७अ) सुरमान्या सुरश्रेष्टा प्रणतत्रासनाशिनि॥ १५-१८३॥

हरपत्नि गिरिसुता शर्वाणी हरवल्लभा।

कार्तृ हर्तृ पालयित्री सर्वेवांछ फलप्रदा॥ १५-१८४॥

स्तुति स्तुति प्रियास्ते ता। हविहव्य प्रिया हवि।

सर्वाङ्गसुन्दरि रक्ता कौशांवी कुसुमं प्रिया॥ १५-१८५॥

लोपामुद्रारुंधति च नन्दिनी वसुमालिका।

पुरालि गृहिणि पूर्णा पंडरीकाक्षवल्लभा॥ १५-१८६॥

गुणामुया गुणवति गुणगौरवसुन्दरि।

सर्वाश्रया सर्वगुणा सर्वानन्दनकारिणि॥ १५-१८७॥

सर्वमन्त्रमयी मोदिन्यरुणानंगदीपिनि।

कुमारि पूजक प्रीता कुमारी व्रतचारिणी॥ १५-१८८॥

कुशावती च कौशल्या जगदंवा वुजेक्षणा।

सुप्रेमा सुप्रभा साध्या साधकाभीष्टदायिनि॥ १५-१८९॥

कल्पानकारिणिकल्पा सर्वकल्पा नदायिनी।

मंगला शोभना शुद्धा सर्वमंगलदायिनि॥ १५-१९०॥

स्तोत्रं सहस्त्रनामाख्यं शिवा या शिवभाषितम्।

य पठेत् प्रयतो नित्यं भक्तियुक्तेन चेतसा॥ १५-१९१॥

निश्चला कमला तस्य वाणी वदननर्तकी।

सौभाग्यं वर्धतं नित्यं धनधान्यादिकं तथा॥ १५-१९२॥

दारिद्रं नैव जायेत कुले तस्य मदोत्सव।

दुर्भिक्षशमनं तस्य यत्रे तत्यते सदा॥ १५-१९३॥

पुत्रपौत्रधनं धान्यं गोमहिष्यादिकं तथा।

गजाश्च नरसाम्राज्य वर्धन्तेन दिने दिने॥ १५-१९४॥

वंध्या वा काकवन्ध्या वा नष्टपत्यां च यागना।

श्रूत्वा स्तोत्रमिदं पुत्र लभते चिरजीवनम्॥ १५-१९५॥

गोरोचनं कुंकुमेन लिखितं भूर्जपत्रके।

वाहुशिरसिकंठे वा संपूज्य धारयेद् यदि॥ १५-१९६॥

२४७ब) भक्ता योग्यान् यथा कामानन्ते दिव्यागणो भवेत्।

तस्यात् पूर्वैशगा भूपाले कवश्चं व्रजन्ति हि॥ १५-१९७॥

शत्रवो नामायां मित्राणां वर्धते सुखम्।

यानि चेदन्ति कामानि हठात् तानि लभेन्नर॥ १५-१९८॥

भूतप्रेतपिशाचाश्च राक्षसा दानवाश्चय।

नदृष्टमपि शक्तास्ते धृतं ये न महास्तवम्॥ १५-१९९॥

सर्वत्रचला लक्ष्मी निश्चला तस्य मन्दिरे।

वाणि तस्य वसेद् वक्रे देवी सत्यं न संशयः॥ १५-२००॥

इदं स्तोत्रं पठित्वा तु यत्र यत्रैव गछति।

तत्र तत्र लभे नित्यं विजयं भोगमुत्तमम्॥ १५-२०१॥

इति श्रीरुद्रयामले उमामहेश्वरसंवादे अन्नपूर्णा सहस्रनामस्तोत्रं समाप्तम्॥

अथान्नपूर्णा स्तोत्रम्।

ॐ नमो कल्याण देवेवी ममः शंकरवल्लभा।

नमो भक्ति प्रिये देवी अन्नपूर्णे नमोस्तु ते॥ १५-२०२॥

ॐ नमो माया गृहितार्थै नमः श्रीकण्ठवल्लभे।

माहेश्वरि नमस्तुभ्यं अन्नपूर्णे नमोस्तु ते॥ १५-२०३॥

महामायी शिवपत्नि पत्निरूपे हरप्रिये।

वांचादात्रि सुरेशानि अन्नपूर्णे नमोस्तु ते॥ १५-२०४॥

उद्यद्भानुसहस्राभे नयनत्रेयभूषिते।

चन्द्रचूडे महादेवि अन्नपूर्णे नमोस्तु ते॥ १५-२०५॥

विचित्रवसने देवि अन्नदानरते नघे।

शिवनृत्य कृता मोदे अन्नपूर्णे नमोस्तु ते॥ १५-२०६॥

साधकाभीष्ट दे देवि भव दुखविनाशिनि।

कुचभार त देविशी अन्नपूर्णे नमोस्तु ते॥ १५-२०७॥

इन्द्राद्यं चित पादाब्जे रुद्राण्यरूपधारिणि।

सर्वसंपत् प्रदे देवि अन्नपूर्णे नमोस्तु ते (७)॥ १५-२०८॥

पूजाकाले पठेद् यस्तु स्तोत्रमेतत् समाहित।

२४८अ) तस्य गेहे स्थिरां लक्ष्मि जयते नात्रशंशयः (८)॥ १५-२०९॥

प्रातः काले पठेद् यस्तु मन्त्रजापपुरः सरम्।

तस्यान्नस्य समृद्धि स्या वर्धमाना दिने दिने॥ १५-२१०॥

यस्यैकस्मै न दातव्यं न प्रकाश्यं कदाचन।

प्रकाशात् सिद्धिहानि स्यात् तस्माद् यत्नेन गोपयेत्॥ १५-२११॥

इत्यन्नपूर्णास्तोत्रम्।

अथान्नपूर्णा स्तोत्रम्।

श्रीदेव्युवाच

देवकौलीसमे शीघ्रं दारिद्र्यं न भवेद् यथा।

कां देवता नमस्कृत्य वद शंकर तत्त्वतः॥ १५-२१२॥

शंकर उवाच

अन्नपूर्णा महं वक्ष्ये चतुर्वर्गफलप्रदाम्।

यस्या स्मरणमात्रेण कृतार्थः कौलिकश्चरेत्॥ १५-२१३॥

मूलाधारादिचक्रेशी षडध्वान्वयपारग।

आनन्दललिका साक्षाद् अन्नपूर्णा महेश्वरी॥ १५-२१४॥

सुरशृगातमध्यस्था विन्दुनादकलाश्रया।

नित्यानदा निराधारा विखाता विलसस्कृरा॥ १५-२१५॥

पिष्टयेशी परा लक्ष्मि कामस्तारेन तिस्तथा।

भगवत्यन्नपूर्णेति ममाभिलिखितं तथा॥ १५-२१६॥

अन्नदेहि ततः स्वाहा मन्त्रसारेति विश्रुता।

सप्तविशति वर्णात्मा योगिनिगणसेविता॥ १५-२१७॥

सर्वेतीर्ण प्रकास्था विमर्शानन्दरूपिणि।

विश्वं तेजस्वरूपेण प्राज्ञा भूर्यस्वरूपता॥ १५-२१८॥

विमर्णाख्येति कथिता चतुस्रातस्वरूपिणि।

जाग्रत् स्वप्न सुषुप्ताख्यां भूर्यरूपस्य नामभि॥ १५-२१९॥

ख्याते यन्त्रिषु लोकेषु दर्शिता सा चतुष्टये।

श्रीविद्या चक्रसंकेत मध्य वा भूतविग्रहा॥ १५-२२०॥

भुवनादि चतुष्कोणे चतुरानय देवता।

२४८ब्) पूर्वाम्नाये रुद्रशक्ति साक्षाद् त्रीभुवनाश्रया॥ १५-२२१॥

ख्यांतेयै कमलानाम्ना रुद्राणि दक्षिणाम्बिका।

सुभुगाना मध्ये या सा कुब्जेशि पश्चिमाम्बिका॥ १५-२२२॥

पराविद्याभिधानेन स्मृतानाख्ये त्ररापरा।

ॐ द्यत्रय परामणां ॐद्यत्रयं सनाश्रया॥ १५-२२३॥

आम्नाय प्रोतसूत्रस्था कपालिकुलसंभवा।

त्रैलोक्यमोहनं नाकारा प्रकठा त्रिपुराश्रया॥ १५-२२४॥

सर्वा सा पूरक गुप्ता चक्रशी त्रिपुरेश्वरि।

सर्वसंक्षोभनगता महागुप्ततरान्विता॥ १५-२२५॥

सुन्दरीचक्रमध्यस्था सर्वदा पुरवासिनि।

सर्वाथसाधकगता कुकोलनिवासिनि॥ १५-२२६॥

श्रीदेवि वन्धिताकारा सर्वरक्षाकरानुगा।

निगभाख्या मालिनि च सर्वरोग हरा परा॥ १५-२२७॥

रहस्यात् सं परा सिद्धा सर्वसिद्धिप्रदायिनि।

परापररहस्यस्था सर्वशा चक्रनायका॥ १५-२२८॥

जगद्योनि त्रिखण्डति मुद्रासंकेतङ्गिका।

दक्षहस्ते हेमदर्वा सेविताभीप्सित प्रदा॥ १५-२२९॥

वामहस्ते सुधापात्रं सेवकाभीप्सितप्रदम्।

सुखसंविदिसुलभा वाममार्गस्य नायिका॥ १५-२३०॥

श्यामवर्णा वरारोपिताभा * वरवर्णिनी।

रसना किंनिनीजाला वर्धमाना कुलांगना॥ १५-२३१॥

सुस्मिता वदनज्योत्स्ना पूरिताखिलदिमुखा।

ललाटार्धेन्दुचुकरा कुटिलालेकपल्लवा॥ १५-२३२॥

सुन्दरी तु लताकान्ति पूर्णाकैवर्त्तनन्दिनी।

सलिलनयनापांगी ललितानन पंकंजा॥ १५-२३३॥

नखकान्ति महाज्योत्स्ना पूरिता शा समन्ततः।

पीनोन्नतकुंचद्वंद्व त्रिवलियुतमध्यमा॥ १५-२३४॥

२४९अ) सुनिर्मलावराभीति वृत्ता च कृशोदरी।

रोमराजी प्रभा युक्ता जघ्नाश्रितमेखला॥ १५-२३५॥

कान्तोरू कदलीसौम्या नितं च स्थलशोभिता।

वृत्तजंघा गूढगुल्फा पादपद्मायुगान्विता॥ १५-२३६॥

कर्पूर क्लिन्नतांवूलरंजिताधरपल्लवा।

कस्तुरीगन्धकर्पूर पंकचर्चितविग्रहा॥ १५-२३७॥

सर्वावयसंपूर्णा शिवचित्तमनोहरा।

अन्नदान महोत्साहा भक्तचित्तफलप्रदा॥ १५-२३८॥

भूस्वर्गफलदा लक्ष्मी रत्नदानैकरक्षिता।

निरामया हत क्लेशा मुखैकफलदायिनी॥ १५-२३९॥

भोगप्रदा भगा वासा भगामुत्वा भगोदरी।

श्रीप्रदा श्रीयुता सौम्या दया रूपापराजिता॥ १५-२४०॥

परमायुष्पदा गौरी वशी कृत जगत्रया।

यस्यादर्वी पूरिता डमग्रे दृष्टा दरिद्रता॥ १५-२४१॥

अपौति सहसा भीत्या हता हमिति कंपिता।

यः कश्चित् प्रस्थशात् पत्रं स्पृष्ट्वा स्मृत्वा च यां शिवाम्॥ १५-२४२॥

ददात्यमितमर्थैत्यः सान्नपूर्णा कुलार्गना।

दारिद्र्यशैलदेहालि यदर्वीदैशिकोत्तमः॥ १५-२४३॥

स्मृत्वा कृतर्थो विचरेत् सान्नपूर्णान् नपापिनी।

यामलाष्टकवर्गस्था रुद्रदेवी महाशया॥ १५-२४४॥

कुलाकुला रसाधारा धातु फलप्रदा।

नित्यानन्द सरोज श्रीर्याचिदानरूपिणी॥ १५-२४५॥

दर्पियात्रकरद्वन्द्व हततभक्तदरिद्रता।

चित्सुधा भक्ताः नन्दा वरकन्या समावृता॥ १५-२४६॥

मूलाधारचतुः पत्री कर्णिकामध्यवर्त्तिनी।

उद्याणमुद्रां संयुक्ता मातृकावर्णमालिका॥ १५-२४७॥

२४९ब) मणिपूरक विंशान्तिर्दशनछदनिर्वृतिः।

मध्यनाडी मध्यगता योगगम्या सनातनी॥ १५-२४८॥

अनाहताब्ज संहृष्टा द्वादशांरांतराना।

विशुद्धचक्रमध्यस्था षोडशारप्रसन्नधीः॥ १५-२४९॥

आज्ञाचक्रगता चाण्डी द्विदलाग्रे सुधाप्रदा।

तत्वार्थजीवनिलया पंचवाणौकवर्द्धिनी॥ १५-२५०॥

निरालंवा पदावस्था व्योममद्मनिवासिनी।

सहस्त्रदलमध्यस्था दिव्यसिद्धिनिरौघगा॥ १५-२५१॥

भ्रूमध्यपद्मनिलया स्वानुवन्धविवयिनी।

ध्रुवं संज्ञपदातिता शंखिनी वधुभावना च॥ १५-२५२॥

चन्द्रार्कनलसंघट्ट गर्जितामृतचन्द्रिका।

केशादिमुखपादादि मातृका न्यासविग्रहा॥ १५-२५३॥

आधारनाभिहृदये भ्रूमध्ये ब्रह्मरन्ध्रके।

इन्दुमध्ये कण्ठहृदिमूलाधारादिपादयो॥ १५-२५४॥

भवानी मूमूलविद्या या न्यस्येद् वर्णाननुक्रमात्।

द्वादश्यान्ते सरोज श्रीषोडशतैककर्णिका॥ १५-२५५॥

निर्वाणपदयोग्यस्था द्वीद्वीहतकरोज्वज्वला।

तडित्कोटिप्रभा युक्तो ब्रह्मविद्यामृतां वुद्धिः॥ १५-२५६॥

देवता मन्त्रयन्त्रैक्य दैशिकोत्तममानसा।

अन्नमध्यगता देवी हंससाख्यमन्दिरा॥ १५-२५७॥

त्रिकोणमातृकापद्म चतुरश्रा उरासना।

भुवनादि जगन्मातृशक्त्यंगचतुरावृति॥ १५-२५८॥

महाविद्यादि तत्वस्था संविद्विद्याधि देवता।

मन्त्राणां मन्त्रिणां चैव यन्त्राणां यन्त्रिणा तथा॥ १५-२५९॥

ददात्यन्नं स्वयं साक्षाद् अन्नपूर्णाधि देवता।

अन्नपूर्णातिः सेयं कृत्वा पंचाशिका मया॥ १५-२६०॥

२५०अ) विख्याता त्रिषुलोकेषु कल्पवल्लीतिनामते।

इयं तु नपतां शीघ्रं महदैश्वर्यदायिनी॥ १५-२६१॥

जन्मकोटि दरिद्रत्वं हृत्या श्रिय ददाति सा।

इमां स्तुतिं पठेद् यस्तु पपघ्नी सर्वकामदाम्॥ १५-२६२॥

तस्य नश्यन्ति पापानि नानाभूततराशिवत्।

इयं सा परमायुष्मा श्रियं श्रवणादिकम्॥ १५-२६३॥

ददाति परमां प्रीतिं पुत्रान्वीद्यागुणाधिकान्।

किमत्र वहुनोक्तेन यद् यद् इछति साधकः॥ १५-२६४॥

अन्नपूर्णेश्वरी साक्षात तद् दिशति नान्यथा।

दातव्ये य स्तुतिः सम्यक् गुरुभक्ताय धीमते॥ १५-२६५॥

आत्मज्ञाना शेशस्ता मध्ये नुस्वसेवनात्।

पुनः पुनरिमां ध्यात्वा इछामिछां मुहुर्मुहुः॥ १५-२६६॥

ददाति विपुलां भोग्यां भजतां कल्पपादपः।

हृदये वर्त्तते यस्य श्रीमदन्नादि देवता॥ १५-२६७॥

दृश्याते चान्नपूर्णा स्यात् कुवेरस्य समृद्धयः।

यस्या प्रसादात् संजाता दृश्यते चान्नपूर्णस्यात्

* * * * कुवेरस्य समृद्धयः।

वरुणस्य तदैश्वर्यं वशीकरणसाधनं

लक्ष्मीर्विलास हृदयं विष्णोर्दत्तं पुरा जया॥ १५-२६८॥

श्रिया विष्णु पतित्वं च प्राप्तमस्या प्रदादतः।

शंभुना चंडिकापत्यं सौन्दर्य नियतेः फलम्॥ १५-२६९॥

साधितं परया भक्त्या जपहोमादिदर्चना।

गन्धर्वाणां किन्नराणां गुह्यकातां तथैव च॥ १५-२७०॥

सिद्धानां च चमत्कारं जरामरणवर्जितम्।

ऋषिणां च मुनीनां च वीराणां योगिनां तथा॥ १५-२७१॥

सर्वज्ञत्वं प्रधानत्वं मुनया दत्तमादरात्।

२५०ब्) य इमां जपते सत्ये प्रातर्नित्यमतिंद्रितः॥ १५-२७२॥

यस्य कस्यैव तस्यैव महासिद्धिर्भविष्यति।

मन्त्रदेवाभिदेवाश्च संत्वस्थास्त्वन्नपूर्णया॥ १५-२७३॥

वसति गेहे तस्यैव निश्चले नान्तरात्मनो।

इत्य यं सर्वदा जप्त्वा सद्भिरागमपाणैः॥ १५-२७४॥

अन्नपूर्णेश्वरि वद्धा सर्वं पठाति चात्मवत्।

इति श्रीरुद्रयामले तन्त्रे अन्नपूर्णाकल्पलटा स्तोत्रं संपूर्णसमाप्तम्॥

अथ त्रिपुरास्तोत्रम्।

ॐ वराभीति हस्तं द्विवाहूँ प्रसन्नंनं शिवं सुप्रसंनं सुशक्त्योप
विष्टम्।

प्रसंनास्य विंवांधरं चारुहासं शिरः पद्ममध्ये गुरुं
पूजयामि (१)॥ १५-२७५॥

वकं वह्निसंस्थं त्रिमूर्त्या प्रजुष्टं शशाङ्केन युक्तं भगवाद्यं
स्ववीजम्।

स्ववर्णप्रभं ये भजन्ति त्रिशक्तेः प्रियं सौभगत्वं लभन्ते नरास्ते (२)॥
१५-२७६॥

नभो वायुमित्रं ततो वामनेत्रं स्वधाधामविंचिं नियोज्येकवक्रं।

अद्वितीयं स्ववीजं सुश्रणिवंद्यं त्वदीयं विभाव्यं श्रीयः

प्राप्नुवन्ति (३)॥ १५-२७७॥

विरिंचिक्षितिस्थं ततौ वाममेत्रं रविधुं नादयुक्तं दिनेशाभवीजम्।

विभाव्यै व सन्मोहयन्तां त्रिलोकीं जपादीश्वरत्वं लभन्ते नरेन्द्राः (४)॥

१५-२७८॥

त्रयं सन्नियोज्य स्मरामि प्रिये ये त्रिसन्ध्यं जपन्ति त्वंदंगं विभाव्य।

न तेषां रिपुर्भावयोशं करोति श्मरातर्गनानां गृह श्रीस्तुतेषाम् (५)॥

१५-२७९॥

सुखे भारती गद्य पद्य प्रवन्धा नहिन्सन्ति हिस्राः सुरास्तान्नमन्ति।

तदंघ्रिद्वयं भूषणं मूर्द्ध्निराज्ञां करे सिद्धयो दुर्गहास्ता

त्यजन्ति (६)॥ १५-२८०॥

वने पारिजातद्रुमाणां पृथिव्यां सुवर्णप्रभां तां मशीव्यूहगेह।

स्मरे द्वे हि कायां लसद्रत्नसिंहासनपद्ममष्टारकं संविचिन्त्य (७)॥ १५-२८१॥

स्फरत् कर्णिकायां परं योनियुग्मं तदन्तर्गता पुषु हेमप्रभायाम्।

लसत् कुण्डलामिन्दुवक्त्रां त्रिनेत्रां स्फुरस्कम्वुकण्ठां सवक्षोज नम्राम् (८)॥ १५-२८२॥

महारत्नवद्धोल्लसद्वाहुवृन्दैः स्वपद्मद्वयं पुस्तकं कार्मुकं च।

सुवर्णाकुशं पुष्पवाणान् दधानं वृहद्रत्नभूषां सुमध्वां सुकाचीम् (९)॥ १५-२८३॥

तुलाकोटिरम्य शुरत्पादपद्मां किरीटाद्यलंकारयुक्तां प्रसंनात्।

सिते चामर चा तत् करं द्रंसमुद्रं सुवर्णं धृताभिस्त्रिलोकीम् (१०)॥ १५-२८४॥

त्रिलोकी विधात्रीं जगत्तापहन्त्री सदामंदपूर्णां हकारार्धवर्णाम्।

जगत्क्षोभकर्त्री जगत्पालयन्ती त्रिविन्दुस्वरूपां त्रिशक्तिभजामि (११)॥ १५-२८५॥

विरं चिन्तयित्वा तदेतत् स्वरूपं पुरोयं समाध्वभक्त्या भजामि।

स्वयंभूः प्रसूनादिभिः पूजयित्वा चतुर्वर्गसिद्धि लभेत्यामरोपि (१२)॥
१५-२८६॥

श्रियं श्रीपतिं पार्वतीमीश्वरत्यं रतिं कामदेव षंडेगे न सार्धम्।

स्वयानौ तथा मन्त्रयुक्तां भवानी क्रमात् पुजयित्वा नरेद्रो भवेत् सः (१३)
॥ १५-२८७॥

नधित्वे च पार्श्वद्वये संविभाव्य प्रपूज्यो महिष्यस्ततो लोकपालान्।

तस्त्राणि तत्र द्रणाग्रे प्रपूज्य भवस्याष्टसिद्धिं लभेन् मानवोपि (१४)॥ १५-
२८८॥

क्षितिस्त्वं विधाता जगत् सृष्टिकर्तृत्वमापोपि विष्णुर्जगत्पालिका च।

त्वमग्निस्तु रुद्रो जगन्मृत्यु कर्त्री स्वमैश्वर्ययुक्ता जगद्भासुलो च (१५)॥ १५-

२८९॥

२५१ब) त्वमाद्या शिवेशं तु कान्ते शरण्यै जगद्ब्रह्मरन्ध्रे सदाधं
भ्रमीषि।

निराधारगम्या भवस्यैकपुण्यां त्वमेकासिकल्पा भवानि प्रसीद (१६)॥ १५-
२९०॥

भवां भोधिमध्ये यत्यैवसर्वं मुनीनां च गर्वं सुखर्वं करोषि।

अतस्त्वां न जाने चिदानन्दरूपे प्रशस्वरूपे भवानि प्रसीदः (१७)॥ १५-२९१॥

जपित्वा भवत्या जनामन्दचेता जपदेकलक्षं कवित्वं करोति।

विचिन्त्य स्वरूपं त्वदीयां त्रिलोकीं लभे दुर्लभां त्वां तवानि प्रसीद
(१८)॥ १५-२९२॥

त्वमाधारशक्तिस्त्वमाधेयरूपा जगद्यापिकत्वं जगद्यापि रूपा।

अभावस्त्वमेका गुणातीतरूपा त्वमेवासिभावो भवानि प्रसीदः (१९)॥ १५-२९३

॥

अण्डस्त्वं विभुस्त्वं त्वमेवासिविश्वं स्तुतिः काभवत्या जगत्यां विभासिः
।

तथापि त्वदीन्गुणानां दिशंतिस्तुनिं कर्णमेवं भवानि प्रसीद (२०)॥ १५-
२९४॥

इति त्रिपुरास्तोत्रम्॥

अथ त्रिपुरा कवचम्॥

ईश्वर उवाच

शृणुदेवि प्रवक्ष्यामि कवचं सर्वसिद्धिदम्।

पठित्वा धारयित्वा च नरोमुच्येत संकटा॥ १५-२९५॥

अज्ञात्वा कवचं देवी दुर्गामंगा मंत्र च यो जपेत्।

सनाप्नोति फलं तस्य परमे मरकं व्रजेत्॥ १५-२९६॥

ॐ उमाहेवी शिरः पातु ललाटं शूलधारिणी।

सुगन्धा नासिकां पातु वदमं सर्वसाधनी॥ १५-२९७॥

जिह्वायां चण्डिका देवी द्वावूरूविन्ध्यवासिनी।

एवं स्थितासि देवेसि त्रैलिक्य रक्षणात्मिका॥ १५-२९८॥

रक्ष मां सर्वगात्रेषु दुर्गे देवी नमोस्तु ते।

इति त्रिपुराकवचम्।

२५२अ) अथ दुर्गा शतनामस्तोत्रम्।

श्री-ईश्वर उवाच

शतनामप्रवक्ष्यामि श्रृणुर्ष्व कमला नमे॥ १५-२९९॥

यस्या प्रसादमात्रेण दुर्गा प्रीता भवेत् सती।

ॐ सती साध्वी भवे प्रीता भवानी भवमोचनी॥ १५-३००॥

आर्या दुर्गा जयाद्या च त्रिनेत्रा शूलधारिणी।

पिनाकधारिणी चित्रा चण्डघण्टा महातपा॥ १५-३०१॥

नमो वुद्धिरहंकारा चित्तरूपा चिताचिति।

सर्वमन्त्रमयी नित्या सत्यानन्द स्वरूपिणी॥ १५-३०२॥

अस्वं ता सा विनीभव्या भव्या भव्या सदायतिः।

शाकंभरी वेदमाता चिता रत्नप्रिया सदा॥ १५-३०३॥

सर्वविद्या दक्षकन्या दक्षयज्ञविनाशिनी।

अपर्णानेकवर्णा च पाटला पाटलावती॥ १५-३०४॥

पट्टांवरपरीधाना कलसंजीररंजिनी।

अमेया विक्रमा क्रूरा सुन्दरी पुरसुन्दरी॥ १५-३०५॥

वनदुर्गा च मातङ्गी मतंगस्नानपूजिता।

ब्राह्मी माहेश्वरीन्द्री च कौमारी वैष्णवी तथा॥ १५-३०६॥

चामुण्डा चैव वाराही लक्ष्मीः श्रीपुरुषाकृतिः।

विमलोत्कर्षिणी ज्ञाना क्रिया सत्या च वह्निदा॥ १५-३०७॥

* * * * * वहुता सर्ववाहनवाहना।

निसुंभसुंभननी महिसासुरमर्दिनी॥ १५-३०८॥

मधुकैटभर्त्री च चन्द्रमुण्डविनाशिनी।

सर्वासुरविनाशी च सर्वदानव घातिनी॥ १५-३०९॥

सर्वशास्त्रमयी सत्या सर्वास्त्रधीरिणी तथा।

अनेकशास्त्रहस्ता च अनेकास्त्र विदारिणी॥ १५-३१०॥

कुमारी चैव कन्या च कैशोरी युवती यतिः।

अप्रौढा च वृद्धमाता च * * * वलप्रदा॥ १५-३११॥

य इदं पठते नित्यं दुर्गानाम शताष्टकम्।

२५२ब) ना साध्वं विद्यते देवि * * * त्रिषु पार्वती॥ १५-३१२॥

धनधन्यं सुतं जायां हयं हस्ति नमेव च।

चतुर्वर्ग तथा चान्ते लभेन् मुक्तिं च शास्वतीम्॥ १५-३१३॥

कुमारीं पूजयित्वां च ध्यात्वां देवी सुरेश्वरीम्।

पूजयेत् परया भक्त्या पठन्नामशताष्टकम्॥ १५-३१४॥

तस्य सिद्धिर्भवे देवि सर्वैश्वर वरैरपि।

राजामोदाभतां याति राज्यश्रियमवाप्नुयात्॥ १५-३१५॥

गोरोचना लक्तकुंकुमे सिन्दूरकर्पूरमधुत्रयेण। विलिख्य यन्त्रं विधिना विधिज्ञो भवेत् सदा धारयते मुरारिः।

भौमावस्यानि सा भागे चन्द्रेणताभिषंगते।

विलिख्य प्रलयस्योत्रं सभवेत् संपदां पदम्॥ १५-३१६॥

इति विश्वसारोक्तं दुर्गानामशताष्टकं समाप्तम्॥

अथ महिषमर्दिनी कवच

अथ वक्ष्ये महेशानि कवचं सर्वकामदम्।

यस्य प्रसादमासाद्य भवेत् साक्षात् सदाशिवः॥ १५-३१७॥

ॐकारं पूर्वमुच्चार्य मन्त्री मन्त्रस्य सिद्धये।

प्रपठेत् कवचं नित्यं मन्त्रवर्णस्य सिद्धये॥ १५-३१८॥

महिषमर्दिन्या कवचस्य भगवान् महाकाल ऋषि अनुष्टुप्रछन्दः आद्याशक्तिर्महिषमर्दिनी देवता चतुर्वर्गफलाप्तये विनियोगः॥

क्लीँ पातु मस्तके देवी कामिनी कामदायिनी।

मकारी पातु मां देवी चक्षुयुग्मे महेश्वरी॥ १५-३१९॥

हिकारौ पातु वदने हिंगुला सुरनायिका।

षंकारी पातु मां श्वेता जिह्वायां चापराजिता॥ १५-३२०॥

मकारी पातु मां देवी मर्दिनी सुरनायिका।

दिकारे पातु मां देवी वित्रीफलदायीनी॥ १५-३२१॥

२५३अ) नीकारि पातु मां नित्या हृदये वाहुपार्श्वयो।

नाभौ लिगे गुदे कण्ठे कर्णयोस्पृष्टयोस्तथा॥ १५-३२२॥

शिखायां कवचे पातु दे मुश्वजंघा युगे तथा।

सर्वांगपातु मां स्वाहा सर्वशक्ति समन्विता॥ १५-३२३॥

कामाज्या पातु मां स्वाहा सर्वांगे मर्दिनी शिरः।

दशाक्षरी महाविद्या सर्वांगे पातु मर्दिनी॥ १५-३२४॥

मर्दिनी पातु सततं मर्दिनक्षयेत् सदा।

प्रभा पातु महेशानी कनका पातु सर्वदा॥ १५-३२५॥

नन्दिनी पातु सततं मुद्राः पातु सदा मम।

जया पातु सदा लक्ष्मी विशुद्धा पातु सर्वदा॥ १५-३२६॥

डाकिन्या पातु सततं सिद्धाः पातु सदा ममः।

सर्वत्र सर्वदा पातु देवी महिषमर्दिनी॥ १५-३२७॥

इति ते कवचं दिव्यं कथितं सर्वकामदम्।

यत्र तत्र नवक्तव्यं गोपितं सर्वतन्त्रेषु विश्वसारे प्रकाशितम्।

दत्वा तेभ्यो महेशानिमश्यन्ति द्वय क्रमात्।

मन्त्राः पराङ्मुखा षान्ति शायं दत्वा सुदारुणम्॥ १५-३२८॥

अशुभं च भवेत् तस्य तस्मा यत्ने न गोपयेत्।

गोरोचनां कुंकुमेन भूर्जपत्रे महेश्वरी॥ १५-३२९॥

लिखित्वा शुभयोगेन ब्रह्मन्द्र वैधृतौ तथा।

आयुष्मान् सिद्धियोगेन व च वाल वाल व कौल वा॥ १५-३३०॥

वनिजे श्रवणायां च रेवत्यां वा तथैव च।

उत्तरात्रये योगेषु तथा पूर्वा त्रेयेषु च॥ १५-३३१॥

अश्विन्यां वाध रोहिण्यां तृतीया नवमी तिथौ।

अष्टम्यां वा चतुर्दश्यां षष्ठ्यां वा पंचमी तिथौ॥ १५-३३२॥

कुह्वां च पौर्णिमायां च निशायां प्रान्तरे तथा।

एकलिंगे श्मशाने च शून्यागारे तथा लये॥ १५-३३३॥

२५३ब्) गुरुणां वैष्णवे वापि स्वयंभू क्रमैस्तथा।

शुक्रैर्वा रक्तकुसुमैश्च दक्तसंयुतैः॥ १५-३३४॥

सीरागा रचिता वस्त्रे लिखित्वा धारयेत् पुनः।

तस्य सर्वार्थ सिद्धिस्या छंकरेण च भाषितम्॥ १५-३३५॥

कुमारीं पूजयित्वा च देवीसूक्तं निवेद्य च।

पठित्वा भाजयेद् विप्रा धनवान् वेदपारगान्॥ १५-३३६॥

आखेटकमुपाख्यातं कुमार्यै व दिनत्रयम्।

तदा भवेन् महारक्षा कवचं सर्वकामदम्॥ १५-३३७॥

नाधयो व्याधयस्तस्य दुःखशोकभयं क्वचित्।

वादी मूको भवे दृष्ट्वा राजा च सेवका यते॥ १५-३३८॥

मासमेकं पठेद्यस्तु प्रत्यहं नियतः शुचिः।

दिवा भवेद् धविष्याशी रात्रौ शक्तिपरायणः॥ १५-३३९॥

षड्वहस्त्रप्रमाणं तु प्रत्यहं भोजयेत् सदा।

षण्मासैर्वा त्रिमासैर्वा खेचरोभतिध्रुवम्॥ १५-३४०॥

अपुत्रो लभते पुत्रमधनो धनवाग्भवेत्।

अरोगी वलवाश्चैव राजा च दासतामियाम्॥ १५-३४१॥

रजस्वला भगे नित्यं जपेद्विद्यां विधानतः।

एवं यः कुरुते धीमान् स एव श्री सदाशिव॥ १५-३४२॥

इति विश्वसारतन्त्रे महिषमर्दिनी कवच समाप्तम्॥

अथ महिषमर्दिनी स्तोत्रम्॥

श्रीभैरव उवाच

मच्चिते चण्डिच्च्यूर्णित महामोह प्रचण्डा स्वरे रेस्वैरं देवि
प्रचण्डदुर्गपवन ओहोर्मिमं दास्य दे।

तेनायं निवद्रतो निरूपन श्रीपादपद्माटवीं प्रान्तानन्तरे मम नोहं
सश्चिरं नन्द तु॥ १५-३४३॥

हित्वा चण्डि हिरण्यदा शरणपटु प्रोद्दागुलिस्फायत् कमुसुंमेरूसोदर
सदा टोपं नृसिंहं सुराः

माधस्तत्र प्रचण्डपैषणपटु श्रीपादसं सेवंते कथि वैरिणं
किमरिभितिर्भवेत् सेविनः (२)॥ १५-३४४॥

२५४अ) चण्डि त्व विषयान्तरक्षरपदं श्रोत्रान्तरे चेद्गतं तत् तत्त्वं पुरुषं प्रकृत्य नुगतं ब्रह्मादिभिर्गीयते।

तस्मा देवि समस्त दैवत सुधासारैकधाम स्फुरच्छ्रीमत्पादपयोजं चुम्वनपरं मामद्य संभावया (३)॥ १५-३४५॥

मत्रिंदा यदिवास्तु तत् कुलकथाचाराद् वरं मास्तु वा कीर्त्तिः केश्वकोटिकार्चनकरी चैवास्तु मत्सद्विधिः।

मातर्ब्रह्महरिस्मरारिहुतभुग्दैवादिसेवास्पद श्रीमत्पादय यो जपं वनविधौ चित्तं सदैवास्तुरः॥ १५-३४६॥

निर्दिष्टोस्मि यदि त्वदीयपदयुक पूर्वापरौ भावने निर्दिष्टस्य तथा ममास्तु विनयं किं वास्तु सिद्धास्पदम्।

तस्मा देवि कृपा भवां चिततनुं श्रीपादपद्मद्वयं मच्चितेक्षतसंपदि प्रसरनिक्षेमं करि क्षम्यताम् (५)॥ १५-३४७॥

आत्मानं प्रतिपद्यभूतपति प्युमादमासादितस्फारं जीवनरक्षणे स च कृते नैवाभविष्यत् प्रभुः।

दैवाद् विद्युतचन्द्रचन्दन वनप्रागस्त्यगर्भस्त्रवन्माध्वी पूर्णभवत्यद्
ऐककमाला मोदेनसंपादितः (६)॥ १५-३४८॥

हा हा मातरनादिमोहजलधि व्याहारविद्याखिलद् ब्रह्मानन्दरसाभिषेक
विरसस्वान्तोदरे मादृशि।

युष्माक सुरवृन्दनिर्भरमलस्तापाति भूतक्षणा श्रीमद्भक्तिरसाति दुर्दिन
परीवाहः सदार्य तु (७)॥ १५-३४९॥

त्वत् पाद स्फुरदण्डजालयु वजाश्वंडां शुकोटि सुवलद्धां तत्त्वान्त
विसारिनिर्मल चिदानन्द त्रयं दैवतम्।

२५४ब) सर्गसंमृजते स्थितिं वितनु ते सृष्टिं पुनर्लूंपते।

प्रोद्भिन्नांजननीलनीरदमहच्चित्ते मदैवास्तुनः (८)॥ १५-३५०॥

या शस्यन् महिषो छल स्फुटमिलदुर्जद्विधारस्थर प्राप्तातः प्रसरोत्तमो-
त्तम शिरो दैव्यं समालभ्यते।

सा दुर्गा जप दुर्गति हरति यां तरत्रासिनी तृप्यद् भैरव वैरिदारण

पटर्जीया जनाल्हादिनि (९)॥ १५-३५१॥

नृत्यत् खेटक चामरां चलरणचक्राद्य खर्वारवस्फायत् सैन्य शिखिमुखो

छदलं त्याजित्यतादौ वुधो।

झंझावाणविसर्पिनं तितशिरः साटोपदुष्टा सुरत्रूघस्त्वंडविखण्डिता

खिललसत् कुन्दाक्षपाशोज्वलम् (१०)॥ १५-३५२॥

चं चत्कमुविरामकामलकलना तिब्रालसंयादको माद्यन् माहिषतिर्यगा

क्षिणरभृच्छृगान्तरालस्थले।

वस्वर्णे वसुपुत्रमध्यकलितै वद्धा प्रती सा तृभिः सव्यैश्चारुवरागनेन

णमुदा घूर्णाय मां नस्मरणम् (११)॥ १५-३५३॥

ऊर्ध्वाधः क्रमसव्यवामकरयोश्चक्रं शरं कर्तृकां खेटं

वाणधनुस्त्रिशूलभयहन् मुद्रां दधानां शिवाम्।

श्यामां नीलघनोश्च कुण्डल च यां प्रोन्नद्धचूडां स्खलद्

वालास्फालन सत्करालवदनां घाराटहासोद्भटाम् (१२)॥ १५-३५४॥

एवं ये तव देवि मूर्त्तिमनद्यां ध्यायन्ति दुर्गादिभिः शक्राद्यैरपि पूजितां परपरक्षोभादिकं कुंर्यतो।

राज्यं शक्रजय सदर्णधिषणा काव्यामृता वर्षणा स्तंभोचाटन-मारणादि कृतिनां तेषां स्वयं जायते (१३)॥ १५-३५५॥

स्तोत्रा त्व चरणारविन्दयुगलध्याना वधानान् मयां मन्त्रोद्धार कुलोपचारचरितं गूढोपदिष्टं यदि।

ये श्रृण्वन्ति पठन्ति देवि रतसा श्रीमोक्षकामादया तेषां हस्तगतां भजन्ति जगतां मामार्नमस्ते जयः (१४)॥ १५-३५६॥

इति महिषमर्दिनी स्तोत्रं समाप्तं मिति भद्रम्॥

अथ लक्ष्मी कवच

अथ वक्ष्ये महेशानि कवचं सर्वकामदम्।

यस्य विज्ञानमात्रेण भवेत् साक्षात् सदाशिवः॥ १५-३५७॥

अर्चनं पूजनं तस्या मन्त्रजापजपेन्नरः।

सभवेत् पार्वती पुत्रः सर्वशात्रपुरस्कृतः॥ १५-३५८॥

विद्यावतार्थिना सेव्या विशेषविष्णुवल्लभा।

अस्य श्रीचतुरक्षरी विष्णुवनिता कवचस्य भगवान् स्त्रीशिवऋषिः
अनुष्टुपछन्द् वाग्मवी देवता वाग्भवं वीजं लज्जा शक्तिः रमाकीलकं
कामवीजात्मकं ममत्व कवित्व पान्त्रित्यं सर्वसिद्धि समृद्धये विनियोगः॥

एकारोमस्तके पातु वाग्भवी सर्वसिद्धिदा॥ १५-३५९॥

ह्रीँ पातु चक्षुषोर्मध्ये चक्षुयुग्मे च शांकरी।

जिह्वायां मुखवृत्ते च कर्णयो दन्तयोनसि॥ १५-३६०॥

ओष्टाधरे दन्तपक्तौ तालूमूले हनौ पुनः।

पातु मां विष्णुवनिता लक्ष्मी श्रीवर्णरूपिणी॥ १५-३६१॥

कर्णयुग्मे भुजद्वन्द्वे स्तन द्वन्द्वे च पार्वती।

हृदये मणिवन्धे च ग्रीवायां पार्श्वयो पुनः॥ १५-३६२॥

पृष्टदेशे तथा गुह्ये वामे च दक्षिणे तथा।

उपस्थे च नितम्वे च नाभौ जंघद्वये पुनः॥ १५-३६३॥

जानुं चक्रे पदद्वन्द्वे गुटिकेङ्गुलिमूलके।

२५५ब्) स्वधा तु प्राणशक्त्यां मेसीमन्यां मस्तके पुनः॥ १५-३६४॥

सर्वाङ्गे पातु कामेशी महादेवी सुमुन्नतिः।

व्युष्टिः पातु महामाया उत्कृष्टि सर्वदाव तु॥ १५-३६५॥

वरद्विपा तु मे देवी सर्वत्रशंभु वल्लभा।

वाग्भवी सर्वदा पातु पातु मां हरगेहिनि॥ १५-३६६॥

रमा पातु सदा देवी पातु मां हरगेहिनी।

रमा पातु सदा देवी पातु मां या स्वराट् स्वयम्॥ १५-३६७॥

सर्वांगे पातु मां लक्ष्मी विष्णु माया सुरेश्वरी।

विजया पातु भभने जया पातु सदा मम॥ १५-३६८॥

शिवदूती सदा पातु सुन्दरि पातु सर्वदा।

भैरवी पातु सर्वत्र भीरूण्डा सर्वदाव तु॥ १५-३६९॥

त्वरिता पातु मां नित्यं उग्रतारा सदाव तु।

पातु मां कालिका नित्यं कालरात्रिः सदाव तुः॥ १५-३७०॥

वनदुर्गा सदा पातु कामाख्या सर्वदाव तु।

योगिन्य सर्वदा पातु मुद्राः पातु सदा मम॥ १५-३७१॥

मात्राः पातु सदा देव्याश्चक्रस्था योगिनिगणा।

सर्वत्र सर्वकार्येषु सर्वकर्मसु सर्वदा॥ १५-३७२॥

पातु मां देव देवेशी लक्ष्मीः सर्वसमृद्धिका।

इति ते कवचं दिव्यं कथितं सर्वसिद्धये॥ १५-३७३॥

यत्र त तत्र नवक्तव्यं यदीक्षेदात्मनो हितम्।

शठाय भक्तिहीनाय निन्दकाय महेश्वरी॥ १५-३७४॥

न्यूनाङ्गे नातिरिक्तेन दर्शयं कदा च।

नस्तवं दर्शये दिव्यं संदर्श्य शिवहा भवेत्॥ १५-३७५॥

कुलीनाय महेच्छाय दुर्गाभक्ति पराय च।

वैष्णवाय विशुद्धाय दद्यात् कवचमुत्तमम्॥ १५-३७६॥

निजशिष्याय शान्ताय धर्मिणे ज्ञानिने तथा।

शनौ मङ्गलवारे च रक्तचन्दकैस्तथा॥ १५-३७७॥

२५६अ) शनौ मङ्गलवारेण रक्तचन्दनकैस्तथा।

यावकेश्च लिखेन् मन्त्रं सर्वमन्त्रं समन्वितम्॥ १५-३७८॥

विलिखेत् कवचं दिव्यं स्वयंभूः कुसुमैः शुभैः।

स्वशुक्रैः परशुक्रैंश्च नानागन्धसमन्वितैः॥ १५-३७९॥

गोरोचना कुंकुमेन रक्तचन्दनकेन वा।

सुतिथौ शुभयोगे वा श्रवणायां रवेर्दिने॥ १५-३८०॥

अश्विन्या कृतिकायां वा फल्गुन्यां च मघासु च।

पूर्वभद्रपदा योगे स्वाभ्यां मंगलवासरे॥ १५-३८१॥

विलिख्येत् प्रपठेत् स्तोत्रं शुभयोगे स्वरालये।

आयुष्मांन् प्रीतियोगे च ब्रह्मयोगे विशेषतः॥ १५-३८२॥

इन्द्रगे शुभयोगे च शुक्रयोगे तथैव च।

कौलवे यालवे चैव वशिजे चैव सत्तमः॥ १५-३८३॥

शून्यागारे श्मशाने वा विजया च विशेषतः।

कुमारी पूजयित्वा च यजेद् देवी सनातनीत्॥ १५-३८४॥

मत्स्यैर्मांसैः शाकस्वपैः पूजयेत् परदेवताम्।

घृताद्यैश्चापकरणैर्धूपदीपैर्विशेषतः॥ १५-३८५॥

ब्राह्मणान भोजयित्वा च पूजयेत् परमेश्वरीम्।

आखेटकमुपाख्यानं तत्र कुर्या दिनत्रयम्॥ १५-३८६॥

तदा भवेन् महारक्षा शंकरेण च भाषितम्।

मारणद्वेषणादीनि लभन्ते नात्रसंशयः॥ १५-३८७॥

सभवेत् पार्वती पुत्रः सर्वशास्त्रवहिः कृतः।

गुरुर्देवो हरः साक्षात् पत्नी तस्य हरप्रिया॥ १५-३८८॥

अभेद्येन यतेद्यस्तु तस्य सिद्धिर्मुहूरतः।

पठति य इह मर्त्या नित्यमांद्रांतरात्मजः॥ १५-३८९॥

पफलमनुमेनं लप्स्यते सौविधियम्। सभवति पदमुच्चैः संपदां पादनम्रक्षिति पमुकुटलक्ष्मी लक्षणानां चिराय॥

२५६ब्) इति श्रीविश्वसारतन्त्रे लक्ष्मीकवचं संपूर्णं समाप्तम्॥

अथ लक्ष्मी सहस्त्रनामं लिख्यते॥

ॐ ता मा कुयामि सुभगा लक्ष्मीं त्रैलोक्य पूजिताम्।

एहे हि देवि पद्माक्षि पद्माकरकृतालये॥ १५-३९०॥

आगछ गछ वरदे पश्य मां स्वेन चक्षुषा।

आयाह्या या हि धर्मार्थ काममोक्षमये शुभे॥ १५-३९१॥

एवं विधि स्तुतिपदं सत्यैः सत्यार्थ सस्तुता।

कनियसी महाभागी चन्द्रेण परमात्मन॥ १५-३९२॥

निशाकराश्च सा देवि त्राते रौद्धौ पयोनिधे।

उत्पन्नमात्रौ तावस्तां शिवकेशव संश्रितौ॥ १५-३९३॥

सनत्कुमारस्तमृषिं समभाष्य पुरातनम्।

प्रोक्तवानितिहासं तु लक्ष्म्या स्तोत्रमनुत्तमम्॥ १५-३९४॥

अथे दृशान् महाघोरा दारिद्यान् नरकात्कथम्।

मुक्तिर्भवति लोकेस्मिन् माधूनां मुनिसत्तम॥ १५-३९५॥

ॐ सनत्कुमार उवाच

ॐ पूपूर्वकृत युगे ब्रह्मात् कदाचित् सर्वलोक कृत्।

सृष्टिं नामा विधीकुर्वन् पश्चा चिन्तामुपेयिवान्॥ १५-३९६॥

किमहारः प्रजास्त्वताः संभविष्यन्ति भूतले।

किं नाशयति दारिद्यं कथं मोक्षभवं ततः॥ १५-३९७॥

दारिद्यान् मरणं श्रैयस्त्विति सचिन्त्य चेतसि।

क्षीरोदत्तोत्तरं कुर्वलं जगामकमलोद्भवः॥ १५-३९८॥

तत्रतीव्रं तपः कृत्वा कदाचित् परमेश्वरम्।

ददर्शपुत्ररीकाक्षं वासुदेवं जगत् प्रभुम्॥ १५-३९९॥

सर्वज्ञं सर्वशक्तीनां सर्ववासं सनातनम्।

२५७अ) सर्वेश्वरं वासुदेवं विष्णुं लक्ष्मीपतिं प्रभुम्॥ १५-४००॥

सोमकोटि प्रतीकाशं क्षीराद्धौ वितने शुभे।

अनन्तभोगिशयनं विश्रातं श्रीनिकेतनम्॥ १५-४०१॥

भूरिसूर्य प्रतिकाशं महायोगीश्वरीश्वरम्।

योगनिद्रारतं श्रीशं सर्वासं सुरेश्वरम्॥ १५-४०२॥

जगदुत्पति संहार स्थिति कारणकारणम्।

लक्ष्मिदिशक्तिकिरण प्रातमण्डलमण्डलम्॥ १५-४०३॥

आयुधैर्देहवद्भिश्च चक्राद्यैः परिवारितम्।

दुर्निरीक्षं सुरैः सिद्धै महायोगिशतैरपि॥ १५-४०४॥

आधारं सर्वशक्तीनां परं तेजः सुदुस्सुभम्।

पुरुद्वन्दे वमीशानं दृष्ट्वा कमलं संभवः॥ १५-४०५॥

शिरोप्यं जलिमादाय स्तोत्रपूर्वमुवावह।

मनोवांछित सिद्धित्वा पुरयस्वमहेश्वर॥ १५-४०६॥

ॐ जयत्वं पुण्डरीकाक्ष नमस्ते विश्वभावन।

नमस्ते स्तु हृषीकेश महापुरुषपूर्वज॥ १५-४०७॥

सर्वेश्वरजनानन्दर्वेशपरमापर।

प्रसीद मम भक्तस्य भिंदि्द्धसंदेहजन्तमः॥ १५-४०८॥

एवं स्तुतः सभगवान् ब्रह्मशा व्यक्तजन्मना।

प्रसादाभिमुखः प्राह निद्राविश्रान्तलोचन॥ १५-४०९॥

हिरण्यगर्भतुष्टोस्मि ब्रुहियां ते भिवांछित।

तद्वक्ष्योमिनसंदेहो भक्तोसि मम सुव्रत॥ १५-४१०॥

केशवाद् वचनं श्रुत्वा करुणा विष्टचेतनः।

प्रत्युवाच महाबुद्धिर्भगवन्तं जनार्दन॥ १५-४११॥

चतुर्दशविधस्यास्य भूतसर्गस्य केशव।

परित्राणाय मे ब्रूहि रहस्यं परमाद्भुतम्॥ १५-४१२॥

दारिद्यशमनं धन्यं मनोज्ञं पावनपरम्।

सर्वैश्वरमहावुद्धै श्वरूपं वैभवं महत्॥ १५-४१३॥

२५७ब्) श्रियाः सर्वातिशायिन्यस्तथा ज्ञानं च शाश्वतम्।

नामानि चैव मुख्यानि यानिगौणानि चाच्युतः॥ १५-४१४॥

त्वद्वक्त्र कमलोक्तानि श्रोतुमिछामि तत्त्वात्।

इति तस्य वचः श्रुत्वा प्रतिराक्यमुवाच सः॥ १५-४१५॥

महाविभूति संपूर्ण षाड्गुण्य वपुषः प्रभा।

भगवद् वामदेवस्य नित्यं वै षानपायिनी॥ १५-४१६॥

एकैकवर्त्ततभिन्ना ज्योत्स्ने वहि मदीधितेः।

सर्वशक्त्यात्मिका सैव विश्वव्याप्य व्यवस्थिता॥ १५-४१७॥

सर्वैश्वरगुणोपेता नित्या शुद्धस्वरूपिणी।

प्राणशक्तिः परां ज्येषाः प्रार्णातां सर्वथा भुवि॥ १५-४१८॥

शक्तीनां चैव सर्वा सां योनिभूता पराकला।

हन्त तस्या परं नाम्नां सहस्त्रमिदमुत्तमम्॥ १५-४१९॥

श्रृणुष्टावहितो भूत्वा परमैश्वर्यभूतिदः।

नामः॥

ॐ श्रीपद्माकृतिः सत्या सां न चिंछक्तिरव्यया॥ १५-४२०॥

केवला निष्कला शुद्धा व्यापिनी व्योमविग्रहा।

व्योमपद्माकृता धारा परव्योमामृतोद्भवा॥ १५-४२१॥

अच्युतव्योमनिलया परमानन्दरूपिणी।

नित्यशुद्धा नित्य तृप्ता नित्यदारिद्यनाशिनि॥ १५-४२२॥

ज्ञानशक्तिः कर्तृशक्ति भोक्तृशक्तिशिवावहा।

महाभश्च महानन्दा विभूतिर्विमलाचला॥ १५-४२३॥

अनवा वैभव व्यक्ता नित्यानन्दविकासिनी।

सकृद्विभिन्ना सर्वाक्ति समुद्रपरितौषिणी॥ १५-४२४॥

मूर्त्तिः सनातनी हार्दी निस्तरंगा निरामया।

ज्ञानज्ञया ज्ञानगम्या ज्ञानज्ञेय विकासिनी॥ १५-४२५॥

सच्छब्दशक्तिर्गहननिष्कंपार्चि सुनिर्मला।

२५८अ) अलंकारिराधारा निःअस्ंकल्पा निराश्रया॥ १५-४२६॥

असकीर्णा सुशान्ता च शाश्वती भासुरी स्थिरा।

अनौपम्या निर्विकाल्पा निर्यत्रायन्त्रवाहिनी॥ १५-४२७॥

अभेद्या भेदिनी भिन्ना भारती वैखरी खगा।

अग्राह्याग्र हिकारूढा गर्भस्था विश्वरूपिणी॥ १५-४२८॥

अनिदेश्या प्रतिहता निर्वीजा पावती परा।

अप्रतर्क्या परिमिता भव भ्रान्ति विनाशिनी॥ १५-४२९॥

एकद्विभूपा त्रिविधा संख्यातीता सुरेश्वरी।

सुप्रतिष्टा महाधात्री छितिवृद्धिर्ध्रुवागतिः॥ १५-४३०॥

ईशानी महिमा ऋद्धिः प्रमोदाह्युज्जताह्युमा।

अक्षरार्धा वसाना च सुप्रकाशी विभंगमा॥ १५-४३१॥

नीरजाराजिता नित्या जया योनि सतिशुभा।

तमोनुदा वह्वाला च सुदीप्तिश्या भुमालिनी॥ १५-४३२॥

अप्रमेया त्रिधा सूक्ष्मा परनिर्वाणदायिनी।

अवदाता सुशुद्धा च अशोमाख्यपरापरा॥ १५-४३३॥

संधारकी शुद्धविद्या सर्वभूतमहेश्वरी।

लक्ष्मी पुष्टिर्महार्देवी शान्तिरापूरणेन वा॥ १५-४३४॥

अनुग्रहाणां तिराज्या जगज्येष्टा जगन्निधिः।

सत्या प्रछीक्रियोग्याज्ञाने चाल्कर्षणे शुभा॥ १५-४३५॥

संपूर्णल्हादिनी शुद्धा ज्योतिष्मत्य मृता वहा।

रजोवत् पर्क प्रति *? कर्पिणी वार्षिणीरसा॥ १५-४३६॥

पराविक्तमती देती देवी भाश्वशान्तिमतीकला।

कलाकलंकलहिता विशाला दीपनीरतिः॥ १५-४३७॥

संवोधिनी हारिणी च प्रभावा भव भूतिदा।

२५८ब) अमृतस्पंदिनि जीवननी जीवजननी घण्टिकाश्रिता॥ १५-४३८॥

धूम्राकलावती प्राणा भासुरां शुभति शुभा।

शुद्धा ध्वनिसतिः * * * * * कृष्टिरेव च॥ १५-४३९॥

प्रापणी प्राणदा प्रह्वी चिणीपाण्ड चासिनी।

आधनी वज्रनलिका चिडब्रह्माण्डवाहना॥ १५-४४०॥

अनन्तरूपा नन्तानं तस्यानन्तस्य मसंभवा।

महाशक्तिः प्राणशक्ति प्राणदात्रि हृतांवरा॥ १५-४४१॥

महासहस्त्रनिखिला इछाधारा सुखावहा।

प्रत्यक्षलक्ष्मीः प्रकटा प्ररोहा वुद्धिगोचरा॥ १५-४४२॥

नानादेहावार्ता च वहुदेह विकासिनि।

सुवाभिलिष्पा पूर्णेछा सर्ववर्णा च भाषिनि॥ १५-४४३॥

नानास्वरूपा चिद्धात्री शब्दपूर्वा प्ररातनी।

व्यक्ता व्यक्तजीवकाशा सर्वेछा परिपूरिता॥ १५-४४४॥

संकल्पसिद्धि संक्षपा तत्त्वगर्भा भवाभवा।

भूताश्रया चित्स्वरूपा त्रिगुणा गुणगर्विता॥ १५-४४५॥

प्रजावतीश्वरी रौद्री सर्वधारा सुखावहा।

कल्याणरोहणे कल्पा * * * * * नशनी॥ १५-४४६॥

नीरूपछिन्नसन्ताना ह्यनन्ताष्टगुणा भया।

मायामयी योगमाया महामाहेस्वरी प्रिया॥ १५-४४७॥

महास्त्री विमला कीर्त्तिर्जया लक्ष्मीनिरंजनी।

प्रद्युम्नदयिता साध्वी सुखसौभाग्य सिद्धिदा॥ १५-४४८॥

काष्टानिष्टा प्रतिष्टा च ज्येष्टे श्रेष्टा जयावहा।

सर्वार्तिशायिनी प्रीति विश्वशक्तिर्महावला॥ १५-४४९॥

वरिष्टविजया वीरा जयन्ति विजय प्रदा।

हृद्गुह्या गोपनीगुह्या गजधं च सविता॥ १५-४५०॥

२५९अ) योगेश्वरी योगगम्या योगयोगेश्वरी प्रिया।

ब्रह्मेण रुद्रनमिता स्वरेश्वरवरप्रदा॥ १५-४५१॥

त्रिवर्त्तस्था त्रिलोकस्था त्रिविक्रमपदोद्भवा।

सुतारा तारिणी तारा दुर्गमा तारणी परा॥ १५-४५२॥

सुतारितारयन्ती भूभूतिं तारेश्वर प्रभा।

ग्रहविद्या महाविद्या यज्ञा विद्यासुशोभना॥ १५-४५३॥

अध्यात्मविद्या वै पद्मा पद्मस्था परमेश्वरी।

आन्वेक्षिकी त्रयीवार्ता दण्डनीतिर्निपामिनी॥ १५-४५४॥

गौरीवागीश्वरी गोस्त्री गायत्री कमलोद्भवा।

विश्वंभरा विश्वरूपा विश्वमाता वसुप्रदा॥ १५-४५५॥

सिद्धिः स्वाहा स्वधा स्वस्ति स्वधा सर्वार्थसाधनी।

इछा सृष्टिद्युतिभूतिः कीत्तिः शुद्धा दयामति॥ १५-४५६॥

श्रुतिमेधा धृतिश्चैव विद्या विवुधवन्दिता।

अन्नसूर्यागतिधात्री कासश्वासविनाशिनी॥ १५-४५७॥

प्रतिज्ञासं नविभूतिर्द्यौःप्रभा विश्वभाविनी।

स्मृति वाग्विश्वजननी पश्यन्ती मध्यमासमा॥ १५-४५८॥

संध्या मेधा प्रभा भीमा भीमासर्वकारस्वती।

कांची माया महामाया मोहिनी माधव प्रिया॥ १५-४५९॥

सौम्यभोगा भोगिनी * * * * भोगदायिका।

* * * कनक प्रख्या सुवर्णकमलासना॥ १५-४६०॥

हिरण्यवर्णा सुश्रोणि हरिणीरमणीरमा।

चन्द्रा हिरण्मया ज्योत्स्ना रम्याशोभाशुभावहा॥ १५-४६१॥

त्रैलोक्यसुन्दरी रामा रामाविभववाहिनी।

पद्मास्था पद्मनिलया पद्ममाला विभूषिता॥ १५-४६२॥

पद्मयुग्मधरा कान्ता दिव्याभरणभूषिता।

२५९ब) विचित्रमाल्यगन्धाढ्या विचित्रा युद्धवाहना॥ १५-४६३॥

महानारायणी देवी वैष्णवी वीरवन्दिता।

कालसंकर्षणी धारा तत्त्वसंकर्षणी हरा॥ १५-४६४॥

जगत्सपूरणी विश्वा महाभैरवभूषणा।

वारुणी वरदाख्याघंटकर्णा पराजिता॥ १५-४६५॥

नृसिंही भैरवी ब्राह्मी भास्करी व्योमचारिणी।

ऐन्द्री कामधनुसृष्टिः कामयोनि महाप्रभा॥ १५-४६६॥

वृक्षावेशा महाशक्ति वीजशक्त्यात्मदर्शना।

गरुडारूढ हृदया चाण्डी च मधुरानना॥ १५-४६७॥

महोग्ररूपा वाराही नारसिंहि हता परा।

युगान्तहुतभुत्काला करापिंगला कला॥ १५-४६८॥

त्रैलोक्यभीषणा भीमा श्यामा त्रैलोक्यमोहिनी।

महात्कटा मामहारा मा महाचण्डा महाशना॥ १५-४६९॥

शंखिनी लेखिनी स्वस्था खिखिनी खेचरेश्वरी।

भद्रकाली चित्ररूपा कौमारी भगमालिनी॥ १५-४७०॥

कल्याणी कामधृग्जालामुखी चोल्पलमालिका।

वालका धनदी सूर्य हृदयोत्पलमालिका॥ १५-४७१॥

वालका धनदी सूर्य हृदयोत्पलहस्तिका।

अजिता कर्षिणी रीतिर्भूसुण्डगरुडासना॥ १५-४७२॥

वैश्वानरी महामारी महाकाली विभूषिता।

महामायूरिविभवा शिवानन्दा रति प्रदा॥ १५-४७३॥

उद्गतिः पद्ममाला च वन्धूवेगा विभाविनि।

भाविनी सत्क्रिया देव सेनाहिरण्यरजता॥ १५-४७४॥

सहस्रधा यज्ञमाता हस्तिनादप्रवोधिनी।

हिरण्यपद्मवर्णा च हता भद्रा दुर्धरा॥ १५-४७५॥

२६०अ) सूर्यहिरण्य प्रावारा सद्दृष्टि हेममालिनी।

पद्मानना नित्यपुष्टा देवमाता मृतोद्भवा॥ १५-४७६॥

महाधना नवप्राप्ता काकमुकंधरा।

आदित्यवर्णा चन्द्राभा गन्धसप्तदुरा सदा॥ १५-४७७॥

वरार्चिता वनारोहा वेरेण्या विप्लुवल्लभा।

कल्याणी वरदा वामा वामे श्रीविन्ध्यवासिनी॥ १५-४७८॥

योगनिद्रा योगरता देवकी कीमरूपिणी।

कंसविद्राविणी दुर्गा कुमारी कौशिकी क्षमा॥ १५-४७९॥

कात्यायनी कालरात्रि निशातृप्तिश्च दुर्जया।

विरूपाक्षी विशालाक्षी भक्तानां पररक्षणा॥ १५-४८०॥

वहुरूपा स्वरूपाश्च विरूपा रूपवर्जिता।

घण्टानिनादवहुलां जीमूतघननिःस्वना॥ १५-४८१॥

महारेन्द्रमथनी भ्रुकुटी कपिलानना।

सत्यो पापाचिता चैव कौवीरी ब्रह्मचारिणी॥ १५-४८२॥

आयाशोर्या सुतदाम धर्मकामार्थमोक्षदा।

दारिद्यदुःखशमनी घारदुर्गतिनाशिनी॥ १५-४८३॥

भक्तार्तिसमनी भव्या भवभंगापहारिणी।

क्षीराद्धितनया पद्मा कमलारणी धरा॥ १५-४८४॥

रुक्मिणी रोहिनी शीता सत्यभामा यशश्विनी।

प्रज्ञा धारामिता वुद्धि वेदमाता यशोवती॥ १५-४८५॥

समाधिर्भावना मैत्री करुणा भक्तिवत्सला।

अन्तर्वेदी दक्षिणा च ब्रह्मचर्यपरागति॥ १५-४८६॥

दीक्षा विक्षीपरोक्षा च समीक्षा वीरवल्लभा।

विछिन्ना विरुजाराज्ञी तापिनी विन्दुमालिनी॥ १५-४८७॥

क्षीरधारा सुजलदा सुप्रभा च चमुरार्चिता।

२६०ब्) हव्यगर्भा चान्यगर्भा जुह्वती यज्ञसंभवा॥ १५-४८८॥

सर्वकामप्रदा भद्र सुप्रभा सर्वमङ्गला।

श्वतासुशुक्रवसना शुक्रमाल्यानुलेपना॥ १५-४८९॥

हंसाहितकरी हंसी हृत् प्राहल्कमलालया।

सितातपत्रा सुश्रोणि पद्मपत्रा यतेक्षणा॥ १५-४९०॥

सावित्री सत्यसंकल्पा कामदा कामकामिनी।

दर्शनीयी दृश्या दृक्षां स्पृश्या सेवा वराङ्गना॥ १५-४९१॥

भोगप्रिया भोगवती भोगेन्द्रशयनासना।

आद्रा पुष्करणी पुण्या षषार्णा यमूदनी॥ १५-४९२॥

श्रीमतिचण्डभाकारा परमैश्वर्य भूतिदा।

अचिन्त्यानन्तविभवा भवाभवभावविभोविनी॥ १५-४९३॥

निःश्रेणिः सर्वदेहस्था सर्वभूतनमस्कृता।

वालावलायिका देवी गीतमी* गोकुलया॥ १५-४९४॥

तोषणी चूर्णचन्द्राभा एकानन्दा शतानदा।

सट्ग्रामनगद्वार हम्या पवनवासिनी॥ १५-४९५॥

कुश्यां त्रिदारुणी चण्डा किराती मन्दरालया।

कालायनी कलगमा भयदा भयनाशना॥ १५-४९६॥

सौदामिनी मेघरवा दैत्यदानवमर्दिनी।

जगन्माता भवकरी भूतयात्री सुदुर्लभा॥ १५-४९७॥

काश्यपी शुभदन्ता च वनमाला वसुन्धरा।

धन्याधन्येश्वरी भव्या रत्नदामसुवर्धिनी॥ १५-४९८॥

गांधर्वी रेवती गंगा शकुनी विमलानना।

इडा सातिकरी चैव तापसी मलयालया॥ १५-४९९॥

आज्या या वज्रकौमारी सोमपा कुसुमाश्रया।

जगत् प्रिया सोमरथा दुर्जया खगवाहना॥ १५-५००॥

मनोभवा कामचरा सिद्धचार सेविता।

२६१अ) व्योमलक्ष्मी महालक्ष्मीः तेजोलक्ष्मीः मुजाज्वला॥ १५-५०१॥

रसलक्ष्मी जगद्योनि गन्धलक्ष्मी वनाश्रिय।

श्रवणी श्रीवणी नेत्रे रसना प्राणचारिणी॥ १५-५०२॥

विरिंचमाता विभवा वारदा ॠजुवाहना।

वीरावीरेश्वरी वन्ध्या विशोका वसुवर्धनी॥ १५-५०३॥

अनाहता * * * कुण्डलिनीर्धनवासिनी।

गजगन्धर्वनमिता सुरेन्द्रनमिता सती॥ १५-५०४॥

सर्वमङ्गलमाङ्गल्या सर्वकाममृद्धिदा।

सर्वानन्दा सदानन्दा सत्कीर्त्तिः सिद्धसेविता॥ १५-५०५॥

सेनावलिकुहुरा कामहोत्पलनिवासिनि।

अरुन्धति वसुमती भार्गवे वास्तु देवता॥ १५-५०६॥

मायुरी वज्रवेताली वज्रहस्ता वरानना।

अनद्या धारणी धीरा मणीमणिरमभूषणा॥ १५-५०७॥

राजश्रीरूपसहिता ब्रह्मश्रीब्रह्मवन्दिता।

जयश्रीर्जयदा ज्ञेया स्वर्गश्रीस्वर्गतिसताम्॥ १५-५०८॥

सुपुष्पा पुष्पनिलया फलश्री निफल प्रिया।

धनुलतात्वमिरता परक्रोधनिवासिनी॥ १५-५०९॥

क्द्रूर्धनायुकपिला सुरसासरसाधनु।

महाश्वेता महानीला महामूर्त्तिविषापहा॥ १५-५१०॥

सुप्रभा ज्वालिनी व्याप्तिः तृप्तिः प्राप्तिः प्रभाकरी।

तेजोवती पद्मवोधा मदलय्यारूणावती॥ १५-५११॥

रत्नरत्नावली भूता शतधामातमोपहा।

त्रिगुणि घोषणी रक्षा नन्दनी घोषवर्जिता॥ १५-५१२॥

साध्यादिनिर्दितिर्देवी मृगमन्दा मृगांकगा।

विल्वनीलोत्पलगता वृषरत्ना कराश्रया॥ १५-५१३॥

हिरण्यरजतछिन्ना शंखभद्रा सनस्था ता।

प्रिय गोमयक्षीरा च दधिसर्पिजलाश्रया॥ १५-५१४॥

मरीचिश्चीरवसना पूर्णचन्द्रार्कविष्टरा।

सुसूक्ष्मी मिवृतिः स्थूला निवृता वतिरेव च॥ १५-५१५॥

चामरी ज्वलिनी धूम्रा हव्यवाहा हिरण्यदा।

दीपिनी कलवृद्धिः शोषणी संप्रवोधिनि॥ १५-५१६॥

भास्वरासंहतिस्तीक्ष्णं प्रचण्डज्वलनोज्जला।

संज्ञा प्रदीप्ता चण्डा च वैद्युती सुमहाद्युति॥ १५-५१७॥

कपिला नीलरक्ता च सुषुम्ना विस्फुलिंगिनि।

अर्विष्मती सुहरणी दीर्घा धूमावलिजला॥ १५-५१८॥

संपूर्णमण्डला पूषा स्त्रंसिनिसुमनोहरा।

यशस्तुष्टिकरी छाया मानसी हृदयोद्गता॥ १५-५१९॥

सुवर्णकरणेश्रेष्टा मृतसंजीवनेरणे।

विशल्पकरणी शुभ्रा सन्धिनि परमौषधि॥ १५-५२०॥

ब्रह्मिष्टा ब्रह्मसहिता वैन्दवी रत्नसन्निभा।

विद्युत्प्रभा विन्दुमति त्रिस्वभावगुणाम्विका॥ १५-५२१॥

नित्यदित्या नित्यहृष्टा नित्यकामकरैषिणी।

पद्माङ्कवज्रचिह्ना च वज्रदण्डा विलासिनि॥ १५-५२२॥

वैदेहि पूजिता कन्या माया विजया वाहिनि।

मालिनि संगमा माल्या मालिनी मालभारिणी॥ १५-५२३॥

विश्वेश्वरी गुणमती मण्डलामण्डनेश्वरी।

२६२अ) हरिप्रिया भौमसुता मनोज्ञामति दायिनी॥ १५-५२४॥

यशोधनी रत्नमाला तृष्णा त्रैलोक्यवन्धनी।

अमृता तारणी हर्षा विनता वल्लभी शशि॥ १५-५२५॥

संकल्पभामिणि मिश्रा कदम्वकमृत प्रिया।

अगता विगता वज्रसुहिता सहिताक्षणा॥ १५-५२६॥

सर्वार्था साधनकरी सर्वादारिद्यनाशिनि।

करुणाधारसंभूता कमलाक्षीं शशिप्रभा॥ १५-५२७॥

शोभादीप्ति महादीप्ति महाज्वाला विकाशिनी।

मालाकांचनमाला च सद्वज्रकनकप्रभा॥ १५-५२८॥

प्रक्रिया परमायोक्ती क्षोभिका च सुखोद्या।

विजृभमाना वज्राख्या श्रृंगलाकनकेक्षणा॥ १५-५२९॥

जयकरी मधुमती हारिती शशिनी शिवा।

मूलप्रकृतिरीशारी योगमाता मनोजवा॥ १५-५३०॥

धर्मोदया भानुमती धर्ममोद्या तथा गता।

कुसुरभूम्यभिमुखी सम्यक् संवोधत्युत्तमा॥ १५-५३१॥

व्यामशक्ति महादेहा व्योमगा भगवन्मयी।

गंगा वितस्ता यमुना चन्द्रभागा सरस्वती॥ १५-५३२॥

तिलोत्तमो वशी भद्रा स्वामिनी स्वरसुन्दरि।

वाणप्रहरणा वाला विवोष्टि चारुहासिनि॥ १५-५३३॥

काकुद्मिनी कामदृष्टिष्टा दृष्टफलप्रदा।

कामकामेश्वरी काम्या कामचारुविहारिणी॥ १५-५३४॥

हिमशैलेन्द्रसंकाशा गजेन्द्रवरवाहना।

अशेषसुखसौभाग्य संस्पदा योनिरुत्तमा॥ १५-५३५॥

सर्वोत्कृष्टा सर्वमयी सर्वासर्वेश्वरप्रिया।

सर्वांशुयोनिः सा व्यक्ता संप्रधानेश्वरेश्वरी॥ १५-५३६॥

सा देवि पापहर्त्री च सा त्रिधं कुर्वतान् मम (१०००)।

२६२ब्) इति नाम्नां सहस्रं तु लक्ष्म्या प्रोक्तं शुभावहम्॥ १५-५३७॥

परापरेण भेदेन गौणमुख्यविभोगतः।

पत्त्वैदंकीर्तयेन्नित्यं श्रृणुयाद् वा विमानवः॥ १५-५३८॥

शुचिः समाहितो भूत्वा भक्तिश्रसमन्वितः।

श्रीनिवासं समभ्यर्च्च्य पुष्पधूपानुलेपनैः॥ १५-५३९॥

भोगैश्च मधुपक्काद्यैर्यथाशक्तिर्जयं कुरु।

तात्पार्श्वस्था श्रिये देवी संपूज्य श्रीधरप्रियाम्॥ १५-५४०॥

ततो नामसहस्रेण तोषयेत् परमेश्वरी।

नामरत्नवलिस्तोत्रं मिदं य सकलं पठेत्॥ १५-५४१॥

प्रसादाभिमुखां लक्ष्मीः सर्वं तस्मै प्रयछति।

तस्य लक्ष्म्यं शसंभूता श्रीर्यस्याच्युतवल्लभा॥ १५-५४२॥

नित्यं पठति ये तस्याः सिद्धिमिष्टां लभन्ति ते।

एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः॥ १५-५४३॥

तस्या च शक्तिमन्तो न्यसानादयो यथा।

तथैवैका पराशक्तिः श्रीस्तस्या कारणाश्रया॥ १५-५४४॥

जानादिषां गुणादिषां गुण्यमयी यः प्रोक्ता प्रकृतिः पराः।

एकैव तस्य श्रीशक्ति द्वितियान् मेव वर्त्तत।

परापरणरूपेण सर्वकारसनातनी॥ १५-५४५॥

अनन्तनामधेया च शक्तिचक्रस्य नायका।

जगच्चराचरमिदं सर्व व्याप्यव्यवस्थिता॥ १५-५४६॥

तस्यादेकै व परमा श्री ज्ञेया विश्वरूपिणी।

सौम्या सौम्यनरूपण संस्थिता नरतीजवत?॥ १५-५४७॥

यो यो जयति पुंभावः सविस्णुरिति निश्चय।

यो यस्तु नारीभावः स्यात् तत्र लक्ष्मीर्व्यवस्थिता॥ १५-५४८॥

प्रकृतिः पुरुषश्चान्यस्तृतीया नैव विद्यते।

अथ किं वहुनोक्तेन नरनारी मयो हरि॥ १५-५४९॥

२६३अ) अनेकभेदभिन्नस्तु क्रीडने परमेश्वरी।

महाविभूतिदयितां यस्तु वन्तिच्च्युताश्रयात्॥ १५-५५०॥

ते प्राप्तवन्ति परमं लक्ष्मी संशुभचेतनसः।

पद्मयोनिरिदं प्राप्य पठं स्तोत्रं ततः क्रमात्॥ १५-५५१॥

दिव्यमस्तगुणैर्यं तत् रसादाचलद्धवान्।

सकामानां च फलदं मकामानां च मोक्षदा॥ १५-५५२॥

पुस्तकाक्षभयाब्जाद्यां सितवस्त्रा त्रिलोचनाम्।

महापद्मनिषंण्डान्तां लक्ष्मीगर्जरतां नुमः॥ १५-५५३॥

ॐकरुयुलगृहीनं पूर्णकुंभं दधाना क्वचिदमलगजस्था
शंखपद्माक्षपाणिना।

क्वचिदपि दयिताङ्के चामरव्यग्रहस्ता क्वचिदपि। तृणिपासं वित्रती हेमकान्ति।

इति पुरुषोत्तमेन प्रोक्तं लक्ष्मी नामसहस्रस्तोत्रं सपूर्णम्।

अथ लक्ष्मीस्तोत्रम्॥

अगस्तिरुवाच

मात नमामि कमले कमलायताक्षि श्रीविष्णुहृत् कमलवासिनी विश्वमाता।

क्षीरोदक्षे कमलकोमलगर्भगौरी लक्ष्मिप्रसिद्सततं नमतां शरण्य (१)

॥ १५-५५४॥

त्वं श्रीरूपेन्द्र सदने मदनैकमातर्ज्योत्स्नासिचन्द्रमसि चन्द्रमनोहरास्ये

।

भूर्यप्रभासि च जगति नये प्रभासि। लक्ष्मि प्रसीद् सततं नमतां

शरण्ये (२)॥ १५-५५५॥

त्वं जातवेदसि सदा दहनात्मशक्तिर्वेधात्स्वपाजगदिदं सकलं विदध्यात्

।

विश्वंभरोपि वितृयादखिलं भवत्त्या लक्ष्मी प्रसीद सततं नमतां

शरण्ये (३)॥ १५-५५६॥

त्वद्भत्त्यमेतद् अमले हरते हरोपि त्वं पासिं हंसिविदधासि परापरासि।

२६३ब) ईद्योवभूव हरिरप्यमले त्व दापभ्या लक्ष्मि प्रसीद सततं

नमःतां शरण्ये (४)॥ १५-५५७॥

शूरः स एव स वुधः सगुणी सधन्यो मान्यः स एव गुरुपकलाकलापैः।

एकः शुचिः सहि प्रमात्सकलेपि लोके यत्रापतात् तव शुभे करुणा कटाक्षः (५)

॥ १५-५५८॥

यस्मिन् च संक्षण महोपुरुषे गजेश्चैन्द्रैणेतृणे सरसि देव कुले गृहे ब्जे?।

रत्ने पतत्रिणि पशौ शयने धरायां स श्रीकमेव कमेले तदिहास्ति नान्यत् (६)

॥ १५-५५९॥

त्वत्सृष्टमेव सकलं शुचिताम्रपैति त्वत्त्यक्तमेतद् उखिलं त्व शुचीहलक्ष्मि।

त्वन्नामय उचसु मंगलमेव तत्र श्रीविष्णुपत्नि कमले कमलालयेति (७)॥ १५-
५६०॥

लक्ष्मीं श्रियं च कमलां कमलालयां च पद्मारमां
नलिनयुग्मयुग्मकरां च मां च।

क्षीरोदजाममृतकुंभकरेन्दिरां च विष्णुप्रियामिति सदाजपतां
क्वदुःखम् (८)॥ १५-५६१॥

इति स्तुत्वा भगवती महालक्ष्मी हरिप्रियाम्।

प्रणनाम सपत्नीकः साष्टांगदंडवन् मुनिः॥ १५-५६२॥

श्रीरुवच

उत्तिष्टोतिष्टभद्रं ते मित्रावरुणसंभव।

पतित्व त्वमुत्तिष्टलोपा मुद्रेशुभद्रते॥ १५-५६३॥

स्तुत्वा नया प्रसन्नाहं व्रियाता यदभीप्सितम्।

व्यास उवाच

इति श्रुत्वाथ समुनिः प्रत्यवाच श्रियं ततः॥ १५-५६४॥

प्रणिपत्य महाभागो भक्तिगर्भमिदं वच।

अगस्त्य उवाच

यदिदेयो वरोमह्यं वरयोग्योस्म्यहं यदि॥ १५-५६५॥

यं पठिष्यन्ति च स्तोत्रं त्वद् भक्त्या सत्कृतं सदा।

२६४अ) तेषां कदाचित् सन्तापो मास्तु मास्तु दरिद्रता॥ १५-५६६॥

मास्तु चेष्टवियोगश्च विछेदो मास्तु सन्ततेः।

सर्वत्र विज्यश्चास्तु मास्तु संपतिसंक्षयः॥ १५-५६७॥

श्रीरूवाच

एवमस्तु मुने सर्वं यस्त्वया परिभाषितम्।

एतत् स्तोत्रस्य पठनं मम सन्निध्यकारणम्॥ १५-५६८॥

अलक्ष्मी कालकर्णी च तद्ग्रहेन विशेत् क्वचित्।

वालग्रहाभिभूतानां वालांनां शान्ति कृत् परम्॥ १५-५६९॥

भूर्जपत्रे लिखित्वा च वध्नीयास्कण्ठदेशतः।

इदं वीजरहस्यं मं रक्षणीयं प्रयत्नतः॥ १५-५७०॥

श्रद्धाहीनेन दातव्यं नदेयं चाशुचौ क्वचित्।

इति श्रीलक्ष्मी स्तोत्रं संपूर्णसमाप्तम्॥

अथ गणेसस्तोत्र॥

ॐकारमाद्यं प्रवदन्ति मन्त्रो वाचः श्रुतिनामपि यं गृर्णति।

गजाननं देव गणानताम्रि भजेहमर्धेन्दु कृता वतंसम् (१)॥ १५-५७१॥

पादारविन्दार्यन तत् पराणां संसारदा वामलभगंदक्षम्।

निरन्तरं निर्गतदानतोयैस्तं नौमि विघ्नेश्वर मं व्रजाभम् (२)॥ १५-५७२॥

कृताङ्गरागं नवकुंकुमेन मत्तालिमाला मदयंकमयम्।

निवारयन्तं निजकर्णतालैः को विस्मरेत् पुत्रमेनंगशत्रो (३)॥ १५-५७३॥

शंभोर्जुटाजूटनिवासि गंगाजलं समानीय करांवुजेन।

लीलाभिरारा छिवमर्चयन्तं गता नमं भक्तियुता भजन्ति (४)॥ १५-५७४॥

कुमारभुक्तौ पुनरात्महेतो। पयोधरौ पर्वतराजपुत्र्याः।

प्रक्षालयन्तं ककरंशिकरेण मुग्घनत्तं नागमुखं भजामि (५)॥ १५-

५७५॥

२६४ब्) त्वया समुद्धृत्य गजास्य हस्तं ये शीकरां पुष्करखंधुमुक्ताः।

व्योमामने ते विचरन्ति ताराः कालात्मनामीक्तिकतुल्यभास (६)॥ १५-५७६॥

क्रीडारतवापि निधौनिजास्ये वलामति क्रामति वारि पुरे।

कल्पावसानं परिचिन्त्य देवाः कैलासनाथं श्रुतिभिस्तुवन्ति (७)॥ १५-५७७॥

नागानने नागकृतास्तुरीये क्रीडारते देवकुमारसंघैः।

त्वपिक्षणंकारगर्जि विहाय संप्राप यत् कर्मुकनामिवेन्दु (८)॥ १५-५७८॥

मदौल्लसत्पंचमुखै रजस्रमधुपयन्तं सकलागमात्मनः।

देवान् ऋषीन् भक्तजनैकमित्रं हेरम्भमन्दारुणमाश्रयामि (९)॥ १५-५७९॥

पादांवुजाभ्यामति वासनाभ्यां कृतार्थयन्तं पयाधरित्रीम्।

अकारणं कारणमाप्तरागतं नागवक्तं नजहाति चेति (१०)॥ १५-५८०॥

येनार्पितं सत्यवती सुताय पुराणमाणिख्य विषाणकोट्या।

तं चन्द्रमौलेस्तनयं तपोभिराराध्वमानं दघनं भजामि (११)॥ १५-
५८१॥

पदं श्रुति नामपदं स्तुतीनां लीलावतारं परमात्ममूर्त्ते।

नादात्मकं वा पुरुषात्मकं वा विभक्तचाद्यं भजविघ्नराजम् (१२)॥
१५-५८२॥

पाशांकुशौ भग्नरदं त्वभीष्तं करेर्दधानं कररन्ध्रमुक्तैः।

मुक्ताफलैः प्राणितशीकरौघैः सिंचन्तमेमं शिवयार्भजामि (१३)॥ १५-
५८३॥

स्वाङ्गस्थिता या निजवल्लभा या मुखांवुजा लोकनलोलनेत्रम्।

स्वैराननाब्जं मद् वै भवेन रुद्रं भजे विश्वविमोहयन्तम् (१४)॥ १५-५८४॥

२६५अ) ये पूर्वमाराधगजानमं त्वां सर्वाणि शास्त्राणि पठन्ति तेषाम्।

त्वतो न चान्यत् प्रतिपादमस्ति तदस्ति चेत् सत्यमसत्यकल्पम् (१५)॥ १५-५८५॥

हिरण्यवर्णजगदीशितारं कविं पुराणं रविमण्डलस्थम्।

गजाननं ये प्रविशन्ति सतस्तत् कालयोग्यं तमहं प्रपद्ये (१६)॥ १५-५८६॥

वेदातगीतं पुरुषं भजेहम् आत्मानमानंदगणं हृदिस्थम्।

गजाननं यत् सहसा जनानां विघ्नान्धकारो विलयप्रयाति (१७)॥ १५-५८७॥

शंभो समाल्मेक्य जटाकलाप शशाङ्कखण्डनिजपुस्करेण।

सुभग्नदन्तं प्रविचित्य रौग्ध्पाद्मक्रुष्ट कामः श्रियमातमोनु (१८)॥ १५-
५८८॥

विघ्नाकुलानां विनिपातनार्थं यं नारिकेलैकदलीफलाद्यैः।

प्रतारयन्तो मदवारणास्यं प्रभुं सदाभीष्टमहं भजेताम् (१९)॥ १५-
५८९॥

यज्ञैरनेकैर्वहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम्।

स्तुत्या नया ये विधिनास्तुवन्ति ते सर्वेभलक्ष्मि नियमा भवन्ति (२०)॥ १५-५९०॥

इति गणेस्तव समाप्ता॥

अथ श्रीविष्णुस्तोत्रम्॥

ॐ आदायवेदात् सकलात् समुद्वान् निहन्त्वं शंखं रिपुमत्युदग्रम्।

दत्ताः पुरा ये नमिता महाय विष्णुं तमाद्यं भजमत्स्यरूपम् (१)॥ १५-
५९१॥

दिव्यामृतार्थं मथिते महाब्धौ देवसुरैर्वासुविमंदराद्यः।

भूमेर्महावेगविघूर्णिता यास्तं कूर्ममाधारगतं स्मरामि (२)॥ १५-
५९२॥

सुमुद्रकांची सरिदुत्तरीया वसुन्धरा मेरुकिरीटभारा।

२६५ब्) दन्ताग्रतोये न समुद्धृता भुस्तमादिकोरें शरेशां प्रपद्ये (३)॥ १५-
५९३॥

भक्तार्तिभंगक्षमयाधिया यं स्तंभां तराद्य द्विदितो नृसिंह।

रिपुं सुराणां निशतै नखाग्रै विन्दारयन्तं न च विस्मरामि (४)॥ १५-५९४॥

चतुःसमुद्रा भरणाधरिस्नी न्यासाय नावं चरणस्य यस्य।

एकस्य नान्यस्य पदं सुराणां त्रिविक्रमं सर्वगनमामि (५)॥ १५-५९५॥

त्रिसप्तवारं नृपतीर्निहत्य यस्तर्पणं रक्तपयं पितृत्य।

चकारदोर्दण्डवलेन सम्यक् तमादिशूरं प्रणमामि विष्णुम् (६)॥ १५-५९६॥

कुले रघूणां समवाप्य जेन्मनिधायसेतुं जलर्धजलान्तः।

लंकेश्वरं यः समयां चकार सीतापतिं तं प्रणमामि भक्त्या (७)॥

१५-५९७॥

हलेन सर्वा नसुरात्रिकृस्य चकारचूर्णं मुसुलप्रहारैः।

यः कृष्णमासाद्य वलंवलीयान् भक्त्या भजे तां बलभद्ररामम् (८)॥

१५-५९८॥

पुरासुराणा समुरान्विजित्य संभावयेत्वि वरचर्मवेशम्।

चकारयः शास्त्रममोघकल्पं तं मूलभूतं प्रणमामि वुद्धम् (९)॥

१५-५९९॥

कल्पा वसाणे निखिलैः खुरैः स्वैः संघट्टयामा सनिमेषमात्रात्।

यस्ते जसानिर्दहताति भौमो विश्वात्मकं तं तुरगं भजामः (१०)॥ १५-६००

॥

शंखं सुचक्रं सुगदां सरोजं दोर्भिर्दधानं गरुडाधिरूढम्।

श्रीवत्स चिह्नं जगदादिमूलं तमाललीनं हृदि विष्णु मीडे (११)॥ १५-६०१॥

क्षीरां वुधौ शेषवीशेषतल्पे शयानमतः स्मितशोभवक्रम्।

२६६अ)

उफुल्लनेत्राम्वुजमम्वुजमम्वुदाभमाद्यं श्रुतीनामसकृत् स्मरामि (१२)॥

१५-६०२॥

प्रीणयेद् अनपास्तुभ्यां जगन्नाथं जगद्गुरुम्।

धर्मार्थकाममोक्षाणां माप्तये पुरुषोत्तमम्॥ १५- ६०३॥

इति श्रीयदुनाथ विरचिता याम् आगमकल्पलतायां पंचमः पल्लवः (५)॥

अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिता।

याभिर्विरचिताभिश्च मोदन्ते मन्त्र देवता॥ १६-१॥

अर्चने जपकाले च ध्याने काम्ये च कर्मणि।

स्थाने चावाहने शंखे प्रतिष्ठायां च रक्षणे॥ १६-२॥

नैवेद्ये च तथान्यत्र तत्रत्कत्वं प्रकाश्यते।

स्थाने मुद्राः प्रद्रष्टव्याः स्व स्व लक्षणलक्षिताः॥ १६-३॥

आवाहनादिका मुद्रा नवसाधारणा मताः।

तथा षडंगमुद्राश्च सर्वतन्त्रेषु योजगत्॥ १६-४॥

एकोनविंशतिर्मुज्ञ?विष्णोरुक्तामनीषिभिः।

शंखं चक्रगदापद्म वेणुश्रीवत्सकौस्तुभा॥ १६-५॥

वनमाला तथाज्ञा मुद्राविल्वा ह्वया तथा।

गरुडाख्या परामुद्रा विष्णो सन्तोषकारिणी॥ १६-६॥

वर्द्धिनी चापिनी पाठः।

नारसिंही च वाराहि हयग्रीवा धनुस्तथा।

वाणमुद्रा च परशुर्जगन्मोहनिका मता॥ १६-७॥

शिवस्य दशमुद्रिका।

लिंगयोनि त्रिशूलाख्या दानेष्टा भीर्मृगात्मिका।

कद्वाङ्गश्च कपालाख्या डमरूशिवतोषिता॥ १६-८॥

सूर्यस्यैकैव पद्मास्था सप्तमुद्रा गणेशितुः।

दन्तपाशांकुशा विघ्न परशूलडुसंज्ञिका॥ १६-९॥

वीजमुद्रा त्रया मुद्रा विज्ञेया शिवपूजने।

२६६ब्) पाशांकुशवराभीति खड्गचर्मधनुधरा॥ १६-१०॥

मौसुलिका तथा दौर्गी मुद्राशक्ते प्रियंकरा।

लक्ष्मी मुद्रा च मे लक्ष्मा वग्यादिन्याश्च पुजने॥ १६-११॥

अक्षमाला तथा वीणा व्याख्या पुस्तकमुद्रिका।

सप्तजिह्वा ह्वया मुद्रा विज्ञेया वह्नि पूजने॥ १६-१२॥

दशमामुद्रिका ज्ञेया त्रिपुरायाः प्रपूजने।

संक्षोभद्रावशाकर्ष वरापान् मादहा कुशा॥ १६-१३॥

खेचरी वीजयोन्याख्या त्रिखण्डाः परिकीर्त्तिता।

कुंभमुद्राभिषकेस्यात् पद्ममुद्रासने तथा॥ १६-१४॥

कामकाली प्रयोक्तव्या विघ्नप्रशमकर्मणि।

गालिनी च प्रयोक्तव्या जलशोधनकर्मणि॥ १६-१५॥

श्रीगोपालार्चनेशस्ता नृहरेर्नारसिंहिका।

वराहस्य च पूजायां वराहाख्यं प्रदर्शयेत्॥ १६-१६॥

रामार्चने धनुर्वाण मुद्रेपरशुकार्चने।

परशुरामस्य विज्ञेया जगन्मोहन संज्ञका॥ १६-१७॥

वासुदेवा ह्वयाने कुंभमुद्रा तु रक्षणे।

सर्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रयोजयेत्॥ १६-१८॥

तद् देशानुक्रमादा सा मुच्यन्ते लक्षणानि तु।

हस्ताभ्यांजलि वद्धानामिकामूलपर्वणो॥ १६-१९॥

अंगुष्ठौ निक्षिपेत् सयं मुद्रा त्वा वाह्नी स्मृता।

अधोमुखी द्वयं चैव स्थापनि मुद्रिका स्मृता (२)॥ १६-२०॥

उत्सृष्टाङ्गुष्टमुष्टोस्तु संयोगा संनिधापनी (३)।

अन्तः प्रवेशितांङ्गुष्टा सैवं संवोधिनी मता (४)॥ १६-२१॥

उत्तानमुष्टियुगला सम्मुखिकरणी मता (५)।

देवताङ्गे षडंगा न्यासः स्यात् सकली कृतिः॥ १६-२२॥

२६७अ) सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी।

अवगुण्ठनमुद्रेय महितोभ्रामिता सती (७)॥ १६-२३॥

अन्योन्याभिमुखा श्लिष्ट कनिष्टानामिका पुनः।

तथैव तर्जनी मध्या धेनुमुद्रा प्रकीर्त्तिता॥ १६-२४॥

अमृतीकरणं र्यात्तया साधकसत्तम (८)।

अन्योन्य ग्रथिङ्गुष्टा प्रसारितपराङ्गुली॥ १६-२५॥

महामुद्रेय मुदिता परमीकरणे वुधैः (९)।

प्रयोजपेद् इमा मुद्रा देवता छानकर्मणि॥ १६-२६॥

अंगन्यासस्य या मुद्रास्तासां लक्षणमुच्यते।

अंगुष्टा ऋजवो हस्ता शाखा भवेन् मुद्रा हृदये शीर्षके च (१०)॥

अधोङ्गुष्टा खलमुष्टिः शिखायाम् (२)॥

करद्वन्द्वा पुलयो ब्रह्मणिस्युः (३)॥

नारा च मुष्ट्यङ्गंतवाहुयुग्म काङ्गुष्टतर्जन्युदितो ध्वनिस्तु

विष्टाग्विषक्तः कथितास्तु मुद्राम् (४)॥

यत्राक्षिणी तर्जनिमध्यमेस्तः॥

नेत्रद्वयं यत्र भवेद् अनामा षडङ्गमुद्राः कथिता यथावत् (५)॥

वैष्णवीनां तु मुद्राणां कथ्यते लक्षणान्यथा॥ १६-२७॥

वामाङ्गुष्टं तु संगृह्य दक्षिणान तु मुष्टिना।

कृतो तानं ततो मुष्टिमंगुष्टं तु प्रसारयेत्॥ १६-२८॥

वामाङ्गुष्ट तथा श्लिष्टाः संयुक्तस्युः प्रसारितः।

दक्षिणाङ्गुष्त संस्पृस्टा मुद्रैषा शंखसंज्ञका (१)॥ १६-२९॥

हस्तौ तु सम्मुखौ कृत्वा सुतुग्नौ सुप्रसारितौ।

कनिष्टंगुलकौ लग्नौ मुदैषा चक्रसंज्ञका (२)॥ १६-३०॥

अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली।

२६७ब) तलान्तमिलिताङ्गुष्टौ कृत्वैषा पद्ममुद्रिका॥ १६-३१॥

अंगुल्यो मध्यमे भूयः संलग्ने संप्ररिसारिता।

गदा मुद्रेय मुद्दिष्टा विष्णो सन्तोषकारिणी॥ १६-३२॥

हस्तो तु सम्मुखो कृत्वा सं नतः प्रोन्नताङ्गुली।

तलान्तमिलितांगुष्टौ कृत्वैषा पद्ममुद्रिका (४)॥ १६-३३॥

उष्टे वामकराङ्गुष्टे लग्नतस्य कनिष्टिका।

दक्षिणागुष्टसंसर्ग कनिष्टा च प्रसारिता॥ १६-३४॥

तर्जनीमध्यमानामा किंचित् संकोच्य चालिता।

वेणुमुद्रा भवे चैषा प्रसुस्ता प्रेयेसी हरे (५)॥ १६-३५॥

अन्योन्यस्यष्टकरयो मध्यमानामिकांगुलि।

